**शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥**

चित्रमिति गुणालंकारयुक्तम् । अव्यङ्ग्यमिति [1]स्फुटप्रतीयमानार्थरहितम्[2] । अवरं अधमम् । यथा—

स्वच्छन्दोच्छलदच्छकच्छकुहर[3]च्छातेतराम्बुच्छटा-
मूर्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाऽह्नाय वः ।
भिद्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम-
द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥ ४ ॥

ङ्ग्यार्थरहितत्वेन काव्यानुकारित्वाद्विस्मयकारिवृत्तादियोगाद्वाऽऽलेख्यसादृश्याद्वा कलामात्रत्वादिना वेत्याह—**शब्दचित्रमिति** । अव्यङ्ग्यमित्यत्र नञ्शब्दस्येषदर्थत्वेन ईषत् अस्फुटतमं व्यङ्ग्यं यत्र तत्तथा न तु सर्वथा निर्व्यङ्ग्यम्, यतः स नास्ति कश्चिद्विषयो यत्रान्ततो विभावादिरूपतया रसपर्यवसायिता नास्तीत्युत्तरत्र वक्ष्यमाणत्वादिति । **स्फुटप्रतीयमानेति** । अत्र स्फुटं प्रतीयमानार्थेन रहितमिति विग्रहः, न तु स्फुटेन प्रतीयमानेन रहितं इति । एवं कृते ह्यस्फुटव्यङ्ग्ययुक्तत्वप्रसङ्गः । ततोऽस्फुटनामा मध्यमकाव्यभेदस्स्यात् । अतिस्फुटत्वे त्वगूढाख्यो मध्यमकाव्यभेदः । तदिदमत्र तत्वं—यदस्फुटनामव्यङ्ग्यसद्भावेऽप्यव्यङ्ग्यमेव काव्यं भाण्यं, यतस्तन्नास्ति किमपि काव्यं, यत्रान्ततो विभावादिरूपतया रसपर्यवसायित्वं नास्तीति षष्ठोल्लासे भणिष्यमाणत्वात् ॥

**स्वच्छन्देति** । छातं कृशम् । मूर्छन् अपगच्छन् मोहः अज्ञानं येषां ते तथा । यदि वा मूर्छन् बहूभवन् ब्रुडनिकावशात् मोहः श्वासनिरोधात्मको येषाम् ॥

[1] स्फुटप्रतीयमानव्यङ्ग्यार्थ. [2] रहितम् । यथा — [3] च्छातेतराम्भश्छटा.

वाच्यचित्रं यथा—

विनिर्गतं मानदमात्ममन्दिरात्
भवत्युपश्रुत्य यदृच्छयाऽपि यम् ।
ससम्भ्रमेन्द्रद्रुतपातितार्गला
निमीलिताक्षीव भियाऽमरावती ॥ ५ ॥

इति श्रीकाव्यप्रकाशे काव्यस्य प्रयोजनकारणस्वरूप-
विशेषनिर्णयो नाम प्रथम उल्लासः.

---

विनिर्गतमिति । अमरावती भवतीत्यन्वयः । तथा द्रुतपातित-क्रियापेक्षया उपश्रुत्येत्यत्र पूर्वकालता । अर्गलाशब्दः सामीप्यलक्षणया कवाटवृत्तिः । अभिधया वा पिधायकत्वमात्राभिधायी ॥

सच्छब्दार्थशरीरस्य काऽलंकारव्यवस्थितिः ।
यावत्कल्याणमाणिक्यप्रबन्धो न निरीक्ष्यते ॥

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते
काव्यप्रकाशप्रथमोल्लाससङ्केतः.

## अथ द्वितीयोल्लासः

क्रमेण शब्दार्थयोस्स्वरूपमाह—

**स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।**

अत्रेति काव्ये । एषां स्वरूपं वक्ष्यते ।

**वाच्यादयस्तदर्थाः स्युः**

वाच्यलक्ष्यव्यङ्ग्याः ।

**तात्पर्यार्थोऽपि केषुचित् ॥ ६ ॥**

आकाङ्क्षासन्निधियोग्यतावशाद्वक्ष्यमाणस्वरूपाणां [1] पदार्थानां परस्परसमन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वा-

---

### अथ द्वितीयोल्लासः.

विषयभेदाच्छब्दभेदो न स्वाभाविक इत्याह—**वाच्यादय** इति । **तात्पर्यार्थोऽपि केष्विति** । केष्विति अभिहितान्वयवादिषु भट्टेषु । वक्ष्यमाणस्वरूपाणामिति । जात्यादिर्जातिरेव वेत्यत्र । बोद्धुः सम्बन्धिषु जिज्ञासा **आकाङ्क्षा** । आकाङ्क्षितस्यानन्तर्यं **सन्निधिः** । **योग्यता** सम्बन्धार्हत्वम् । अभिधानंतरमन्वयप्रतिपत्तिनिमित्तं तात्पर्यशक्तिरप्यस्ति । ततस्तद्विषयस्तात्पर्यलक्षणोऽर्थोपि समस्ति । तौ वाक्यविषयावेवेत्याह—**अपदार्थोऽपीति** । आकाङ्क्षादिवशादन्योन्यमन्विताः पदार्थास्तात्पर्यान्यनामधेयं वाक्यार्थं प्रतिपादयन्ति ।

---

[1] पदार्थानां समन्वये इति पाठान्तरम्.

क्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम्। वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः ॥

**सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते।**

तत्र वाच्यस्य यथा—

**माए घरोवअरणं अज्ज हु णत्थित्ति साहिअं तुमए।**
**ता भण किं करणिज्जं एमेअ ण वासरो ठाइ ॥ ६ ॥**

छाया—मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया।
तद्भण किं करणीयं एवमेव न वासरः स्थायी ॥

अत्र स्वैरविहारार्थिनीति व्यज्यते।

---

प्राक् सामान्यार्थप्रतीतिः ततोऽन्वये सति पदार्थेभ्यो विशिष्टार्थप्रतीतिः। यदुक्तं 'पदानि स्वंस्वमर्थमुक्त्वा निवृत्तव्यापाराण्यथेदानीमर्थोऽवगतोऽर्थान्तरं बोधयति' इति। प्राभाकरपक्षे त्वाकाङ्क्षादिवशान्मिथः सामान्यतयाऽन्वितानि पदान्येव प्रधानगुणत्वेन मिथोऽनुगतपदसमूहरूपं विशेषरूपतया वाक्यार्थं वदन्तीति वाच्य एव वाक्यार्थः, पदान्येव वाक्यम्, पदार्थएव तदर्थः, न तु पदार्थेभ्यो वाक्यार्थः ॥

**सर्वेषां प्रायश इति।** न केवलं प्रत्येयत्वं व्यञ्जकत्वमपीत्यपिशब्दार्थः। वक्तृबोद्धव्यादिवैशिष्ट्यादर्थानां व्यञ्जकत्वम्।

तत्र वक्तृवैशिष्ट्याद्यथा—**माए घरोवअरणमिति।** अत्र तस्या असाध्वीत्वेऽवगते व्यङ्ग्यप्रतीतिः।

लक्ष्यस्य यथा—

साहेन्ती सहि सुहअं खणेखणे दुम्मिआसि मज्झकए ।
सब्भावणेहकरणिज्जसरिसअं दाव विरइअं तुमए ॥ ७॥

( छाया—साधयन्ती सखि सुभगं क्षणेक्षणे दूनाऽसि मत्कृते ।
सद्भावस्नेहकरणीयसदृशं तावद्विरचितं त्वया ॥ )

अत्र [1] मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम् । तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम् ।

व्यङ्ग्यस्य यथा—

उअ णिच्चलणिप्पंदा भिसिणीपत्तम्मि रेहइ बलाआ ।
णिम्मलमरगअभाअणपरिट्ठिआ सङ्खसुत्तिव्व ॥ ८ ॥

( छाया—पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका ।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥ )

अत्र निष्पन्दत्वेनाश्वस्तत्वं, तेन च जनरहितत्वं, अतः

---

बोद्धव्यविशेषाद्यथा—साहेन्तीति । साधयन्ती कथयन्ती प्रतिपादयन्ती वा । अत्र विपरीतलक्षणया वाक्यस्य शत्रुत्वं लक्ष्योऽर्थः । तन्मूलं सापराधत्वप्रकाशनं व्यङ्ग्यम् । तेनाप्यधमेन किं कार्यमित्यर्थः । प्रयोजनं त्वत्यन्तानुपकारित्वादि लाक्षणिकवाक्यमूलमिति नार्थप्रकाश्यम् ।

निश्चला इति बहिरङ्गव्यापारस्य निवृत्तिः, निस्पन्दा इत्यन्तरङ्गस्य । 'भिसिणीपत्तम्मि रेहइ बलाआ' इति वचनात् विपरीतरतादिकं व्यङ्ग्यं स्वयमूह्यम् । एतत्तृतीयोल्लासे वक्ष्यते ।

---

[1] मम प्रियं.

सङ्केतस्थानमेतदिति कयाचित्कञ्चित्प्रत्युच्यते। अथवा मिथ्या [1]वदसि न त्वमत्रागतोऽभूरिति व्यज्यते।

वाचकादीनां क्रमेण स्वरूपमाह—

**साक्षात्सङ्केतितं योऽर्थमभिधत्ते स वाचकः ॥७॥**

इहागृहीतसंकेतस्य [2]शब्दस्यार्थप्रतीतेरभावात्संकेतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन सङ्केतो गृह्यते स तस्य वाचकः ॥

**संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा।**

यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव, तथाऽप्यानन्त्यात् [3]व्यभिचाराच्च तत्र संकेतः कर्तुं [4]न शक्यत इति 'गौः शुक्लः चलः डित्थः' इत्यादीनां शब्दानां विषयविभागो न [5]प्राप्नोतीति च तदुपाधावेव संकेतः।

---

यस्येति। शब्दस्य। यत्रेति। जात्यादौ॥

आनन्त्यादिति। यद्येकस्मिन् गोपिण्डे सङ्केतः क्रियते तदा अन्येषु कर्तुं न शक्यते। व्यभिचाराच्चेति। यो हि पिण्डः संकेतविषयः क्रियते स व्यवहारकाले व्यभिचरति बाल्यादिभेदात्। गौश्शुक्ल इति। गोत्वशुक्लत्वचलत्वविशिष्ट एव गोपिण्डे सङ्केताद्गौः शुक्लश्चल इत्यादीनां विषयो नास्ति, ज्ञातार्थानामप्रयोज्यत्वात्। तदुपाधाविति। व्यक्तिविशेषणे।

---

[1] वदसि त्वं तत्र नागतो. [2] शब्दादर्थविशेषप्रतिपत्तेरभावात्.
[3] व्यभिचारात्तत्र. [4] न युज्यते. [5] प्राप्नोतीति तदुपाधावेव.

[1]उपाधिश्च द्विविधः—वस्तुधर्मो वक्तृयदृच्छासन्निवेशितश्च । [2]वस्तुधर्मोऽपि द्विविधः—सिद्धः साध्यश्च । [3]सिद्धोऽपि द्विविधः—पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च । [4]तत्राद्यो जातिः । उक्तं हि वाक्यपदीये—'न [5]हि गौः स्वरूपेण गौः नाप्यगौः गोत्वाभिसंबन्धात्तु गौः' इति । द्वितीयो गुणः । शुक्लादिना [5]हि लब्धसत्ताकं वस्तु [6]विशिष्यते । साध्यः पूर्वापरीभूतावयवः [7]क्रियारूपः । डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं [8]वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन संनिवेश्यत इति [9]सोऽयं संज्ञारूपो [10]यदृच्छात्मक इति ।

---

पदार्थस्य प्राणप्रद इति । न हि कश्चित्पदार्थो जातिसम्बन्धमन्तरेण स्वरूपं लभते । द्वितीय इति । लब्धस्वरूपवस्तुनः पटादेः पश्चात्सम्बध्यविशेषाधानहेतुः । यदि हि पटादिना गुणः सहभावीष्यते तदा पटादौ रूपादय इति प्रतीतिर्न संगच्छेत । न हि शुक्लादेर्गुणस्य पटादिस्वरूपप्रतिलम्भहेतुत्वम् । जातिमहिम्नैव पटादेः प्रतिलब्धस्वरूपत्वात् । तदेवं यस्य प्राणप्रदोपाधिनिबन्धनत्वं स जातिशब्दो गवादिः । यस्मात्तु लब्धस्वरूपस्य वस्तुनो विशेषाधानहेतुरर्थः प्रतीयते स गुणशब्दः । साध्यः पूर्वापरीभूतेति । पूर्वापरीभूतौ तुषबुसादिप्रक्षेपपक्लेदादिरूपौ अवयवौ यस्याः क्रियायाः तद्रूपः । अन्त्यबुद्धिनिर्ग्राह्यमिति । न खलु डिशब्दोच्चारे त्थशब्दः

---

[1] उपाधिश्च वस्तु. [2] वस्तुधर्मोऽपि सिद्धः. [3] सिद्धोऽपि पदार्थस्य. [4] तत्रेति क्वचिन्न दृश्यते. [5] हि. इति क्वचिन्न दृश्यते. [6] विशेष्यते. [7] क्वचित्समस्तपाठः. [8] वक्ता इति क्वचिन्नास्ति. [9] स संज्ञारूपो. [10] यदृच्छात्मक उपाधिरिति.

**"[1]गौश्शुक्लश्चलो डित्थः इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः' इति महाभाष्यकारः। [2]परमाण्वादीनां तु गुणमध्यपाठात्पारिभाषिकं गुणत्वम्।**

---

त्थशब्दोच्चारे वा डिशब्दः। अत एव संहृतक्रमं स्वरूपम्। तत्खलु तांतां अभिधाशक्तिमभिव्यञ्जयता वक्त्रा यदृच्छयोपाधितया संज्ञिनि तस्मिंस्तस्मिन्निवेश्यते। तस्माच्छब्दप्रवृत्तिनिमित्तानां चतुष्ट्वान्मुख्यः शब्दार्थश्चतुर्विधः। ननु विशेषाधानहेतुर्गुणः शुक्लादिरिति पूर्वमुक्तम्। ततश्च परमाणुत्वादयो गुणाः परमाण्वादिद्रव्याणां न विशेषाधानहेतवः, नित्यत्वात्। अनित्यानां हि विशेषाधानहेतुत्वम्। पूर्वापरकालविषयो हि विशेष्यविशेषकभावः। तत्कथं तेषां गुणत्वमित्याह—**परमाणुत्वादीनां गुणमध्यपाठादिति**। 'अणु महद्दीर्घं ह्रस्वं च' इति कणादवचनात्। अन्यथा जातिशब्दत्वं स्यात्। न खलु स्वयं परमाणुः नाप्यपरमाणुः परमाणुत्वयोगात् परमाणुरिति।

ननु परमाणुषु परमाणुत्वं कस्मान्नेष्यते। उच्यते—पार्थिवपरमाणौ पृथ्वीत्वपरमाणुत्वयोः परापरव्यवस्थाया अभावात्। यदि पृथ्वीत्वमपरं तदा घटेऽपि परमाणुत्वप्रसङ्गः। अपरसद्भावे परस्य सद्भावप्रतिपादनात्। अथ परमाणुत्वमपरं, तदा तेजःपरमाणुष्वपि पृथ्वीत्वप्रसङ्गः। तस्मान्न जातिशब्दत्वम्। परमाणुत्वादीत्यत्रादिशब्दाद्येषां प्रागुक्तगुणलक्षणाभावोऽथ च गुणत्वेनेष्टास्ते पारिमा-

---

[1] गौश्शुक्लश्चलति डित्थः. [2] 'परमाणुत्वादीनां' इति संकेतटीकासंमतः पाठः.

**गुणक्रियायदृच्छानां वस्तुत एकरूपाणामप्याश्रयभेदाद्भेद इव लक्ष्यते,** [1] **यथैकस्य मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदात् ।**

ण्डल्यादयो ग्राह्याः । परिमण्डलाः परमाणवः तेषां भावः पारिमाण्डल्यम् । 'अनुशातिकादीनाम्' इत्युभयपदवृद्धिः । तच्च वर्तुलत्वं इति न्यायकुमुदचन्द्रे प्रभाचन्द्रो व्याख्यातवान् । अपरे तु पारिमाण्डल्यं परमाणुपरिमाणमाहुः । पारिमाण्डल्यादीत्यत्रादिशब्दात् आकाशादीनां परिमाणादयो ग्राह्याः ।

ननु गुणक्रियायदृच्छाशब्दानामानन्त्यात्कथं तेषु सङ्केतः । यतः प्रत्येकं सङ्केतः कर्तुं न शक्यते जातिं विनेत्याशङ्क्याह— **गुणक्रियायदृच्छेति** । गुणक्रियायदृच्छादीनां परमार्थत एकत्वमेव । यदुक्तम्—

कर्मैकं जातिरप्येका जगत्येकः स्थितो गुणः ।

इति । यस्तु भेदः प्रतीयते स आश्रयभेदान्न वस्तुतः, अत आह— **आश्रयभेदाद्भेद इव लक्ष्यत इति** । न तु भेद एव । शुक्लादीनामाश्रया भिन्नाः शङ्खाद्याः, पाकादीनां तण्डुलाद्याः, यदृच्छानां च शुकाद्युक्ता भिन्ना ध्वनयो बालाद्यवस्था वा । दृष्टान्तद्वारेण द्रढयति—**यथैकस्य मुखस्येति** । यथा हि मुकुरतैलकृपाणादीनां प्रतिबिम्बनिबन्धनानां भेदादेकमेव मुखं नानाकारमवभासते तथैव शुक्लादिर्व्यक्तिरेकैव शङ्खाद्याश्रयवशेन नानात्वेन स्फुरति । तस्माद्गुणादेरेकत्वाज्जात्यभावे गुणादिशब्दानां गुणादौ सङ्केत इति महाभाष्यकारमतम् ।

[1] यथैकस्यापि मुखस्य.

**[1] हिमपयश्शङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्लः [2] इत्याद्यभिन्नाभिधानप्रत्ययोत्पत्तिः तच्छु‍क्लत्वादि सामान्यम्। [3] गुडतण्डुलादिपाकादिष्वेवमेव [4] पाकत्वादि। बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु [5] डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमित्यन्ये ।**

---

अन्ये तु गुणक्रियायदृच्छादीनां वस्तुत एव भेदो नाश्रयभेदादिति मन्यमानाः सर्वत्र जातेरेव प्रवृत्तिनिबन्धनत्वं मन्वत इति तन्मतं व्याकुर्वन्नाह—**हिमपयश्शङ्खादीति। अभिधानं** शब्दः। **प्रत्ययो** ज्ञानम्। **पाकादिष्विति।** क्रियाशब्देष्वपि गुडतण्डुलादिद्रव्याश्रिता ये पाकादयोऽन्योन्यमन्यत्वेन स्थिताः क्रियाविशेषाः तत्समवेतं सामान्यमस्ति। यद्वशेनायं पाकः पाक इति अभिन्नाभिधानप्रत्ययौ स्याताम्। **डित्थादिशब्देष्विति।** यदृच्छाशब्देषु शुकसारिकाद्युदीरितेषु भिन्नेषु डित्थशब्दत्वादिकं सामान्यमेव यथायोगं संज्ञिष्वध्यस्तमभिधेयम्। यद्वा उपचयापचययोगितया डित्थादौ संज्ञिनि प्रतिक्षणं भिद्यमानेऽप्यभिद्यमानो यन्महिम्ना डित्थो डित्थ इत्येवमादिरूपत्वेनाभिन्नाकारः प्रत्ययस्स्यात् तत्तथाभूतं डित्थादिशब्दावसेयवस्तुसमवेतमेव डित्थत्वादि सामान्यं, तच्च डित्थादिशब्दैरभिधीयत इति गुणक्रियायदृच्छाशब्दानामपि जातिरेवैकः शब्दार्थ इति ।

---

[1] हिमपयश्शङ्खादिषु. [2] इत्याद्यनुगताभिन्न. [3] गुडतण्डुलपाकादि. [4] पाकादित्वम्. [5] डित्थाद्यर्थे वा डित्थादित्वमस्तीति.

तद्वानपोहो वा शब्दार्थः कैश्चिदुक्त इति ग्रन्थगौरवभयात्प्रकृतानुपयोगाच्च न [1]दर्शितम् ॥

**स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥ ८ ॥**

स इति साक्षात्संकेतितः । अस्येति शब्दस्य ॥

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।**

---

**तद्वानिति** । जातेरर्थक्रियाकारित्वाभावाद्विफलस्संकेतः, व्यक्तेस्त्वर्थक्रियाकारित्वेऽप्यानन्त्यव्यभिचाराभ्यां न सङ्केतः कर्तुं शक्यते इति जातिमती व्यक्तिः शब्दार्थ इति वैशेषिकादयः । **अपोह इति** । जातिव्यक्तितद्योगजातिमद्बुद्ध्याकाराणां शब्दार्थत्वस्यानुपपद्यमानत्वात् गवादिशब्दानामगोव्यावृत्त्यादिरूपोऽपोहः शब्दार्थ इति बौद्धाः ।

शब्दस्य मुख्येन लाक्षणिकेन व्यञ्जनात्मकेन व्यापारेणार्थावगतिहेतुत्वमिति मुख्यं तावदर्थमाह—**स मुख्योऽर्थ इति** । **सः** साक्षात्संकेतितः । मुखमिव हस्ताद्यवयवेभ्योऽर्थान्तरेभ्यः प्रागज्ञायमानत्वात् मुख्यार्थविषयः शब्दोऽपि मुख्यः । **तत्रेति** । अर्थविषये । समयापेक्षा वाच्यावगमनशक्तिरभिधाशक्तिः ॥

अथेदानीं लाक्षणिकस्य लक्ष्यार्थदर्शनद्वारेण व्यापारमाह—**मुख्यार्थेति** । मुख्यस्यार्थस्य अनुपपत्तेरनुपयोगाच्च प्रत्यक्षादिप्रमाणेन बाधे, तेन मुख्येनार्थेन सह लक्ष्यार्थस्य योगे सम्बन्धे साद-

---

[1] दर्शितः.

**अन्योर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया ॥ ९ ॥**

'कर्मणि कुशलः' इत्यादौ [1] दर्भग्रहणाद्ययोगात् 'गङ्गायां घोषः' इत्यादौ च गङ्गादीनां घोषाद्याधारत्वासंभवात् [2] मुख्यार्थस्य बाधे, विवेचकत्वादौ सामीप्ये च संबन्धे, रूढितः प्रसिद्धेः,

श्यादौ सति, रूढेः प्रयोजनाद्वाऽतिपावित्र्यशैत्यादेरशब्दान्तरवाच्यात्ताद्रूप्यप्रतीत्यादिरूपादन्योऽर्थो यल्लक्ष्यते सा स्यादमुख्यः शब्दव्यापारो लक्ष्यार्थनिष्ठो लक्षणाशक्तिः। यदिति वाक्यार्थनिर्देशः। सेति विधीयमाना लक्षणा। सर्वनामपदं हि कदाचिदनूद्यमानालिङ्गमादत्ते कदाचिद्विधीयमानलिङ्गमिति।

उदाहरणद्वारेण व्याकरोति—कर्मणीति। कुशान् लातीति दर्भग्रहणायोगान्मुख्यार्थबाधे विवेचकत्वादौ सम्बन्धे रूढेः प्रवीणोऽर्थो लक्षणाव्यापारेण लक्ष्यते। आदिशब्दाद्विरेफद्विकानुलोम्यलावण्यादयः। द्विरेफशब्देन हि रेफद्वितययोगिभ्रमरशब्दलक्षणार्थलक्षणाद्वारेण रूढ्यनुवृत्तिरेव षट्पदादौ क्रियते—

* तुरङ्गकान्ताननहव्यवाहज्वालेव भित्त्वा जलमुल्ललास।

इत्यादौ तु तुरङ्गकान्ताननहव्यवाहशब्दो बडबामुखाग्नौ लक्षणयाप्रयुक्तः, न च तत्र रूढः, व्यवहारेऽनभ्यनुज्ञातत्वादिति दुष्टत्वम्। सति तु गुप्तार्थप्रतिपादनादिप्रयोजने एवंविधलक्षणा अप्यदुष्टाः।

[1] दर्भग्रहणायोगात्. [2] मुख्यार्थबाधे.

* 'मध्येसमुद्रं ककुभः पिशङ्गीर्या कुर्वती काञ्चनभूमि(वप्र)भासा' इति पूर्वार्धम्। माघकाव्यम्—२–२२.

**तथा गङ्गातटे घोष इत्यादेः प्रयोगाद्येषां न तथा प्रतिपत्ति-स्तेषां पावनत्वादीनां धर्माणां तथाप्रतिपादनात्मनः प्रयोजनाच्च [1]मुख्येनामुख्योऽर्थो लक्ष्यते यत्स आरोपितः शब्द-व्यापारः सान्तरार्थनिष्ठो लक्षणा ॥**

---

यद्भट्टकुमारिलः—

निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।

क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः ॥

निरूढा इति । भ्रष्टोपचारप्रतीतयः । लक्षणा इति । लक्षणाशब्दाः । अभिधानवत्, वृक्षादिनामवत् । **तथा गङ्गेति** । गङ्गातटे घोष इत्युक्तेऽपरिमितपावित्र्यादीनां न प्रतिपत्तिः । **तथेति** । अपरिमितत्वेन । अन्योऽर्थो लक्ष्यस्तटादिः । **सान्तरार्थेति** । सव्यवधानस्तटादिलक्षणोऽर्थस्तदाश्रया क्रिया शब्दव्यापारो लक्षणा । तथाहि—गङ्गाशब्दाभिधेयस्य स्रोतसो घोषाधारतानुपपत्तेः मुख्यार्थबाधे योऽयं समीपसमीपिभावात्मा सम्बन्धः तदाश्रयेण तटं लक्षयति । लक्षणायाश्च प्रयोजनं तटस्य गङ्गात्वैकार्थसमवेतपुण्यत्वमनोरमत्वशैत्यादिप्रतिपादनं व्यङ्ग्यम् । न हि तत्पुण्यत्वादि शब्दान्तरैः स्पष्टं शक्यते । तद्योगश्च मुख्यार्थासन्नत्वम् । तत्पञ्चधोक्तं भर्तृमित्रेण—

अभिधेयेन सम्बन्धात् सादृश्यात्समवायतः ।

---

[1] मुख्येनामुख्यो लक्ष्यते. 'मुख्येनान्योऽर्थः' इति संकेतटीकासम्मतः पाठः,

वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता ॥

सम्बन्धाद्यथा—गङ्गायां घोषः। सादृश्याद्यथा—गौर्वाहीकः। गौरेवायमित्यादौ मुख्यस्यार्थस्य सास्नादिमत्त्वादेः प्रत्यक्षादिप्रमाणेन बाधेऽभिधेयेन सादृश्यात्तद्गतजाड्यमान्द्यादिगुणसदृशजाड्यमान्द्यादिगुणयुक्तो वाहीको लक्ष्यते। प्रयोजनं ताद्रूप्यप्रतिपत्त्यादि। एते च सारोपसाध्यवसानलक्षणगौणलक्षणाया उदाहरणे। समवायः साहचर्यं, यथा—कुन्ताः प्रविशन्तीत्यादौ। कुन्तादीनां प्रवेशानुपपत्त्या मुख्यार्थबाधे साहचर्यात्पुरुषा लक्ष्यन्ते। प्रयोजनं च रौद्रत्वादीनां सातिशयानां प्रतिपादनम्। वैपरीत्यात्—भद्रमुखः। अत्र भद्रमुखशब्दस्याभद्रमुखे प्रयोगात्स्वार्थबाधः। अतोऽसौ स्ववाच्यभूतभद्रमुखत्ववैपरीत्यादभद्रमुखत्वं लक्षणयाऽवगमयति। प्रयोजनं तु गुप्तासभ्यार्थप्रतीतिः। किंच यत्र वाक्यार्थः प्रथमं घटितस्सन् वक्त्रादिवैशद्यादन्यमर्थं प्रत्याययति स त्वन्योऽर्थो मुख्यमर्थं मिथ्यात्वेन गमयति, न तु बाधते। तत्र मुख्यार्थबाधाभावान्न लक्षणा। यथा—अत्ता इत्थेति। यत्र तु मुख्योऽर्थो वक्त्रादिवशादन्वयमगच्छन् वैपरीत्याद्बाध्यते तत्र मुख्यार्थबाधः। यथा—'साहेंती साहि सुहयम्' इत्यत्र। क्रियायोगाद्यथा—महति समरे शत्रुघ्नस्त्वमिति। अत्राशत्रुघ्ने शत्रुघ्नप्रयोगात्स्वार्थबाधः। शत्रुघ्नशब्दश्चाशत्रुघ्ने हननक्रियाकर्तृत्वयोगाल्लक्षणया प्रयुक्तः। प्रयोजनं च वर्ण्यमानशत्रुघ्नशब्दाभिधेयनृपताप्रतिपादनम्।

**स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।**
**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥**

'कुन्ताः प्रविशन्ति' '[1]यष्टयः प्रविशन्ति' इत्यादौ कुन्तादिभिः [2]आत्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते। तत उपादानेनेयं लक्षणा ।

'गौरनुबन्ध्यः' इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते, न तु शब्देनोच्यते । 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' [3]इति न्यायात्, [4]इत्युपादानलक्षणा तु नोदाहर्तव्या । न ह्यत्र प्रयोजन-

---

एवं निरन्तरार्थनिष्ठः शब्दव्यापारोऽभिधा । सान्तरार्थनिष्ठस्तु लक्षणा । तेन अभिधैव मुख्यार्थे बाधिता सती अचरितार्थत्वादन्यत्र प्रसरति। तत्पुच्छभूतैव लक्षणा । सा च लक्षणा द्विधा—शुद्धा उपचारमिश्रा च। तत्र शुद्धाऽपि द्विधेत्याह—**स्वसिद्धय इति** ध्येयम्। प्रयोजनतो या लक्षणा तस्या एतौ भेदौ । रूढितस्तु या लक्षणा सा लोके प्राचुर्यं गतेति न लक्ष्यस्यानैयत्यं, अभिधाव्यापारतुल्यैवासाविति भावः ॥

**कुन्तादिभिरिति** । स्वार्थमत्यजद्भिरिति ज्ञेयम् । **अनुबन्ध्यः** हन्तव्यः । **विशेषण इति** । जातिलक्षणे उपाधौ । **उपादानलक्षणा तु न वाच्येति** ॥ यथाऽन्यैर्मुकलादिभिरुक्ता । न च क्रमेण द्व-

---

[1] यष्टयः प्रविशन्तीति क्वचिन्न दृश्यते. [2] आत्मप्रवेशनार्थं पुरुषा.
[3] इति न्यायादिति क्वचिन्न दृश्यते. [4] इत्युपादानलक्षणा तु न वाच्येति सङ्केतटीकासम्मतः पाठः

मस्ति । न वा रूढिरियम् । व्यक्त्यविनाभावित्वात्तु जाया व्यक्तिराक्षिप्यते । यथा—क्रियतामित्यत्र कर्ता, कुर्वित्यत्र कर्म, प्रविश पिण्डीमित्यादौ गृहं भक्षयेत्यादि [1]च । 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र [1]च रात्रिभोजनं न लक्ष्यते । [2]श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात् ।

'गङ्गायां घोषः' इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थमर्पयतीत्येवमादौ लक्षणेनैषा लक्षणा । उभयरूपा

---

योर्वाच्यता, विरम्यव्यापारद्वयाभावात् । शब्दबुद्धिकर्माणि हि विरम्यव्यापारं न कुर्वन्तीत्यर्थः । **पीनो देवदत्त इति ।** अत्रापि नोपादानलक्षणा । यथाऽन्यै रसायनाद्यभावे पीनत्वलक्षणकार्येण रात्रिभोजनात्मककारणस्य स्वसिद्धये समाक्षेपादुक्ता । **श्रुतार्थापत्तेरिति ।** **दृष्टः** श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यर्थकल्पनमर्थापत्तिः। एतत्प्रभाकरो व्याख्याति— **दृष्टश्श्रुत** इति । लोकप्रसिद्ध्या उपलम्भमात्रे वर्तते, अन्यथा नोपपद्यते अर्थापत्तिव्यवस्थाप्यमर्थं विना न घटत इति याऽर्थस्य कल्पना साऽर्थापत्तिः ॥ श्रुताच्छब्दात् अर्थस्यार्थप्रतिपत्तिव्यवस्थाप्यस्य आपतनं, तेन श्रुतार्थापत्तौ रात्रौ भुङ्क्त इति शब्दः कल्पते, अर्थात् अर्थस्यापतनं अर्थापत्तिः, अर्थापत्तौ तु रात्रिभोजनमर्थ एवेति अभिधैव स्वात्मनिर्वाहाय शब्दान्तरमर्थान्तरं वाऽऽकर्षयतीति मीमांसकाः । **लक्षणेनैषा लक्षणेति ।** अयमभिप्रायः—यत्र शब्दः सर्वथा स्वमर्थं त्यजन् अन्यं लक्षयति, तत्र लक्षणेन

---

[1] च इति क्वचिन्न दृश्यते. [2] श्रुतार्थापत्तेर्दृष्टार्थापत्तेर्वा.

**चेयं शुद्धा, [1]उपचारेणामिश्रितत्वात् । अनयोर्भेदयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम् । तटादीनां गङ्गादिशब्दैः [2]प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः । गङ्गासम्बन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः ॥**

---

तटादिज्ञापनेन लक्षणा । यत्र तु स्वार्थमपि वदन् अन्यमुपादत्ते तत्रोपादानेनेति । **उपचारेणेति** । यथा 'गौर्वाहीकः' इत्यत्र वस्त्वन्तरे वस्त्वन्तरमुपचर्यते तथा तत्रेति भावः । अत्र स्वभेदप्रतिपत्तिपूर्वमेवाभेदः, तत्र भेदपूर्वम् । एतदेव द्रढयति—**अनयोरिति** । तटादीनां लक्ष्याणां प्रतिपादने भेदात्मकं न ताटस्थ्यं, किन्तु कुन्तपुरुषयोः गङ्गातटयोश्चाभेद एवेति । यदन्यैस्ताटस्थ्ये लक्षणा शुद्धेत्युक्तं तद्दूषितमित्याह—**तत्त्वप्रतिपत्तौ हीति** । भेदे तु गङ्गासम्बन्धमात्रप्रतीतेर्न लक्षणाविशेषः । नन्वत्र कुन्ता एव प्रविशन्ति नान्ये, गङ्गायामेव घोषो नान्यत्रेति विवक्षायां कुन्तगङ्गानिगीर्णतया कुन्तवत्तटयोः प्रतीतौ साध्यवसानलक्षणयैव तत्त्वप्रतीतिप्रयोजनादिसाध्यसिद्धेः किं लक्षणान्तरकल्पनया । यदाह—*'सहचरणस्थानतादर्थ्यवृत्तमानधरणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तद्वदुपचारः' इति।

---

[1] उपचारेणामिश्रत्वात्. [2] प्रतिपादनेन तत्व.

* सहचरणाद्यथा—बहुब्राह्मणसहचरणात् शूद्रोऽपि ब्राह्मणः । स्थानात्—मञ्चाः क्रोशन्ति । तदार्थ्यात्—कटार्थानि तृणानि कटः । वृत्तात्—राजवद्वस्त्रालंकारादिभिः सामान्यपुमानपि राजा । मानात् आढकपरिमितं सक्तुमाढकमश्नाति। धरणात्—तुलाधृतं चन्दनं तुला । सामीप्यात्—गङ्गायां घोषः । योगात्—

**सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा।**

आरोप्यमाण आरोपविषयश्च यत्रानपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणा सारोपा ॥

**विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका ॥ ११ ॥**

---

मुकुलस्याप्यदोऽनुमतम् । अत्रोच्यते—यत्रारोप्यारोपषविषयभावतयाऽत्यन्तासन्नत्वेन भेदे सत्यभेदः, तत्र साध्यवसानता । अत्र त्वारोप्यारोपविषयभावं विना मूलत एवाभेदप्रतीतिः, पूर्वत्र पूर्वं भेदप्रतीतिः पश्चादभेदप्रतिपत्तिः । इदमत्र तत्वं—अनयोरुदाहरणयोरारोप्यारोपविषयभावं प्रति चित्तमेव न धावतीत्यत्र सचेतसः प्रमाणम् ॥

शुद्धां द्विधोक्त्वा उपचारमिश्रां सारोपामाह—**सारोपाऽन्येति**। विषयी गवादिः, विषयो वाहीकादिः । **अनपह्नुतभेदाविति** । अनपह्नुतस्वरूप एव वस्तुनि वस्त्वन्तरस्याधिकस्यारोप्यमाणत्वात् । सामानाधिकरण्यं भिन्नार्थयोरेकत्रार्थे वृत्तिः, नीलोत्पलवत् । सादृश्यहेतुका चैषा उपमानोपमेयभावस्य विद्यमानत्वात् रूपकालंकृतेर्बीजम् । यत्र त्वारोप्येण गवादिना निगीर्णतयाऽऽरोपविषयस्य वाहीकादेः प्रतीतिः तत्र साध्यसाना । इयमतिशयोक्तेर्बीजम् । **यथा—** * 'अनासमाख्यं करणं मदस्य' इत्यत्र मदयोर्भिन्नत्वेऽपि अभेदः ।

---

शाटकपरिधानात्पुरुषोऽपि शाटकः । साधनात्—मेघोऽन्नं वर्षति । आधिपत्यात्—पुरुषवदाधिपत्यं कुर्वाणा प्रमदाऽपि पुरुषः ॥

* असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ ( साधु ) वयः प्रपेदे ॥
कुमारसंभव १–१–३१.

विषयिणाऽऽरोप्यमाणेनान्तःकृते निगीर्णे अन्यस्मिन्नारोपविषये सति सा [1] साध्यवसाना स्यात् ॥

**भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा।**
**गौणौ शुद्धौ च विज्ञेयौ,**

[2] इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ गौर्वाहीक इत्यत्र गौरयमित्यत्र च ॥

---

ननु पूर्वस्यामपि अभेदोऽस्ति रूपकस्याभेदात्मत्वात् । सत्यम्, तत्रासन्नतामात्रेणाभेदः, इह त्वत्यासन्नतयेति । कार्यकारणभावादिलक्षणायां तु न रूपकादिविषयता, सादृश्याभावात् । यथा—

आयुर्घृतं यशस्त्यागो भयं चोरः सुखं प्रिया ।
वैरं द्यूतं गुरुर्ज्ञानं श्रेयः सत्तीर्थसेवनम् † ॥

तथा अप्रस्तुतप्रशंसाप्रकारस्य कस्यचिदन्यापदेशलक्षणस्य साध्यवसानलक्षणात्वं यथा—

अनर्घ्यः कोऽप्यन्तस्तव हरिण हेवाकमहिमा
स्फुरत्येकस्यैव त्रिभुवनचमत्कारजनकः ।

इत्यत्र हरिणेनेह सह प्रतीयमानस्याभेदः ॥

सारोपसाध्यवसानयोश्च गौणशुद्धभेदाभ्यां द्वैविध्यमित्याह - **भेदाविमाविति** । यत्रोपमानगतगुणतुल्यगुणयोगलक्षणं पुरस्सरीकृत्योपमेये उपमानशब्द आरोप्यते तौ गौणौ गुणेभ्य आगतत्वाद्गौणशब्दवाच्यौ ।

---

[1] साध्यवसानिका स्यात् . [2] इमौ सारोपसाध्यवसान.

† श्रेयस्तीर्थनिषेवणम्, इति वामनीयटीकायाम् .

**अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्तीति केचित्। स्वार्थसहचारिगुणाभेदे परार्थगता गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधीयत इत्यन्ये।**

---

**स्वार्थेति।** स्वार्थो गोशब्दस्य गोत्वं पिण्डाकृती वा, व्यक्त्याकृतिजातयस्तु पदार्थः स्वार्थ इति वचनात्। पदार्थो वाहीकः। तथाऽत्र गोशब्दो वाहीकशब्देऽनुपपद्यमानसामानाधिकरण्याद्बाधितस्वार्थस्सन् स्वाभिधानपूर्वं स्वार्थसहचारिजाड्यादिगुणान् लक्षयित्वा तत्तुल्यवाहीकस्थजाड्यादिगुणलक्षणद्वारेण गोगतगुणतुल्यगुणोपेते वाहीके उपचरितः। शब्दोपचारस्यार्थोपचाराविनाभावित्वात्तदर्थेऽपि केचिच्छब्दोपचारमेव मन्यन्ते। एवमन्यत्रापि। तेनेयमुपचारमिश्रा। लक्षणाद्वयगर्भीकारेण चतुर्थकक्षायां लक्षणेति चतुर्थकक्षात्वं लक्षणाया अभिधापेक्षया ज्ञेयम्। लक्ष्यमाणगुणमुखेन गोशब्दो वाहीके लक्षणया प्रवर्तत इत्यर्थः। गर्भलक्षणयोरन्त्यलक्षणार्थं प्रवृत्तत्वात्तत्प्रयोजनेन प्रयोजनवत्त्वं, न तु तयोर्भिन्नं प्रयोजनम्। **न तु पदार्थोऽभिधीयत इति।** गोशब्देन स्वार्थसहचारिगुणलक्षणापूर्वं तदभेदेन वाहीकस्थाः स्वतुल्या गुणा एव लक्ष्यन्ते। सव्यवधानव्यापारान्न वाहीकार्थोऽभिधीयत इत्येकलक्षणगर्भेयं तृतीयकक्षायां लक्षणेत्याहुः। **अभिधीयत इति।** लक्ष्यते।

साधारणगुणाश्रयणेन परार्थ एव [1]लक्ष्यत इत्यपरे ॥

उक्तं चान्यत्र—

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥

इति । अविनाभावोऽत्र सम्बन्धमात्रं नतु नान्तरीयकत्वम् । [2]तथात्वे हि मञ्चाः क्रोशन्तीत्यादौ लक्षणा न स्यात् । अविनाभावे चाक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम् ॥

'आयुर्घृतम्' 'आयुरेवेदम्' इत्यादौ च सादृश्यादन्य-

---

मुकुलस्त्वेवमाह—यथा गोशब्दः स्वसदृशवाहिकिगतजाड्यादिगुणान् लक्षयित्वा वाहीकं लक्षयति । **साधारणेति** । गोर्वाहिकस्य च साधारणास्तुल्या ये गुणाः तदाश्रयेण वाहीक एव लक्ष्यते । **अभिधेयेति** । मुख्येनार्थेनाविनाभूतस्य केनापि सम्बन्धेन सम्बद्धस्यास्य वस्तुनो या * प्रतीतिः सा लक्षणा शुद्धेत्यर्थः । लक्ष्यमाणैर्गुणैर्जाड्यादिभिः सम्बन्धाद्या तु वृत्तिः सान्तरार्थनिष्ठश्शब्दव्यापारः सा गौणी । **नान्तरीयकत्वमिति** । नान्तरं अविना नाम, तत्र भवं नान्तरीयं, गहादित्वादीयः । तदेवनान्तरीयकं आविनाभावि, येन विना यन्न भवति तन्नान्तरीयकम्, तादात्म्यतदुत्पत्तिलक्षणं कृतकत्वादि नित्यत्वादिवत् । **तत्त्वे हीति** । नान्तरीयकत्व इत्यर्थः । न हि मञ्चपुरुषयोराविनाभावोऽस्ति । **इत्युक्तमिति** । गौरनुबन्ध्य इत्यत्र ॥

---

[1] 'लक्ष्यते' इति क्वचिन्नास्ति.    [2] तत्त्वे सति मञ्चाः.

* प्रतीयतेऽनेनेति प्रतीतिः, प्रतीतिसाधनभूतो व्यापार इत्यर्थः । यद्युपस्थितिरेव लक्षणा तदा तु प्रतीयत इति प्रतीतिः, उपस्थितिः भावे क्तिन्.

त्कार्यकारणभावादि सम्बन्धान्तरम्। एवमादौ च कार्यकारणभावादिलक्षण[1]पूर्वे आरोपाध्यवसाने। अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिस्सर्वथैवाभेदावगमश्च प्रयोजनम्। शुद्धभेदयोस्त्वन्यवैलक्षण्येन अव्यभिचारेण च कार्यकारित्वादि[2] प्रयोजनम्। क्वचित्तादर्थ्यादुपचारः, यथा—इन्द्रार्था स्थूणा इन्द्रः। क्वचित् स्वस्वामिभावात्, यथा—राजकीयः पुरुषो राजा। क्वचिदवयवावयविभावात्, यथा—अग्रहस्त इत्यत्र अग्रमात्रे अवयवे हस्तः। क्वचित्तात्कर्म्यात्, यथा—अतक्षा तक्षा॥

---

एवमादौ चेति। आयुषः कारणे घृते तद्गतकार्यकारणभावलक्षणापूर्वत्वेनायुष्ट्वं कार्यमुपचरितम्। तेनेयं कार्यकारणभावलक्षणागर्भीकारेण लक्षणा। मुकुलस्याप्यदो मतम्। सप्रयोजना च लक्षणेत्याह—गौणभेदेति। अन्यवैलक्षण्येनेति। क्षीरादिवैसादृश्येन। यथाऽऽयुःकारणं घृतं न तथा क्षीरादि। आयुष्ट्वाच्च न व्यभिचरतीति कार्यकारित्वादि प्रयोजनम्। सम्बन्धाश्च बहवः, यदुक्तम् 'एकशतं षष्ठ्यर्थाः' इति। अत आह—क्वचित्तादर्थ्यादित्यादि। क्वाचिन्मानाद्यथा—आढकमश्नाति। क्वचिद्धरणाद्यथा—तुलाधृतं चन्दनं तुला। क्वचिदाधिपत्याद्यथा—पुमानयं गोत्रम्। स्थानाद्यथा—मञ्चाः क्रोशन्तीत्यादयः स्वयं यथालक्ष्यं लक्षणीयाः। एषु शुद्धा लक्षणा काचिद्रूढ्या काचित्प्रयोजनाच्च, काचित्सारोपा काचित्साध्यवसाना च, इत्युपचारमिश्रा चतुर्धोक्ता।

---

[1] पूर्वके सारोपसाध्यवसाने. [2] 'प्रयोजनम्' इति क्वचिन्नास्ति.

ननु गङ्गादिशब्दः समयापेक्षस्तटादिप्रत्यायकः, अन्यथा वा, पूर्वपक्षश्चेत् तर्हि मुख्यः, तत्र कृतसमयत्वात् वृक्षादिवत् । अनेकार्थेष्वपि सङ्केतितो हरिशब्दादिवन्मुख्य एव । अथोत्तरः पक्षः, तदा नार्थप्रतीतिकृत् । न हि शब्दो दीपवद्यचोग्यतयैवार्थं प्रकाशयति, किन्तु लिङ्गवत्सम्बन्धग्रहणबलात् । गङ्गादिशब्दः साक्षात्सम्बद्धः प्रवाहादौ, तेन सह तटादेः सम्बन्धः । ततः साक्षात्सम्बन्धाभावात्तत्रार्थे गङ्गादिशब्दस्यामुख्यतेति चेन्न । सक्षात्सम्बन्धस्तावन्न शब्दानां केनाप्यस्ति, गुणत्वात् । समवायस्तु व्योम्न्येव । सङ्केतस्तु साक्षादेवास्ति, तटादिप्रत्यायकत्वात् । न हि सम्बद्धसम्बन्धाद्भूतलशब्दात्तत्स्थेषु वृक्षादिषु प्रतीतिस्स्यात् । स्याद्वा सम्बद्धसम्बद्धात्प्रतीतिः, तथाऽपि नामुख्यता, विशिष्टज्ञानकारित्वात् । न हीन्द्रियं सम्बद्धसम्बन्धाद्गुणादौ विशिष्टं ज्ञानं कुर्वन्नगौणं । अविशिष्टज्ञानकारित्वे तु शब्दस्याप्रयोज्यतैव । उच्यते—लोकादेव च शब्दार्थानां मुख्यामुख्यत्वम् । सङ्केतित एवार्थे केन चिन्निमित्तेन प्रवर्तमानो मुख्यः शब्दः, केनचिद्भाक्त इति । यथा एकस्मिन्नेव पर्वते भूधरोऽस्तीत्यादिः क्रियाशब्दः, पर्वत इत्यादिर्जातिशब्दः । तदेवं निमित्तभेदाच्छब्दानां संज्ञा भिद्यन्ते । यथा वा स एव शब्दः क्वाप्यर्थे पारिभाषिकः क्वापि नैमित्तिकः समयापेक्षाविशिष्टज्ञानजनकत्वेऽपि, यथा आकाशशब्दो व्योमालोकयोः । समयोऽपि द्वेधा—साधारणासाधारणत्वेन । तत्र यः सर्वलोकशास्त्रे व्यवहारहेतुः स पूर्वः, यथा वृद्धिशब्देनाधिकीभाव उच्यते । यस्तु न सर्वस्मिन्

**लक्षणा तेन षड्विधा ॥ १२ ॥**

[1]आद्यभेदाभ्यां सह । सा च

**व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।**

प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव ।

---

लोके शास्त्रे वा तथा स द्वितीयः, यथा वृद्धिशब्देन आरैदौत उच्यन्ते । लोकेऽपि च गवाद्यर्थेषु व्यवहाराय गङ्गाचान्द्रिकेत्यादिशब्दोऽपूर्वः सङ्केत्यते । तत्रासाधारणसमयापेक्षी शब्दो यत्र सङ्केतितस्तत्र तथाऽर्थप्रत्यायकस्सन् मुख्यः । साधारणसमयापेक्ष्यपि यो जात्यादि निमित्तेन संमितः तन्निमित्तयोगिष्वर्थेषु मुख्य एव । निर्निमित्तोऽपि व्योमादिशब्दो यत्रार्थे परिभाषितस्तत्रार्थे मुख्य एव । यस्तु सामीप्यादिनिमित्तेन सङ्केतितः स सर्वलोकशास्त्रेषु भाक्तः प्रसिद्ध इति सर्वं शुभम् । तथा गङ्गादिशब्देभ्यः प्रवाहाद्यर्थप्रतीतिपूर्वं सामीप्यादिहेतुना विवेकतस्तटादिधीः । रजतमिदमित्यत्र त्विदंशब्दामृष्टशुक्तिमविविच्यैव रजतधीः, तेनात्र भ्रान्तिः, पूर्वत्र तु नैवम् । एतेन अतस्मिंस्तदिति ज्ञानं भ्रान्तमिति न्यायादगङ्गादौ तटादौ गङ्गादिज्ञानं भ्रान्तं, तद्धेतुश्च शब्दो न प्रयोगार्ह इति प्रश्नस्यानवकाशः । एवञ्चातस्मिंस्तदिति अभ्रान्तज्ञानहेतुः शब्दोऽमुख्य इति ॥

**तेनेति** ॥ उपसंहारे आद्यभेदाभ्यां सह सङ्कलने षोढा । संक्षेपेणैवात्र लक्षणाविचारः कृतः । विस्तरेण तु मुकुलादिरचिताभिधामातृकादिग्रन्थेभ्यो ज्ञेयः ॥

---

[1] आदिभेदाभ्यां.

**तच्च गूढमगूढं वा,**

तच्चेति व्यङ्ग्यम् । गूढं यथा—

> **मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितं**
> **समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।**
> **उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं**

---

**मुखमिति** ॥ अत्र विकसितशब्दो बाधितव्याकोशात्मस्वार्थः, पुष्पधर्मत्वाद्विकासस्य, ततः सच्छायत्वविस्तारित्वसादृश्यात् स्मिते उपचरितः। व्यङ्ग्यं च हृद्यत्वसुगन्धित्वादि । अत्र हि वाच्यस्य विकासस्यानुपपद्यमानत्वादत्यन्ततिरस्कृतवाच्यो लक्षणामूलो ध्वनिः । तथा वशितशब्दोऽचेतने वक्रिमण्यसम्भवत्परतन्त्रस्वार्थः सहचारित्वतन्मुखप्रेक्षित्वादिसादृश्याद्वक्रिमाणं लक्षयति । सर्वथा तदनुसरणं, न कदाऽप्यन्यत्र सद्भाव इत्यादि ध्वन्यम् । समुच्छलितशब्देन बाधितसामस्त्योर्ध्वशलनस्वार्थेनाकस्मादधिकीभवन् साम्याद्विभ्रमं लक्षयता प्रौढत्वबद्धास्पदत्वसर्वजनस्पृहणीयत्वादि व्यज्यते । अपास्तशब्देनामूर्तमत्याश्रितमर्यादायाममूर्तायां बाधितापक्षेपणात्मार्थेन स्वत्वनिवृत्तिसादृश्यात् संस्थां लक्षयता भूयोस्वीकरणानवलोकनादि व्यङ्ग्यम् । मुकुलितशब्दो बाधितकोरकत्वस्वार्थोऽभिनवोद्भेदसाम्यात् स्तनं लक्षयति । व्यङ्ग्यं चाभिलषणीयत्वचारुत्वास्पदत्वमन्मथसमुद्दीपनत्वादिकम् । उद्धुरशब्दो बाधितधुर्तौन्मुख्यस्वार्थ उन्नतत्वसाम्यादंसबन्धवत् जघनं लक्षयति ।

बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ ९ ॥

पीनत्वस्मरनिकेतनत्वादि व्यङ्ग्यम् । इन्दुवदनेत्यत्र यदोपचारस्तदेन्दुशब्दो बाधितस्वार्थः सुवृत्तत्वादिसाम्यात् वदनं लक्षयन् स्मरगरविधुरीकृतत्रिभुवनजीवयितृत्वादिकं ध्वनयति । उद्गमशब्दो बाधितोन्नयात्मस्वार्थो नवोद्भिदसाम्यात्तारुण्यं लक्षयन् सर्वजनाह्लादकत्वं व्यनक्ति । मोदतेशब्दो बाधितहर्षात्मकस्वार्थोऽर्थावितर्दकत्वादिसादृश्यादुद्गमं लक्षयन् उच्छृङ्खलत्वाभिलषणीयत्वप्रभृति व्यनक्ति । यथा वा—

गअणं च मत्तमेहं धारालुलिअज्जुणाइय वणाइम् ।
णिरहङ्कारमिअंका हरन्ति नीलाओ वि निसाओ ॥

चशब्दोऽप्यर्थे । न केवलं खं सतारं, मत्तमेघमपि । न केवलं मलयानिलान्दोलिताम्राणि वनानि, धारालुलितर्जुनान्यपि । न केवलं शशिसिता निशाः, निरहङ्कारमृगाङ्का नीला अपि । हरन्त्युत्सुकयन्तीत्यर्थः । मत्तशब्दो बाधितक्षीबात्मकस्वार्थो मर्यादोल्लङ्घनसादृश्यात् मेघान् लक्षयन् असमञ्जसकारित्वदुर्निवारत्वादि ध्वनयति । निरहङ्कारशब्दोऽपि विच्छायतासादृश्याच्चन्द्रं लक्षयंस्तत्पारतन्त्र्यजीवन्मृतप्रायत्वाकिञ्चित्करत्वसदविद्यमानत्वादि व्यनक्तीति लोचनकारः । वक्त्रोक्तिकारोऽपि—

तरन्तीवाङ्गानि स्खलदमललावण्यजलधौ
प्रथिम्नः प्रागल्भ्यं स्तनजघनमुन्मुद्रयति च ।
दृशोर्लीलारम्भाः स्फुटमपवदन्ते सरलतां
अहो सारङ्गाक्ष्यास्तरुणिमनि गाढः परिचयः ॥

अगूढं यथा—

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥१०॥

अत्रोपदिशतीत्यनायासेन शिक्षादानमभिधेयवत्स्फुटं प्रतीयते ।

---

इत्यत्र सादृश्योपचारमूचे । यथा चोपचारस्तथा वक्रोक्तिजीवितग्रन्थात् ज्ञेयः । पूर्वग्रन्थकारानुसारेण सादृश्यलक्षणेयमभिहिता । यावता तु लक्षितलक्षणाऽपि स्यात् । तथाहि—विकसितशब्दः स्मितविशेषणत्वानुपपत्त्या बाधितार्थः स्वसहचारिणं सच्छायत्वविस्तृतसुरभित्वादीनां एकस्य कस्यचिद्विशेषणतासिद्धये स्वार्थमर्पयति । ततस्सच्छायं विस्तृतं सुरभि वा स्मितमिति लभ्यते । विकसितं हि लोकलोचनलोलकं स्यादित्यतो लक्ष्यस्य सच्छायत्वादेर्लोकाह्लादित्वं प्रतीयते, तद्वारेण च स्मितस्यापीति । एवमेवं रीत्या वशितेत्यादिष्वपि । *ननु न लक्षणाबहुत्वं कार्यं, शक्यते ह्येकस्यावाचकस्य वाचकवद्भावः कल्पयितुं, तदिदं दुष्टमिति चेन्न । अहृद्यलक्षणाविषयं वामनीयं कविशिक्षापदमिदं ज्ञेयं, न हृद्यलक्षणाविषयम् । ननु अहृद्या लक्षणैकाऽपि दुष्टा, सन्तु दूरे बह्वच इति चेन्न । एकस्या अहृद्याया अपि सरसान्यवाक्यसङ्गेन कथञ्चन शक्यते हृद्यता आपादयितुं, बह्वीनां न तथा ॥

**अत्रोपदिशतीति** । अगूढव्यङ्ग्यव्यञ्जकं पदमिदम् । तथाहि—यौवनमदस्य अचेतनत्वादुपदेशेन बाधितस्वार्थेन वक्रप्रेक्षणादिव्यवस्था

---

* 'न तद्बाहुल्यमेकत्र' इति काव्यालङ्कारसूत्रम् अधि ५ अध्या १ सू १६. तेषां लाक्षणिकशब्दानां बाहुल्यमाधिक्यं नैकत्र वाक्ये प्रयोज्यमित्येतत्सूत्रार्थः.

**तदेषा कथिता त्रिधा ॥ १३ ॥**

अव्यङ्ग्या गूढव्यङ्ग्या अगूढव्यङ्ग्या च ॥

**तद्भूर्लाक्षणिकः,**

शब्द इति संबध्यते । तद्भूः तदाश्रयः ।

**तत्र व्यापारो व्यञ्जनात्मकः ।**

कुत इत्याह—

**यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते॥१४**
**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।**

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्दप्रयोग-

---

ज्ञापकत्वादिसाम्यान्मदं लक्षयताऽप्रयासेन शिक्षादानं वस्तु व्यङ्ग्यम-भिधेयवदतिस्फुटतया प्रतीयते । तेनात्रागूढनामा गुणीभूतव्यङ्ग्यभेदः । एवं यत्र झटित्येव व्यङ्ग्यस्य प्रतीतिः तत्रागूढत्वम्। यत्र त्वशब्दान्तर-वाच्यस्य तस्यैव निधानवद्गूढत्वेन प्रतीतिस्तत्र गूढत्वम् ॥

मुख्यार्थबाधादिसहचार्यपेक्षा अर्थभासनशक्तिः लक्षणाशक्तिः, तदाश्रयं लाक्षणिकं शब्दं वदन्तीत्याह—तद्भूरिति । तत्र व्यापार इति। तत्र प्रयोजने गूढागूढे व्यञ्जनात्मा व्यापारः । तत्रेति विषयसप्तमी । तेन स शब्दस्य व्यङ्ग्यविषये व्यञ्जनव्यापार इत्युक्तं स्यात् ।

**यस्येति** । प्रयोजनभूतफलावगमस्य सुखसम्पत्तये हि स लक्षणाशब्दस्तस्मिन्नमुख्येऽर्थे प्रयुज्यते । यदि च सिंहो माणवक इति शौर्यातिशयेऽप्यवगमयितव्ये स्खलद्गतित्वं शब्दस्य किमर्थं तस्य

स्तत्र[1] नान्यतस्तत्प्रतीतिः अपितु तस्मादेव शब्दात् । [2]न चात्र व्यञ्जनादृतेऽन्यो व्यापारः । तथाहि—

**नाभिधा समयाभावात्**

'गङ्गायां घोषः' इत्यादौ [3]ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्ते न तत्र गङ्गादिशब्दास्संकेतिताः ।

**हेत्वभावान्न लक्षणा ॥ १५ ॥**

मुख्यार्थबाधादित्रयं [4]हेतुः ।
[5]तथा च,

**लक्ष्यं न मुख्यं नाप्यत्र [6]बाधो योगः फलेन नो।**
**न प्रयोजनमेतस्मिन्न च शब्दः स्खलद्गतिः ॥ १६ ॥**

प्रयोगः । 'गम्ये' इति ण्यन्तो निर्देशः । शब्दावगमयितव्य इत्यर्थः । **नान्यत इति** । अभिधानलक्षणाव्यापारात् । **शब्दादिति** । गङ्गादेः ।

**लक्ष्यं न मुख्यमिति** । यदि हि लक्षणाव्यापारगम्यं प्रयोजनमिष्यते तदा लक्ष्यं तटं तावन्मुख्यं न भवति । न च तटस्य मुख्यार्थबाधः घोषाधारत्वोपपत्तेः । तथा न पावनत्वाद्यैः लक्ष्यैस्सम्बन्धः । न च प्रयोजने लक्ष्ये प्रयोजनान्तरमस्ति । तथा तत्र प्रयोजने व्यङ्ग्ये शब्दो न स्खलद्गतिः प्रतिपादयितुमसमर्थः । स्खलन्ती बाधकव्यापारेण विधुरीक्रियमाणा गतिः अवबोधनशक्तिर्यस्य शब्दस्य, तद्व्यापारो हि लक्षणा । न हि प्रयोजनमवगमयतस्तटवृत्तेर्गङ्गाशब्दस्य बाधकयोगः । यदि च

[1] नान्यतस्तत्प्रतिपत्तिः. [2] न च व्य. [3] 'ये' इति क्वचिन्न दृश्यते.
[4] हेतुः । लक्ष्यं. [5] तथाहि. [6] बाधा योगः.

यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति तद्वद्यदि [1]तटेऽपि सबाधस्स्यात्तत्प्रयोजनं लक्षयेत् । न च तटं मुख्योऽर्थः । नाप्यत्र [2]बाधः । न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैस्संबन्धः । नापि प्रयोजने लक्ष्ये किञ्चित्प्रयोजनम् । नापि गङ्गाशब्दस्तटमिव [3]प्रयोजनं प्रतिपादयितुमसमर्थः ॥

एवमप्यनवस्था स्याद्या [4]मूलक्षयकारिणी ।

[5]एवमपि प्रयोजनं चेल्लक्ष्यते तत्प्रयोजनान्तरेण तदपि प्रयोजनान्तरेणेति प्रकृताप्रतीतिकृदनवस्था भवेत् ॥

ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते, गङ्गायास्तटे घोष इत्यतोऽधिकस्यार्थस्य प्रतिपत्तिश्च प्रयोजनमिति

---

प्रयोजने अवगम्ये स्खलद्गतित्वं ततस्य प्रयोगे दुष्टतैव स्यादित्याह— नापि गङ्गाशब्द इति। यथा तटस्य प्रयोजने प्रतिपाद्ये असामर्थ्यं न तथा गङ्गाशब्दस्य। तस्मादभिधालक्षणाभ्यामन्यस्तच्छक्तिद्वयोपजनितार्थावगमपवित्रितप्रतिपत्तृप्रतिभासहायार्थद्योतनशक्तिः ध्वननात्मा व्यापारः। तेन यत्केनचिल्लक्षितलक्षणेति नाम कृतं तद्व्यसनमात्रं, तथाभावे च प्रयोजने लक्ष्ये प्रयोजनान्तरान्वेषणेनानवस्थानादतिप्रसक्तिः, ततश्च मूलक्षतिरित्याह—एवमपीति । प्रतिपत्तिश्चेति । एषाऽपि लक्ष-

---

[1] तटे स. [2] बाधा. [3] प्रतिपादयितुं समर्थः. [4] मूलक्षतिकारिणी. [5] एवमपीति.

[1] विशिष्टे लक्षणा । तत्किं [2] व्यञ्जनयेत्याह—

**प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥१७॥**

कुत इत्याह—

**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।**

[3] प्रत्यक्षादेर्हि नीलादिर्विषयः । फलं तु प्रकटता संवित्तिर्वा ।

**विशिष्टे लक्षणा** [4] **नैवं,**

[5] निगदेन व्याख्यातम् ।

**विशेषास्स्युस्तु लक्षिते ॥ १८ ॥**

[6] लक्षिते [7] तटादौ ये विशेषाः पावनत्वादयः ते चाभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः । तच्च व्यञ्जनध्वननद्योतनादि[8] शब्दवाच्यमवश्यमेषितव्यम् ॥

एवं [9] लक्षणामूलं व्यञ्जकत्वमुक्तम् । अभिधामूलं त्वाह—

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।**

---

णाव्यापारविषया । **फलमिति** ॥ प्रकटत्वं भट्टमते, संवित्तिः प्राभाकरे । प्रकटत्वं वस्तुधर्मः संवित्तिस्त्वात्मनः । यथाऽऽत्मना स्वमहत्त्वेन व्याप्तं शरीरमेव जीवदिति व्यपदिश्यते न घटादि, तथा ध्वनिनाऽपि गुणालङ्कारचारुशब्दार्थावेव व्याप्तौ काव्यमिति व्यपदेश्यौ न निर्गुणालङ्कारौ । तेन गौर्वाहीक इत्यादौ सव्यङ्ग्यत्वेऽपि न काव्यता ।

सङ्केतस्य अविशेषेण व्यक्तत्वात् अनेकार्थानां नियतार्थप्रत्यायकत्वे संयोगादिसाहितानां नियतानां नियतार्थप्रत्यायकत्वं स्यादित्याह—

---

[1] विशिष्टलक्षणा. [2] व्यञ्जनेनेत्याह. [3] प्रत्यक्षादेर्नीलादि. [4] नैवम् । व्याख्यातम्. [5] निगदव्याख्यातम्. [6] 'लक्षिते' इति क्वचिन्न दृश्यते. [7] तटादौ विशेषाः. [8] शब्दैर्वाच्य. [9] लक्षणामूलव्य.

**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥ १९ ॥**

[1]संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिस्स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥

इत्युक्तादिशा सशङ्खचक्रो हरिः अशङ्खचक्रो हरिरित्युच्यते । 'रामलक्ष्मणौ' इति दाशरथौ । 'रामार्जुनगतिस्तयोः' इति भार्गव कार्तवीर्ययोः । 'स्थाणुं भज भवच्छिदे' इति हरे । 'सर्वं जानाति देवः' इति युष्मदर्थे । 'कुपितो मकरध्वजः' इति कामे । 'देवस्य पुरारातेः' इति शम्भौ । 'मधुना मत्तः कोकिलः' इति वसन्ते । 'पातु वो दयितामुखं' इति सांमुख्ये ।

---

**संयोगाद्यैरिति** । **सशङ्खचक्रोऽशङ्खचक्र** इत्यत्र संयोगविप्रयोगाभ्यां विष्णुरेवोच्यते । **स्थाणुं भजेति** । अर्थात् प्रयोजनात् शम्भौ । **सर्वं जानातीति** । प्रकरणाद्युष्मदर्थे । प्रकरणमशब्दं, अर्थस्तु शब्दवानित्यनयोर्भेदः । **कुपित इति** । कोपलक्षणं हि लिङ्गं कामस्य नाब्धेः, अचेतनत्वात् । **देवस्येति** । **पुरारातेरिति** शब्दसन्निधेर्देवशब्दः शम्भौ । **मधुनेति** । वसन्तस्यैव पिकमदजनने सामर्थ्यमिति स एव मधुशब्दवाच्यः । **पात्विति** । बहुप्रकारं हि रक्षणं, तदत्र दयितामुखमपेक्ष्यौचित्यात्प्रसादसाम्मुख्यमेव पालनं नियम्यते ॥

---

[1] 'संसर्गो विप्रयोगश्च' इति हेमचन्द्रकाव्यानुशासने दृश्यते.

'भात्यत्र परमेश्वरः' इति राजधानीरूपदेशाद्राजनि । '[1]चित्रभानुर्विभाति' इति दिने रवौ, रात्रौ वह्नौ । 'मित्रं भाति' इति सुहृदि । 'मित्रो भाति' इति रवौ । इन्द्रशत्रुरित्यादौ वेद एव न काव्ये स्वरो विशेषप्रतीतिकृत् । आदिग्रहणात्—

एद्दहमेत्तत्थणिया एद्दहमेत्तेहिं अच्छिवत्तेहिं ।
एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअएहिं ॥ ११ ॥

{ छाया—एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥ }

इत्यादावभिनयादयः । इत्थं संयोगादिभिरर्थान्तराभि[2]धायकत्वे निवारितेऽप्यनेकार्थस्य शब्दस्य [3]यत्कचिदर्थान्तर-

---

इन्द्रशत्रुरिति । इन्द्रशत्रुर्वर्धस्वेत्यत्र इन्द्रश्चासौ शत्रुश्चेति कर्मधारये 'समासस्य' (पा.सू. ६-१-२२३) इति सूत्रेणान्तोदात्तत्वम्, बहुव्रीहौ तु 'बहुव्रीहौ प्रकृत्या पूर्वपदं' (पा.सू. ६ २-१) इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वे इन्द्रशब्दस्यान्तोदात्तत्वमिति स्वरो वेद इव काव्ये न विशेषप्रतीतिकृत् । वेदे तु विशेषप्रतीतिकृत् । तथाहि—

मन्त्रो हीनस्स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

अभिनयादय इत्यत्रादिशब्दादपदेशसंज्ञानिर्देशेङ्गिताकाराः ॥

---

[1] चित्रभानुर्विराजत इत्यहि रवौ. [2] धायित्वे. [3] यत्किञ्चिदर्थान्तर.

प्रतिपादनं तत्र नाभिधा, नियमनात्तस्याः। न च लक्षणा, मुख्यार्थबाधाद्यभावात्। [1]अपित्वञ्जनं व्यञ्जनमेव व्यापारः। यथा—

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगस्सततं करोऽभूत्॥ १२॥

**तद्युक्तो व्यञ्जकश्शब्दः**

तद्युक्तो व्यञ्जनयुक्तः।

**यत्सोऽर्थान्तरयुक्तथा।**

---

**भद्रेति**। भद्रः कल्याणप्रकृतिः, भद्रा हस्तिनां विशिष्टा जातिः। वंशः पृष्ठनाडिरन्वयश्च। शिलीमुखाः शराः भ्रमराश्च। परान्वारयति परः प्रकृष्टो वारणो हस्ती च। दानं त्यागः मदश्च। अत्र राजवर्णन प्रकरणेन नियमिताभिधानशक्तयो भद्राद्याश्शब्दा एकमेवार्थमुक्त्वा सार्थका एव। अनन्तरं त्वर्थावगतिर्ध्वननव्यापारादेव, शब्दशक्तिमूल त्वात्। अत्र पदानि शब्दशक्त्या गजवृत्तान्तं व्यञ्जन्तीति वाक्य- प्रकाशो वस्तुध्वनिः। यदा तु प्रस्तावादिनियमो न स्यात्तदा द्वयोर- र्थयोः वाच्यत्वात् श्लेषालङ्कार एव, न शब्दशक्तिमूलो ध्वनिः॥

**अर्थान्तरेति**॥ अर्थान्तरेण द्वितीयेनार्थेन युक्तः। यद्वाऽर्थ

---

[1] अपित्वञ्जनमेव.

**अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः॥२०॥**

तथेति व्यञ्जकः ॥

इति श्रीकाव्यप्रकाशे शब्दनिर्णयो
(शब्दार्थस्वरूपनिर्णयो) नाम
द्वितीय उल्लासः.

---

अन्तरे युनक्तीति स तथा । सहकारितयेति । यद्यप्यविवक्षितवाच्ये लक्षणाभिधामूले शब्द एव व्यञ्जकस्तथाऽप्यर्थस्य सहकारित्वं न हीयते । इतरथा त्वज्ञातार्थोऽपि शब्दस्तस्य व्यञ्जकः स्यात्, केवलं शब्दस्य मुख्यत्वात् । तत्राविवक्षितवाच्यध्वनौ मुखं विकसितेत्यादिवाक्यमभिधया पदार्थमुक्त्वाऽन्वयं च तात्पर्यशक्त्याऽवगमय्य बाधकेनान्वयं व्यपहृत्य लक्षणया लक्ष्यं लक्षयित्वा ध्वन्यं ध्वनयति । तेनात्राभिधातात्पर्यलक्षणा-ध्वननाख्याश्चत्वारो व्यापाराः । विवक्षितवाच्ये तु त्रयम्, तत्र लक्षणाया अभावात् ॥

सम्यक्शब्दविभागश्रीस्तेषां न स्याद्दवीयसी ।
परिच्युता न सङ्केताद्येषां मतिर्नितम्बिनी ॥

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते
द्वितीयोल्लाससङ्केतः.

---

# अथ तृतीय उल्लासः.

**अर्थाः प्रोक्ताः पुरा तेषां**

अर्थाः वाच्यलक्ष्यव्यङ्ग्याः। तेषां वाचकलाक्षणिकव्यञ्जकानाम्।

**अर्थव्यञ्जकतोच्यते ।**

[1] कीदृशीत्याह—

**वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ॥**

---

अथ तृतीयोल्लासः.

**अर्थव्यञ्जकतेति** । अर्थो व्यञ्जको यदि निरपेक्षस्तत्सदा तमर्थमवगमयेत् । अथ सापेक्षः किं तस्यापेक्षणीयामित्याह—**वक्तृबोद्धव्येति** । बोद्धव्य इति अन्तर्भूतण्यर्थः । वाक्यवाच्याभ्यां युक्तोऽन्यसन्निधिः वाक्यवाच्यान्यसन्निधिः तस्येति विग्रहो न समाहारः, तस्य नपुंसकत्वात् सन्निधिन इति स्यात् । वयन्त्वस्य श्लोकस्य द्वितीयं पादं 'अथ व्यञ्जकतोच्यते' इति कृत्वा पठामः । व्याख्यामश्चेत्थम्—अर्था वाच्यादयः पुरा प्रोक्ताः । अथ तेषामर्थानां व्यञ्जकतोच्यत इति । मूलव्याख्यायां त्वथशब्दस्य गम्यमानता व्याख्येया । किञ्च अविभावादिरूपस्यार्थस्य अन्यार्थधीहेतुत्वे वक्त्रादिवैशिष्ट्यापेक्षा न. विभावादिरूपस्य, सोऽनपेक्ष एव रसादिव्यञ्जकः । एतेन प्रयोजनस्य व्यङ्ग्यत्वोक्त्या ध्वनिरविवक्षितवाच्यो धर्मी उक्तः

---

[1] कीदृशी सेत्याह.

प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥

बोद्धव्यः प्रतिपाद्यः । काकुः[1] ध्वनेर्विकारः । प्रस्तावः प्रकरणम् । अर्थस्य वाच्यलक्ष्यव्यङ्ग्यात्मनः । क्रमेणोदाहरणानि—

अइपिहुलं जलकुंभं घेत्तूण समागदह्मि सहि तुरिअम् ।
समसेअसलिलणीसासणीसहा वीसमामि खणम् ॥ १३ ॥

(छाया—अतिपृथुलं जलकुम्भं गृहीत्वा समागताऽस्मि सखि त्वरितम् ।
श्रमस्वेदसलिलनिश्श्वासानिस्सहा विश्राम्यामि क्षणम् ॥)

अत्र चौर्यरतगोपनं गम्यते ।

---

ङ्गितः । अभिधामूलव्यङ्ग्यत्वोक्त्या शब्दशक्तिमूलो धर्मी । अर्थस्य विभावाद्यविभावादिरूपस्य व्यञ्जकत्वोक्त्या क्रमादसंलक्ष्यसंलक्ष्यक्रमौ अर्थशक्तिमूलौ धर्मिणौ । त एते उल्लिङ्गिता धर्मिणश्चतुर्थोल्लासे सविस्तरं वक्ष्यन्ते । **प्रस्तावदेशेति** । स्फुटम् ।

**अइपिहुलमिति** । अत्र काचिदसती कृतान्यपुरुषसङ्गा कायगतविकारविशेषापह्नवेनाभिधत्ते । तस्याश्चासाध्वीत्वेऽवगते तृतीयस्य तटस्थस्य प्रतिभाजुषो व्यङ्ग्यप्रतीतिः । न ह्यत्र बोद्धव्यादीनां सामर्थ्यं, सत्या वक्तृत्वे सति ते हि नैवंविधार्थं व्यङ्क्तुमलम् ।

---

[1] ध्वनिविकारः.

ओण्णिद्दं दोब्बल्लं चिन्ता अलसत्तणं सणीससिअम् ।
मह मन्दभाइणीए केरं सहि तुहवि अहह परिहवइ ॥१४॥

{ छाया—औन्निद्र्यं दौर्बल्यं चिन्ताऽलसत्वं सनिश्श्वसितम् ।
मम मन्दभागिन्याः कृते सखि त्वाम(तवा)प्यहह परिभवति ॥ }

अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते ।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैस्सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥ १५॥

---

तुहवि द्वितीयार्थे षष्ठी, त्वामपीत्यर्थः । कायत्यर्थान्तरमिति काकुः । यदि वा काकुः जिह्वा, तद्व्यापारविशेषसम्पाद्यत्वात् ध्वनेर्विकारोऽपि काकुः। यदि वा 'ककि लौल्ये' इति धातोः काकुशब्दः, प्रकृतार्थातिरिक्तमपि वाञ्छतीति लौल्यमस्याभिधीयते । यद्वा ईषदर्थे कुशब्दस्य कादेशः। तेन हृदयस्थवस्तुप्रतीतेः ईषद्भूमिः काकुः । ननु काव्ये स्वरो न विशेषप्रतीतिकृदिति प्रागुक्तं तत्कथं काकुस्वरोऽत्र काव्योपयोगी प्रोक्तः। सत्यं, प्रकृतार्थापेक्षया काव्ये स्वरो नोपयोगीति ज्ञेयम्, व्यङ्ग्यापेक्षया तु काव्योपयोगी लक्ष्यानुसारतः प्रतिपत्तव्यः, यथाऽत्र।

तद्वैशिष्ट्याद्यथा—तथाभूतामिति । (कौरवैर्युधिष्ठिरं प्रति प्रधानाः प्रेषिताः, तेन सन्धित्सता भीमानुनयनार्थं सहदेवः प्रेषितः) स च कोपमपरिहरन् सहदेवं प्रति काक्वेदमाह—गुरुः खेदं कोपं मयि भीमे भजतीति ।

---

( नायं कुण्डलितग्रन्थबोध्यः कथासन्दर्भो वेणीसंहारे दृश्यते )

**अत्र मयि न योग्यः खेदः [1]कुरुषु तु योग्य इति [2]काक्वा प्रकाश्यते। न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम्, प्रश्नमात्रेणापि काकोर्विश्रान्तेः ॥**

---

ननु तथाभूतामित्यादिवाच्यसिद्ध्यै काकुरयं स्वरविशेषः कारणमिति गुणीभूतव्यङ्ग्यभेदः कथं न स्यादित्याशङ्क्याह—**न च वाच्येति**। हे सहदेव कुरुषु किं न खेदो गुरोर्यन्मयि खेद इत्येवंरूपप्रश्नमात्रेण काकोर्विश्रान्तेः। काकोस्तु यद्वैशिष्ट्यं तत्पर्यालोचनया सहदेवस्य व्यङ्ग्यप्रतीतिरिति नैष काक्वाक्षिप्तो गुणीभूतव्यङ्ग्यभेदः। अयमाशयः—काव्ये अर्थानुपपत्तिसम्भवे सति व्यङ्ग्याद्यदा काव्यार्थोपपत्तिः तदा वाच्यसिद्ध्यङ्गाख्यो मध्यमकाव्यभेदः। यदा त्वर्थानुपपत्तिसम्भव एव सति काकोर्व्यङ्ग्यविश्रान्तिद्वारेण काव्यार्थोपपत्तिः तदा काक्वाक्षिप्तता, यथा 'मथ्नामि कौरवशतम्' इत्यत्र। तथाहि—अत्र भीमो न मथ्नामीति वक्तुं स्वप्नेऽपि न सम्भाव्यत इति काव्यार्थानुपपत्तौ सत्यां काकुर्व्यङ्ग्यार्थविश्रान्तिद्वारेण काव्यार्थमुपपादयति। यदा पुनर्व्यङ्ग्यविश्रान्तिं विनैव प्रश्नमात्रविश्रान्तः काकुः काव्यार्थमुपपादयति तदा न काक्वाक्षिप्तता, यथाऽत्र। अत एव 'काक्वा प्रकाश्यत इति पदं काक्वा काकुविशिष्टेन प्रकाश्यत इतीत्थं व्याख्येयमिति शुद्धध्वन्युदाहरणवादिनां पक्षः। ये तु ध्वनिमात्रं प्रत्येवार्थस्य व्यञ्जकताऽर्थप्रकरणे प्रोच्यत इयूचुः, तत्पक्षाश्रयणे पूर्वोक्तरीत्यनपेक्षया काक्वाक्षिप्तव्यङ्ग्यता ज्ञेया। तथा दृष्ट्वेति क्रिया यदा गुरुकर्तृका तदा

---

[1] कुरुषु योग्यः. [2] काक्वा व्यज्यते.

तइआ मह गण्डत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो ।
एह्लिं सच्चेअ अहं ते अ कबोला ण सा दिट्ठी ॥ १६ ॥

(छाया—तदा मम गण्डस्थलनिमग्नां दृष्टिं न नयसन्यत्र ।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥)

अत्र मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवा-[1]भूत् । चलितायां तु तस्यामन्यैव जातेत्यहो प्रच्छन्नकामुकत्वं त इति व्यज्यते ॥

उद्देशोऽयं सरस[2]कदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किञ्चैतस्मिन् सुरतसुहृदस्तन्वि ते वान्ति वाताः
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥ १७ ॥

अत्र रतार्थं प्रविशेति व्यङ्ग्यम् ।

---

स्थितोंषितेत्यत्र भावक्तान्तत्वे सति कर्मता व्याख्येया । यदा तु अस्मत्कर्तृका तदा यद्यपि तथापीति पदद्वयाध्याहारेण व्याख्या कार्या । अपराऽप्यसङ्गतिरस्य श्लोकस्य प्रकृतानुपयोगात्सङ्केतकरणस्य प्रस्तुतत्वाच्च न प्रकाशिता ॥

वाक्यविशेषाद्यथा—तइआ इति । अत्र वाक्योपात्तपदसमन्वयान्यथानुपपत्तेर्वाक्यपर्यालोचनया प्रच्छन्नकामुकत्वं व्यज्यते । न चात्र वक्तृबोद्धव्यवैशिष्ट्यं यतस्तयोर्वैशिष्ट्ये सत्यपि एवंविधवाक्याभावे व्यङ्ग्यार्थप्रतीतेः ।

उद्देश इति । न ह्यत्र वक्तृस्वभावपरिशीलनोपयोगो नापि वाक्ये पदानां व्यङ्ग्यमन्तरेणान्वयानुपपत्तिः, किन्तु वाच्यविशेषस्वरूपविचारेण रतार्थं प्रविशेति व्यज्यते ।

---

[1] भूत् । इदानीं च चलितायां तस्यां त्वन्यैव. [2] कदलिश्रेणि.

णोल्लेइ अणद्दमणा अत्ता मं घरभरम्मि सअलम्मि ।
खणमेत्तं जइ संझाइ होइ ण व होइ वीसामो ॥ १८ ॥

(छाया—नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रमः ॥)

अत्र सन्ध्या संकेतकाल इति तटस्थं प्रति [1]कयाचिद्द्योत्यते ॥

सुव्वइ समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण ।
एमेअ कित्ति चिट्ठसि ता सहि सज्जेसु करणिज्जम् ॥१९॥

(छाया—श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि तत्सखि सज्जय करणीयम् ॥)

[2]अत्रोपपतिं प्रत्यभिसर्तुं प्रस्तुता न युक्तमिति कयाचिन्निवार्यते ।

अन्यत्र यूयं कुसुमापचायं
कुरुध्वमत्रास्मि करोमि सख्यः ।
नाहं हि [3]दूरं भ्रमितुं समर्था
[4]प्रसीदतायं रचितोऽञ्जलिर्वः ॥२०॥

---

अन्यसन्निधेर्यथा—णोल्लेइ इति । नुदति प्रेरयति । अणद्दमना इत्यस्य अनार्द्रमनाः इति संस्कृतम् । अत्र प्रच्छन्नकामुके क्वापि देशे सान्निध्यभाजि सति सखीं प्रति स्वैरिणीं गाथां पठन्तीं दृष्ट्वा चतुर्थः स्सहचरो व्यङ्ग्यार्थं प्रत्येति । यद्यपि सन्ध्यायामवसरो भवत्येवेति विवक्षितं तथाऽपि तदुच्यमानं परस्य लक्षणीयं भवतीति तथा नोक्तम् ॥

देशविशेषाद्यथा—अन्यत्रेति । उद्देश इत्यादिवृत्ते समग्रस्यापि वाच्यस्य वैशिष्ट्यं, इह तु देशस्येति भेदः ।

---

[1] कयाचिद्बोध्यते. [2] अत्रोपपतिमभिसर्तुं. [3] दूरे. [4] प्रसीदतायं विहितो.

[1] अत्र 'विविक्तोऽयं देशः' इति, 'प्रच्छन्नकामुकः [2]त्वयाऽभिसार्यताम्' इत्याश्वस्तां प्रति कयाचिन्निवेद्यते ॥

गुरुअणपरवस पिअ किं भणामि तुह मन्दभाइणी अहकम् ।
अज्ज पवासं वच्चसि वच्च सअं जेव्व सुणसि करणिज्जम् ॥

(छाया—गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिन्यहकम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव जानासि करणीयम् ॥)

[3] अत्राद्य मधुसमये यदि व्रजसि [4]तदाऽहं तावन्न भवामि, तव तु न जानामि गतिमिति व्यज्यते । आदिग्रहणाच्चेष्टादेः । तत्र चेष्टाया यथा—

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् ।
आनीतं पुरतश्शिरोंशुकमधः क्षिप्ते चले लोचने
[5]वाचस्तत्र निवारितं प्रसरणं संकोचिते दोर्लते ॥ २२ ॥

अत्र चेष्टया प्रच्छन्नकान्तविषय आकूतविशेषो ध्वन्यते । [6]निराकाङ्क्षप्रतिपत्तये प्राप्तावसरतया च पुनःपुनरुदाह्रियते ।

---

द्वारोपान्तेति । अत्र मयीति प्रच्छन्नकामुके । ननु द्वितीयोल्लासेऽपि वाच्यलक्ष्यव्यङ्ग्यानामर्थानां व्यञ्जकत्वमुक्तं तत्किं पुनरुक्तमित्याह—निराकाङ्क्षेति । वक्तृबोद्धव्येत्यादिक्रमेणोक्ते निश्चिता प्रतीतिः स्यादित्यर्थः ॥

---

[1] अत्र हि विविक्तो. [2] त्वया विसर्ज्य इत्याश्वस्ता कयाचिन्निवेद्यते (त्वया विसर्ज्य इत्याश्वस्तां प्रति कयाचिद्द्योत्यते) [3] 'अत्र' इति क्वचिन्नास्ति. [4] तदहं. [5] वाचस्तत्र निवारितं [6] निराकाङ्क्षत्वप्रतिपत्तये.

वक्त्रादीनां मिथस्संयोगे [1] द्विकादिभेदेनानेन क्रमेण लक्ष्यव्यङ्ग्ययोश्च व्यञ्जकत्वमुदाहार्यम् । द्विकभेदे वक्तृबोद्धव्ययोगो यथा—

**अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि ।**
**मा पहिअ रत्तिअंधिअ सेज्जाए मह णिमज्जहिसि ॥२३॥**

{ छाया—श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय ।
मा पथिक राज्यन्ध शय्यायामावयोर्निमङ्क्ष्यसि ॥ }

**मिथस्संयोग इति** । तत्र वक्तृबोद्धव्ययोगे यथा—

**अत्ता एत्थेति** । अत्ता श्वश्रूरित्यसहना, न तु माता, तेन गुप्तमभिलाषः पोष्यः । एत्थेति अत्र दूरे सा शेते । अत्र त्वन्मार्गनिकटे । अहं उपभोगयोग्या । साम्प्रतं विघ्नकारित्वात् कुत्सितं दिवसं दिवसकम् । प्राकृते पुन्नपुंसकयोरानियमः । तस्मात्सम्प्रति विलोकय । मिथो वक्त्रावलोकनेन दिनातिवाहनं कुर्वस्तावदित्यर्थः । पथिकेति । पतितेऽपि तव न दोषकारीति न भेतव्यम् । रात्रौ रक्त्या वा स्मरोद्रेकादन्ध शय्याविभागानभिज्ञ । शय्यायां मा शयिष्ठाः, अपि तु मयि । मा आवयोः । मा शयिष्ठाः, अपि तु प्रहरचतुष्टयमपि क्रीडावः । काञ्चित्प्रोषितपतिकां तरुणीं विलोक्य जातकामः सम्पन्नः पान्थोऽनेन निषेधद्वारेण तयाऽङ्गीकृत इति निषेधाभावोऽत्र विधिः, न तु निमन्त्रणरूपोऽप्रवृत्तप्रवर्तनास्वरूपः,

[1] द्विकादि भेदे क्रमेण

**शब्दप्रमाणवेद्योऽर्थो युनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥२३॥**

शब्देति । न हि प्रमाणान्तरवेद्योऽर्थो व्यञ्जकः ॥

इति श्री काव्यप्रकाशे अर्थ (व्यञ्जकता)
निर्णयो नाम तृतीयोल्लासः.

---

सौभाग्याभिमानखण्डनप्रसङ्गात् । मह इति निपात आवयोरित्यर्थे । ममेत्युच्यमाने व्यङ्ग्यस्याभिधेयत्वमेव स्यात् । अत्र निषेधे वक्तृबोद्धव्यपर्यालोचनया विधिरूपव्यङ्ग्यार्थप्रतीतिः । एवं त्रिकादियोगे स्वयमूह्यम् ।

**सहकारितेति** । विवक्षितवाच्येऽर्थशक्तिमूले शब्दस्यापि सहकारित्वमस्ति, यतो विशिष्टशब्दाभिधेयतया विना अर्थस्याव्यञ्जकत्वात्, ततो द्वयोरपि व्यञ्जकत्वम् । केवलमर्थस्य मुख्यं व्यञ्जकत्वं, शब्दस्य तु सहकारिभावेन ॥

मनोवृत्ते! भोक्तुं निबिडजडिमोढापि परितः
परस्मै चेत्काव्याद्भुतपरिमलाय स्पृहयसि ।
समुद्यद्वैदग्ध्यध्वनिसुभगसर्वार्थजनने
तदा सङ्केतेऽस्मिन् अवहितवती सूत्रय रतिम् ॥

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते
तृतीयोल्लाससंकेतः.

# अथ चतुर्थ उल्लासः

यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालंकाराणां स्वरूपमभिधानीयं, तथाऽपि धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायत इति प्रथमं काव्यभेदानाह—

**अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ।**
**अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥२४॥**

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये [1] सत्येवाविवक्षितं वाच्यं

---

## अथ चतुर्थोल्लासः

**स्वरूपमभिधानीयमिति।** अभिधानीयं वक्तव्यमिति प्रस्तुतम्। अन्ये तु हितो योग्यः साधुरित्येषां शब्दानामेकार्थत्वेऽभिधानाय हितमभिधानीयं, वक्तुं योग्यमित्यपि व्याख्यान्ति। **काव्यभेदानिति।** यथाक्रममुल्लासत्रयेणोत्तममध्यमाधमानाहेत्यर्थः।

**अर्थान्तरे सङ्क्रमितमिति।** संक्रमितशब्दो यदा णिगन्तः तदाऽर्थान्तरे सहकारिसहितव्यञ्जनव्यापारेण संक्रान्तिनीतं वाच्यमिति व्याख्येयम्। यदा पुनरितप्रत्ययान्तस्तदा अर्थान्तरे संक्रान्तमिति। व्याख्याद्वयं चाग्रे 'क्वचिदर्थान्तरे परिणमति' 'क्वचिदर्थान्तरे परिणतम्' इति पाठद्वयदर्शनात्क्रियते। **लक्षणामूलेति।** लक्षणामूलं यद्गूढव्यङ्ग्यं तस्य प्राधान्ये। गूढेत्यनुवाद्यतया विशेषणं न विधेयतया, प्राधान्योक्त्यैव गूढत्वस्य लब्धत्वात्, न ह्यगूढं प्रधानं स्यात्।

---

[1] सत्यविवक्षितं

**यत्र [1]स ध्वनावित्यनुवा[2]दाद्ध्वनिरिति ज्ञेयः । [3]तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितम् । यथा—**

**त्वामस्मि वच्मि विदुषां [4]समवायोऽत्र [5]तिष्ठति ।**
**आत्मीयां[6] मतिमादाय स्थितिमत्र विधेहि तत् ॥ २४ ॥**

**अत्र वचनाद्युपदेशादिरूपतया परिणमति ।**

---

क्वचिल्लक्षणामूलज्ञातव्यङ्ग्यप्राधान्य इति पाठः । तदा चैवं व्याख्या—लक्षणैव मूलं ततो ज्ञातं यद्व्यङ्ग्यं तस्य प्राधान्ये इति । अस्मिंश्च पाठेऽयं गुणः यल्लक्षणभेदौ भवतः । सर्वत्र हि सामान्यलक्षणानुवादेन विशेषलक्षणं विधेयमिति न्यायात् । अत्रोत्तमकाव्यभेदप्रस्तावे लक्षणामूलव्यङ्ग्येति सामान्यलक्षणमनूद्य प्राधान्य इति विशेषलक्षणं कृतम् । एवं विवक्षितवाच्यादिभेदेष्ववगन्तव्यम् ।

**त्वामस्मीति** । वच्मि आप्ततयोपदिशामि न तु वचनमात्रं ब्रवीमि । **मतिमादाय** सावधानीभूय । अत्र वचनरूपस्यार्थस्य साक्षाद्गृह्यमाणत्वात् वच्मीत्यस्यानुपयुज्यमानत्वे मुख्यार्थबाधः, तुल्ययोगहेतुजन्यत्वं योगः । बुद्धिपूर्वकत्वसत्यत्वाशेषविशेषकथनाकीर्तिभ्रंशाद्यं च प्रयोजनम् * । अत्र च वचनस्योपदेशपरिणत्या स्वपरत्वेनानुपात्तं वाच्यं, तेनाविवक्षितं न पुनरत्यन्तं तिरस्कृतं, उपदेशस्यापि

---

[1] 'स' इति क्वचिन्नदृश्यते. [2] वादात्स ध्वनिरिति. [3] तत्र वाच्यं. [4] समुदायोऽत्र. [5] वर्तते. [6] मतिमास्थाय.

* 'वच्मीत्यत्र पर्यायत्वे पौनरुक्त्यं स्यात् । वचनमात्रे प्रतिपाद्ये तु पुरुषस्यादराभावाद्वचनविशेष उपदेशो लक्ष्यते । सामान्यविशेषभावस्संबन्धः । प्रयोजनं त्वन्यशब्दावाच्यं धर्मान्तरम् । आदायेति । मूर्तधर्मस्यादानस्य मतावसंभवात्प्राप्तिमात्रं लक्ष्यते । हेतुहेतुमद्भावस्संबन्धः । गृहीता मतिर्न परित्याज्येति व्यङ्ग्यं फलम्' इति वृत्त्यन्तरे ॥

[1] क्वचिदनुपपद्यमानतयाऽत्यन्तं तिरस्कृतम्, यथा—

उपकृतं बहु यत्र किमुच्यते
सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे
सुखितमास्स्व ततश्शरदां शतम् ॥ २९ ॥

वचनरूपत्वात् । वचनादीत्यत्रादिशब्दादस्मीत्यादेः उपदेशादीत्यादिशब्दात् अत्यासत्वादेश्च स्वीकारः। अत्र च विषयिणा वचनेन लक्ष्योपदेशरूपोऽर्थः स्वविषयो निगीर्ण इति साध्यवसाना, सम्बन्धान्तरनिमित्तत्वात् शुद्धा लक्षणेयम् । न ह्यत्र वचनोपदेशयोऽर्लेशेनापि सादृश्यं पश्यामः, येनेमां गौणीं साध्यवसानां ब्रूमः । साध्यवसानात्वं चास्या लक्षणायाः 'अत्र वचनाद्युपदेशादिरूपतया परिणमति' इत्यक्षरापेक्षया व्याख्यातम् । यावता तूपादानलक्षणाऽपि स्यात् । तथाहि—यत्रारोपविषयं मनसिकृत्यात्यन्ताभेदप्रतिपत्तये ह्यारोप्यं निवेश्यते तत्र साध्यवसाना शुद्धलक्षणा, यथा—अयुरेवेदमित्यत्र । यत्र त्वारोपविषयं प्रति मनोऽपि न धावति तत्रोपादानलक्षितलक्षणे । न ह्यत्रारोपविषयमुपदेशादि मनसि कृत्वाऽत्यन्ताभेदबुद्धये वचनादि विषयिरूपं प्रयुज्यते। तस्माद्वच्मीत्याद्यनुपयुज्यमानं स्वसिद्धये परस्योपदेशादिराक्षेपं करोति ।

उपकृतमिति । यत्रेत्युपकृते । अनुपकारिणं प्रत्युपकृतम् । सुखितमास्स्वेत्युक्तेरनुपपद्यमानत्वे मुख्यार्थबाधः । वैपरीत्यं च सम्बन्धः । ततोऽनुपकृतत्वं दौर्जन्यादिकं दुःखितत्वेनावस्थानं च लक्ष्यते।

[1] क्वचित्पुनरनुपपद्यमानत्वादत्यन्तं.

एतदपकारिणं प्रति विपरीतलक्षणया कश्चिद्वक्ति ॥

**विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः ।**

अन्यपरं व्यङ्ग्यनिष्ठम् । एष च,

**कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः॥**

अलक्ष्येति । न खलु विभावानुभावव्यभिचारिण एव रसः अपितु रसस्तैः इत्यस्ति क्रमः, [1] स तु लाघवान्न लक्ष्यते ॥

तत्र—

**रसभावतदाभासभावशान्त्यादिरक्रमः ।**

---

गुप्तासभ्यार्थप्रतिपादनेनाशु म्रियस्वेत्यादि व्यङ्ग्यम् । यदि वोपकारकारिणां श्लाघ्यत्वमिति व्यङ्ग्यम् । शुद्धा साध्यवसाना लक्षणेयम् । अत्रोपकृतत्वादेः वाच्यस्यात्यन्ततिरस्कारः, अनुपकृतत्वादिनाऽर्थान्तरेण सर्वथा अनन्वितत्वात् । तदयं भावः—यत्रानुपयुज्यमानतया मुख्यार्थबाधस्तत्रार्थान्तरसङ्क्रमितवाच्यो भेदः, यत्र त्वनुपपद्यमानतया तत्रात्यन्ततिरस्कृतवाच्यता ।

विवक्षितमिति । अत्र अन्यपरत्वेनैव विवक्षणात् विवक्षितं चेत्कथमन्यपरमिति विरोधो नाशङ्क्यः । **अपरस्तु सः** विवक्षितान्यपरवाच्य इत्यर्थः । **न लक्ष्यत इति ।** शतपत्रपत्रसूचीभेदवत् । रसादिरर्थो वाच्येन विभावाद्यर्थेन सममेव प्रतीयत इत्यर्थः ।अलक्ष्यक्रमत्वप्रतिपादनाच्च लक्षणागन्धोऽप्यत्र नास्ति ॥

---

1. स तु न लक्ष्यते

**भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः ॥२६॥**

अदिग्रहणाद्भावोदयभावसन्धिभावशबलत्वानि। प्रधानतया यत्र स्थितो रसादिस्तत्रालंकार्यः। यथोदाहरिष्यते। अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत्प्रेय[1]ऊर्जस्वित्समाहितादयोऽलंकाराः। ते च [2]गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्ते ॥

तत्र स्वरूपमाह—

**कारणान्यथ कार्याणि सहकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाटयकाव्ययोः॥**
**विभावा [3]अनुभावाश्च कथ्यन्ते व्यभिचारिणः।**
**व्यक्तस्स तैर्विभावाद्यैः स्थायी भावो रसस्स्मृतः॥**

---

रसाद्यलङ्कारादिति। रसादीनामलङ्कार इति विग्रहे रसालङ्कारो रसवत्, भावालङ्कारः प्रेयस्वत्, तदाभासालङ्कार ऊर्जस्वि, भावशान्तिरलङ्कारः समाहितमिति। पराविश्रान्तिरूपतया रसस्य न शान्तिरिति भावस्यैव शान्तिरुक्ता। प्रधानतयेति। अङ्गितया प्रधानतयेत्यसाधारणं विशेषलक्षणं काव्यभेदानामुत्तमत्वनिबन्धनम्। अतः सर्वोत्तमकाव्यभेदेषु प्रधानतयेत्यनुषञ्जनीयम्। भेदोपलक्षिताविवक्षितविवक्षितवाच्यसंलक्ष्यासंलक्ष्यक्रमत्वं तु मध्यमकाव्येष्वपि सम्भवात् सामान्यलक्षणम्। विशेषलक्षणं सामान्यलक्षणाव्यभिचारि स्यात्। सामान्यलक्षणं तु न विशेषलक्षणाव्यभिचारि ॥

---

[1] ऊर्जस्विसमाहितादयः [2] गुणीभूतव्यङ्ग्ये उदाहरिष्यन्ते. [3] अनुभावास्तत्कथ्यन्ते

**उक्तं हि भरतेन—'विभावानुभावव्यभिचारि [1]संयोगाद्रसनिष्पत्तिः' इति। एतद्विवृण्वते—'विभावैः ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः स्थायी रत्यादिको भावो जनितः अनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः व्यभिचारिभिः निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये [2]तद्रूपतानुसन्धानान्नर्तके[3]ऽपि प्रतीयमानो रसः'**

---

**एतदिति।** भरतमुनिसूत्रम्। **विभावैरिति।** * वागङ्गाभिनयात्मिकाः स्थाय्यादिचित्तवृत्तयो विभाव्यन्ते विशिष्टतया ज्ञायन्ते सभ्यैरेभिः कृत्वेति विभावाः। **अनुभावैरिति।** वागङ्गसत्वाभिनयैश्चित्तवृत्तिरूपमर्थमनुभवन्तः अनुभाव्यन्ते साक्षात्कार्यन्ते जना एभिरिति अनुभावाः। ते चात्र न रसजन्या ग्राह्याः, तेषां रसकार्यत्वेन गणनानर्हत्वात्, अपितु स्थायिनामेव येऽनुभावाः। **व्यभिचारिभिरिति।** विविधमाभिमुख्येन स्थायिधर्मोपजीवनस्वधर्मार्पणाभ्यां चरन्तीत्येवंशीला व्यभिचारिणः। अथवा व्यभिचरन्ति रसाद्युपयोगेन जन्ममध्ये न सर्वथा भवन्त्यपीत्येवंशीलाः। **निर्वेदादिभिस्सहकारिभिरिति।** चित्तवृत्तीनां क्रमाभावित्वात् व्यभिचारिरूपाश्चित्तवृत्तयो यद्यपि स्थायिरूपचित्तवृत्तिभिः समं न सहकारितां यान्ति, तथापि व्यभिचारिचित्तवृत्त्युदये स्थायिचित्तवृत्तीनां वासनात्मतया सद्भावात् स्थायिभिस्सह व्यभिचारिणः सहभाविनः। **प्रतीयमानो रस इति।**

---

*वागङ्गाभिनयानां आत्मायत्ताभ्यश्चित्तवृत्तिभ्यः तास्तथा।
**बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयात्मकाः। अनेन यास्मात्तेनोयं विभाव इति संज्ञितः॥**

[1] संयोगाद्रसस्य निष्पत्तिः. [2] तद्रूपानु. [3] के प्रती.

इति भट्टलोल्लटप्रभृतयः ।

अयं भावः—विभावैर्जनितोऽनुभावैः प्रतीतिं नीतो व्यभिचारिभिरुपचितो मुख्यया वृत्त्याऽनुकार्ये तद्रूपतानुसन्धानात् अनुकर्तर्यपि प्रतीयमानः स्थायीभावो रस इति । विभावानुभावव्यभिचारिसंयोगात्स्थायी परिपुष्टो रसतां यातीति तात्पर्यम् ।

एतन्नेति श्रीशङ्कुकः । तथाहि—विभावाद्ययोगे स्थायिनोऽवगमो न घटते, अवगमकस्यासत्वात् । न हि धूमं विना पर्वतस्थोऽग्निरवगम्यते । अपिच स्थायिनः संयोगाद्रसीभवन्तीत्येतद्यदि मुनेर्मतं स्यात्तदा स्थायिभावानामुद्देशं लक्षणं चादावेवाभिदध्यात् । अथ चादौ रसानामुद्देशलक्षणे अभिहिते, कुतश्च रसानामेव विभावानुभावान् विस्तारेण पूर्वमुक्त्वा तानेव स्थायिनां लेशेन पुनराह । न चोत्पत्तौ पदार्थानां कारणमुक्त्वा पुष्यतां पुनस्तदुत्पत्तिकारणं वक्तव्यं, वैयर्थ्यात् । किञ्च अनुपचितः स्थायी भावः, उपचितो रसः स्यादित्युच्यमाने एकैकस्य स्थायिनो मन्दतरमन्दतमादिविशेषापेक्षयाऽऽनन्त्यं स्यात् । रसस्यापि तीव्रतीव्रतरतीव्रतमादेरसङ्कुचत्वं प्रसज्येत । अथ उपचयं प्राप्त एव रस उच्यते, तर्हि* स्मितावहसितविहसिताद्याः षड्भेदा हास्यरसस्य न स्युः । अपरं च प्रागवस्थाभावः स्थायी, रसीभवति तु क्रमेणोपचित इत्यत्रापि व्यत्ययो दृश्यते, यस्मादिष्टवियोगजो महान् शोकः क्रमेण शाम्यति, न तु दृढीभवति । क्रोधोत्साहरतयश्च निजनिजकारणोद्भूता अपि कालवशादमर्षस्थैर्यसेवाविपर्ययेऽपचीयन्ते ।

* आद्यपदेन उपहसितापहसितातिहसितानि ग्राह्याणि.

**राम एवायं अयमेव राम इति, न रामोऽयमित्यौत्तरकालिके बाधे रामोऽयामिति, रामः [1]स्याद्वा न वाऽयमिति, रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति [2]प्रतिपत्त्या ग्राह्ये नटे—**

---

तन्न भावपूर्वकत्वं रसस्य, अपितु तद्विपर्यय एव। यदाह मुनिः—'रसपूर्वकत्वं भावानां' इति। भावपूर्वकत्वं रसस्य विषयविशेषापेक्षया। तथाहि—प्रयोगेऽनुकर्तरि रसमास्वादयतामनुकार्ये भावप्रतीतिर्जायत इति प्रथमपक्षोत्थानम्। लोके तु भावदर्शनात्तत्स्वरूपरसानिष्पत्तिरिति। वयं तु ब्रूमोऽत्र मते लौकिकस्य साक्षाद्रामादिगतस्य रसस्य लोकोत्तरस्य च नाट्यादिप्रत्येयस्य सम्यरसनीयस्य नान्तरं किमपि विभाव्यते। अन्यच्च नटेऽनुकर्तरि यदि रसः स्यात्तदा तस्य लयाद्यननुसरणं प्रसज्येत। नटेन च विभावाद्यैः काव्यशिक्षादिप्रकाशितैरनुकार्यगता विभावादय एवानुक्रियन्ते, नानुकार्यगो रसः, परचित्तवृत्तीनां अलक्ष्यमाणत्वेनानुकर्तुमशक्यत्वात्।

तस्मादन्यथोच्यते—राम एवायमिति। अत्राद्ये रामस्य प्राधान्यम्, इदमर्थस्य तु द्वितीये। अनेनोल्लेखयुगलेन सम्यक्प्रतीतिः। रामोऽयामिति प्रतीतिः मिथ्या, न रामोऽयमित्येवंरूपबाधकस्यौत्तरकालिकस्य समुदयात्। चित्रेति। चित्रचित्रिततुरगदृष्टान्तेन। तदाह—

---

[1] स्यान्न वेति. [2] प्रतीत्या.

सेयं ममाङ्गेषु सुधारसच्छटा
सुपूरकर्पूरशलाकिका दृशोः ।
मनोरथश्रीर्मनसश्शरीरिणी
प्राणेश्वरी लोचनगोचरं गता ॥ २६ ॥
दैवादहमद्य तया चपलायतनेत्रया [1] वियुक्तश्च ।
अविरलविलोलजलदः कालस्समुपागतश्चायम् ॥२७॥
[2] इत्यादिकाव्यानुसन्धानबलाच्छिक्षाभ्यासनिर्वर्तितस्वकार्यप्रकट-

---

प्रतिभाति न सन्देहो न तत्त्वं न विपर्ययः ।
धीरसावयमित्यस्ति नासावेवायमित्यपि ॥
विरुद्धबुद्ध्यसंभेदादविवेचितविप्लवः ।
युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कया ॥

इति । अत्र च विरुद्धाः सन्देहादिरूपाः । अविवेचितविप्लवः—असंविज्ञातानेकरूपत्वावभासः । एतेन लोकोत्तरा नटग्राहिका प्रतीतिरित्यर्थः । **काव्यानुसन्धानेति** । अत्र प्रथमात्काव्याद्रामोक्तत्वेनानुसंहितादालम्बनविभावः, द्वितीयात्तु कारणरूप उद्दीपनविभावः प्रकाश्यते । **शिक्षाभ्यासेति** । यथोपदेशं परिशीलनेन स्थायिकार्याः कटाक्षादयोऽनुसन्धीयन्ते । न ह्यशिक्षितोऽनभ्यासी च नटो रोमाञ्चस्वेदाद्यनुभावाभिनयनक्षमः । **अभ्यासेत्यादि** । अभ्यासेन निर्वर्तितं यद्व्यभिचारिकार्याणां कृत्रिमनिजानुभावानां प्रकटनं तेन । व्य-

---

[1] विमुक्तश्च.

[2] इत्यादिकारणबलात्.

**नेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमै-रपि तथाऽनभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः संयोगात्** [1]**गम्यगमकभावरूपादनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीय-त्वेऽन्यानुमीयमानविलक्षणः स्थायित्वेन संभाव्यमानो रत्या-**

भिचारिणोऽनुसन्धेयाः, निर्वेदादयो हि व्यभिचारिणः स्वस्वरुदि-ताद्यनुभावस्वरूपकार्यकारिणः सर्वेऽपि प्रत्येकं भवन्त्येव। स्थायी तु काव्यबलादपि नानुसन्धेयः। रतिश्शोक इत्यादयो हि शब्दा रत्या-दिकमभिधेयीकुर्वन्त्याभिधानत्वेन, न तु वाचिकाभिनयरूपतयाऽवगम-यन्ति। न हि वागेव वाचिकं अपितु तया निर्वृत्तम्, अङ्गैरि-वाङ्गिकम्। तेन—

विवृद्धात्माऽप्यगाधोऽपि दुरन्तोऽपि महानपि।
बाडवेनेव जलधिः शोकः क्रोधेन पीयते॥

इत्येवमादौ न शोकोऽभिनेयः, अपित्वभिधेयः। **कृत्रिमैरपीति**। नाट्यकाले मुख्यरामाद्यभावात्कृत्रिमत्वम्। **तथेति**। कृत्रिमतया। **संयोगादिति**। सम्बन्धात्, सबन्धमात्रेऽपि संयोगशब्दः, स च गम्यगमकभावात्मा। तत्र रसो गम्यः, विभावादिर्गमकः। **वस्त्विति**। रसरूपम्। **रसनीयत्वेनेति**। कषायफलचर्वणपरपुरुषदर्शनप्रभवमु-खप्रसेककलनाकल्पनया रसनीयस्वरूपतयाऽन्येभ्योऽनुमीयमानेभ्यो वि-लक्षणः। **सम्भाव्यमान इति**। हेत्वादिदर्शने सति हेतुमद्भिर्भाव्यमिति

[1] गम्यगमकरूपा.

**दिर्भावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः ॥**

---

सम्भावना । **तत्रेति** । नटे वस्तुतोऽसन्नपि । **सामाजिकानामिति** । सभ्यानां मुख्यरामाद्यनुगतस्थाय्यनुकरणरूपः । अनुकरणरूपत्वादेव च नामान्तरेण व्यपदिष्टो रत्यादी रसः । तेन रतिरनुक्रियमाणा शृङ्गारः, एवं हासोऽनुक्रियमाणो हास्यरस इत्यादि । मिथ्याज्ञानादप्यर्थक्रिया स्यात् । यदाह धर्मकीर्तिः—

मणिप्रदीपप्रभयोर्मणिबुद्ध्याऽभिधावतोः ।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥ इति ॥

नैतदपीति भट्टतोतः । तथाहि—अनुकरणरूपो रस इति वदेत् तन्न, किञ्चिद्धि प्रमाणेनोपलब्धं तदनुकरणमिति शक्यं वक्तुम् । यथा एवमसौ सुरां पिबतीति सुरापानानुकरणत्वेन जलपानं प्रत्यक्षेक्षितं भाति । इह च नटगतं किञ्चिदुपलब्धं स इत्यनुकरणतया भातीति चिन्त्यम् । तद्वपुस्तन्निष्ठं प्रतिशीर्षकादि रोमाञ्चगद्गदिकादि भुजाक्षेपवलनादि भ्रूक्षेपकटाक्षादि च न चित्तवृत्तिरूपरतेरनुकारत्वेन कस्यचिद्भाति, जडत्वभिन्नेन्द्रियग्राह्यत्वभिन्नाधिकरणत्वैस्ततोऽतिवैलक्षण्यात् । तथाहि—नटवपुरादीनां जडत्वं चक्षुर्ग्राह्यत्वं, रतेरजडत्वं मनोग्राह्यत्वं च । प्रतिशीर्षकादीनां वपुरधिकरणं, रतेस्तु मनोऽधिकरणमिति । मुख्यदर्शने च तदनुकृत्याभासः । न च रामरतिमुपलब्धपूर्वी कश्चित् । एतेन रामानुकारो नट इत्यपि निरस्तम् । अथ नटगता चित्तवृत्ति-

रेव प्रतीता सती रत्यनुकारः शृङ्गारः। तत्रापि किमात्मकत्वेन प्रतीयत इति चिन्त्यम्। ननु प्रमदादिभिः कारणादिभिः लिङ्गैर्या लौकिकी कार्यकारणसहचररूपा चित्तवृत्तिः प्रतीतियोग्या तदात्मकत्वेन सा नटचित्तवृत्तिर्भाति। हन्त तर्हि रत्याकारेणैव सा भातीति दूरे रत्यनुकृतिवाचोयुक्तिः। ननु ते विभावादयोऽनुकार्ये वस्तुसन्तः, इह त्वनुकर्तरि न तथेति विशेषः। अस्त्वेवं, किन्तु ते विभावादयो अनन्तकारणानन्तकार्यानन्तसहचररूपा अपि काव्यशिक्षादिबलानीताः कृत्रिमास्सन्तः किं कृत्रिमत्वेन सभ्यैर्गृह्यन्ते न वा। यदि गृह्यन्ते तदा तैः कथं रतेरवगतिः। नन्वत एव तत्प्रतीयमानं रत्यनुकरणं मुग्धबुद्धेः। हेत्वन्तरजाते हि कार्ये विशेषविदा हेत्वन्तरजत्वेन ज्ञाते रत्यनुकाररूपवस्त्वन्तरस्यानुमानं तावद्युक्तम्। अविशेषविदा तु तस्यैव मुख्यरतिरूपस्य प्रसिद्धस्य हेतोः। यथा वृश्चिकविशेषाद्गोमयस्यैव अनुमानं सर्पस्य वा वृश्चिकस्यैव वा तत्परं मिथ्याज्ञानम्। अयं भावः—प्रसिद्धाद्रामादिगतात् रतिरूपाद्धेतोः रत्यनुकरणं नाम हेत्वन्तरं, तज्जाश्चेदनुभावास्स्युः। तथैव च विशेषविदा यदि ज्ञायेरंस्तदा रत्यनुकरणरूपवस्त्वन्तरस्यानुमानं युज्येत। न चैवं, तत्कथमिव रत्यनुकारप्रतीतिः। अविशेषविदा च तथाविधानुभावादिदर्शने रतिरेवानुमीयेत तच्च मिथ्याज्ञानमेवेति। यत्रापि लिङ्गज्ञानं मिथ्या तत्रापि तदाभासानुमानमयुक्तम्। न हि धूमत्वेन ज्ञाताद्बाष्पादग्न्यनुकारानुमितिः। तदनुकारत्वेन भासमानादपि लिङ्गान्न तदनुकारानुमानं युक्तम्। धूमानुकारत्वेन हि ज्ञायमानात्तुषारात् न वह्न्यनुकारजपापुञ्जप्रतीतिर्दृष्टा। नन्वक्रुद्धोऽपि नटः क्रुद्ध इव भाति, सत्यं, क्रुद्धेन

सदृशः, सादृश्यं च भ्रुकुट्यादिभिर्गौरिव गवयेन मुखादिभिरिति नैतावताऽनुकारः कश्चित् । नापि सभ्यानां सादृश्यं भाति । अतो हेतोः सभ्यानां च न भावशून्या नर्तके प्रतिपत्तिरित्युच्यते । अथ च तदनुकारप्रतिपत्तिरिति, स्ववचनविरोधः । यच्चोक्तं रामोऽयमित्यस्ति प्रतीतिः, तत्रापि यदि न बाधकोदयः तत्कथं न सम्यग्ज्ञानम्, बाधकोदयश्चेत्कथं न मिथ्या । वास्तवेन च वृत्तेन बाधकानुदयेऽपि मिथ्याज्ञानमेव स्यात् । तेन 'विरुद्धबुद्ध्यसम्भेदात्' इत्यसत् । नर्तकान्तरेऽपि रामोऽयमित्यस्ति प्रतीतिः । ततश्च रामत्वं सामान्यरूपमित्यायातम् । विभावाश्च काव्यादनुसन्धीयन्त इत्यपि न । न हि ममेयं सीता काचिदिति स्वात्मीयत्वेन प्रतीतिर्नटस्य । अथ सभ्यस्य तथा प्रतीतियोग्याः क्रियन्त इत्येतावदेवानुसन्धानं, तर्हि स्थायिनि सुतरामनुसन्धानं स्यात् । तस्यैव हि मुख्यत्वेन अस्मिन्नयमिति सभ्यानां प्रतीतिः । * तन्न सभ्यप्रतीत्यनुसारेण स्थाय्यनुकरणं रसः । न चापि नटस्येत्थं प्रतीतिः, रामं तद्वृत्तिं वाऽनुकरोमि इति । सदृशकरणं ह्यनुकरणमनुपलब्धप्रकृतिना न कर्तुं शक्यम् । अथ पश्चात्करणमनुकरणं तल्लोकेष्वनुकरणात्मता प्रसक्ता । अथ न नियतस्य कस्य चिदनुकारः, अपितूत्तमप्रकृतेः शोकमनुकरोमीति, तर्हि केनेति चिन्त्यम् । न तावच्छोकेन, उत्तमप्रकृतेः शोकाभावात् । न चाश्रुपातादिना शोकस्यानुकारः, तद्वैलक्षण्यादित्युक्तम् । इयत्तु स्यात् उत्तमप्रकृतेर्ये शोकानुभावाःताननुकरोमीति । तत्रापि कस्योत्तमप्रकृतेः ? यस्य कस्यापीति चेत्सोऽपि विशिष्टतां विना कथं बुद्धावारोप्यते । य एवं रोदितीति चेत्, तर्हि स्वात्मानमपि नटोऽनुकरोती-

* तत् तस्मादित्यर्थः.

**न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते**

त्यायातम् । तस्यापि रोदनसद्भावादिति गलितोऽनुकार्यानुकर्तृभावः । यच्चोच्यते—वर्णकैर्हरितालादिभिः संयुज्यमान एव गौरित्यादि, तत्र यद्यभिव्यज्यमान इत्यर्थो मतः, तन्न, न हि वर्णकैः पारमार्थिको गौरभिव्यज्यते, यथा दीपाद्यैः, किन्तु तत्सदृशः समूहविशेषो निर्वर्त्यते । त एव हि वर्णका गवावयवसन्निवेशसदृशेन सन्निवेशेन स्थिता गोसदृगिति प्रतिभासमुत्पादयन्ति, नैवं विभावादिसमूहो रतिसादृश्यप्रतीतिग्राह्यः । न च स्थाय्यनुकरणं रस इति मुनिना क्वाचिदप्युक्तम् । *तन्न भावानुकरणं रसः । अन्यान्यपि दूषणानि सन्ति । परं विस्तरभीरुभिः नोक्तानि । वयन्तु ब्रूमोऽत्र मते नटगतत्वेनानुमीयमानः स्थायी सभ्यानां रस इत्यूचे । तत्रानुमीयमानत्वमनुभवविरुद्धं, तस्य विगलितवेद्यान्तरत्वेन रस्यमानत्वात् ।

तस्मादन्यथोच्यते नायकेन—**न ताटस्थ्यनेत्यादि** । ताटस्थ्यं स्वव्यतिरिक्ताश्रयत्वम् । तद्गतत्वेन हि रतिप्रतीतौ घटादिवन्न रसनीयत्वं स्यात् । स्वगतत्वेन तु रतिप्रतीतौ स्वात्मनि रसस्योत्पत्तिरित्यङ्गीकृतं स्यात् । सा च न युक्ता, सीतादेः सभ्यान् प्रत्यविभावात् । कान्तादित्वं साधारणं वासनाविकासहेतुर्विभावीभविष्यतीति चेत्, देवतावर्णनादौ तदपि कथम् । न च स्वकान्तादिस्मरणं मध्ये संवेद्यते । लोकोत्तरस्य च रामादेर्ये सेतुबन्धादयः ते कथं साधारणास्स्युः । न चोत्साहादिमतो रामादेः स्मृतिः, अननुभूतत्वात् । शब्दादेरपि तत्प्रतीतौ न रसोत्पत्तिः प्रत्यक्षादिव नायकमिथुनप्रतीतौ, प्रत्युत लज्जादेरुत्प-

* तत् तस्मादित्यर्थः

**नाभिव्यज्यते, [1]किन्तु काव्ये [2]नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्य-**

त्तिस्स्यात्। किञ्चोत्पत्तिपक्षे सीतादिषु कामित्वं स्यात्, करुणस्योत्पादाद्दुःखित्वं च। ततस्तत्प्रेक्षासु पुनरप्रवृत्तिः स्यात्। विभावादिनिवृत्तावपि कार्यरूपरसस्य घटादिवदवस्थानं प्रसज्येत। न चैवमस्ति, विभावादिनिवृत्तौ रसस्यापि निवृत्तेः, तन्नोत्पत्तिरपि। नाप्यभिव्यज्यते दीपादिप्रकाश्यघटादिवत् तस्य पूर्वसिद्धत्वाभावात्। अथ शक्तिरूपतयाऽस्ति चेत्, तदा तदभिव्यक्तौ विषयार्जनतारतम्यप्रवृत्तिः स्यात्। तत्रापि च स्वगतोऽभिव्यज्यते परगतो वेति पूर्ववदेव दोषः। तत्कथमयमनुभूयत इत्याह—**किन्तु काव्य इत्यादि।** काव्ये अनभिनेये, नाट्ये अभिनेये। तन्मते हि वाच्यविषयाभिधाव्यापारानन्तरभावी रसादिविषयो भावकत्वनामा व्यापारः स्वीकृतोऽस्ति। स च चेतसो घननिबिडसंमोहसंकटत्वं निवार्य विभावादीन् स्वस्य नटस्य च साधारणान् करोति। अत एव न ताटस्थ्यात्मगतत्वे। अयं भावः—यदि ह्यभिधाव्यापारानन्तरभावी भावकत्वव्यापारो नाङ्गीक्रियते तदा शास्त्रेभ्यः काव्यनाट्ययोः किमन्तरं स्यात्। तस्मात् द्वितीयोऽस्ति रसभावनाख्यो व्यापारः, यद्वशाद्विभावानां साधारणत्वापादनं स्यात्। भाविते च रसे तस्य भोगस्स्यादित्याह—**भोगेनेति।** यस्स्वयं भुज्यते रस्यते परस्मै दीयते च स भोगः, स चानुभवस्मृत्यादिविलक्षण एव। तद्विशेषण-

[1] अपितु [2] नाट्ये वाऽभिधातो

**मानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यत इति भट्टनायकः ।**

---

माह—सत्त्वेति । यदा हि रजसो गुणस्य द्रुतिः तमसोविस्तरः सत्वस्यातिविकासः तदानीं भोगः स्वरूपं लभते । सत्वोद्रेके चानन्दो भवति । सत्त्वोद्रेकेण प्रकाशः प्रकटो य आनन्दस्तन्मयी या संवित् तस्यां विश्रान्तिः, सा सतत्वं परमार्थो यस्य स तथा । स च परब्रह्मास्वादसोदरः सहृदयविषयः । एतेन काव्ये व्यापारत्रयं वाच्यं रससहृदयविषयमभिधाभावनाभोगात्मकमुक्तम् । अत्रोच्यते—रसस्वरूप एव तावद्विप्रतिपत्तिः प्रवादिनाम् । तथा हि—प्रागवस्थायां यस्स्थायी स एव विभावादिभिः प्राप्तपोषोऽनुकार्यगत एव रसोऽनुकर्त्रा नाट्ये प्रयुज्यमानत्वान्नाट्यरस इति केचित् । प्रवाहधर्मिण्यां चित्तवृत्तौ चित्तवृत्तेश्चित्तवृत्त्यन्तरेण कः पोषार्थः, विस्मयशोकक्रोधादेश्च क्रमेण तानवं दृष्टं न पोषः, तन्नानुकार्ये रसः, अनुकर्तर्यपि न, लयाद्यननुसरणप्रसङ्गात् । सभ्यगते च कश्चमत्कारः, प्रत्युत करुणादौ दुःखम् । तस्मान्नायं पक्षः कस्तर्हि, इहानन्त्यान्नियतानुकारो न शक्यो निष्प्रयोजनश्च, विशिष्टताप्रतीतौ ताटस्थ्येन व्युत्पत्त्यभावात् । तस्मादनियतावस्थात्मानं भावमुद्दिश्य विभावादिभिः संयुज्यमानैरयं रामः सुखीति स्मृतिविलक्षणा स्थायिनि प्रतीतिगोचरतयाऽऽस्वादरूपा प्रतिपत्तिरनुकर्त्रवलम्बना नाट्यैकगामिनी रसः । तस्य चानुकार्याभिन्नत्वाभिमतो

नर्तक एवाधारः, सभ्यस्त्वास्वादकः। तेन नाट्य एव रसाः नानुकार्यादिष्वित्यन्ये। अपरे तु—अनुकर्तरि यः स्थाय्यवभासोऽभिनयादिना कृतो भित्ताविव वर्णकादिनाऽश्वावभासः स एव लोकातीतया आस्वादापरसंज्ञया प्रतीत्या रस्यमानो रस इति नाट्याद्रसा नाट्यरसाः। केचित्तु—विभावानुभावमात्रमेव भावकत्वादिरूपविशिष्टसामग्र्या समर्प्यमाणं तद्विभावनीयानुभावनीयव्यभिचारिभिरुपचितचित्तवृत्त्युचितवासनानुरक्तस्वनिर्वृत्तिचर्वणाविशिष्टमेव रसः, तन्नाट्यमेव रसः। अन्ये तु शुद्धं विभावं, अपरे शुद्धमनुभावं, इतरे भावमात्रं, परे व्यभिचारिणं, अन्ये तत्संयोगं, एकेऽनुकार्यं, केचन सकलमेव समुदायं रसमाहुरित्यलं बहुना॥

काव्ये च लोकनाट्यधर्मिस्थानीयेन स्वभावोक्तिवक्रोक्तिप्रकारद्वयेन लोकोत्तरप्रसन्नमधुरौजस्विशब्दसमर्प्यमाणविभावादियोगादियमेव रसवार्ता। स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयं नाट्यं लोकधर्मी। स्वरालङ्कारसंयुक्तमस्वस्थपुरुषाश्रयं नाट्यं नाट्यधर्मी। एवं स्थिते सर्वपक्षेषु रसस्य प्रतीतिरपरिहार्या। न ह्यप्रतीतं व्यवहार्यं पिशाचवत्। किन्तु यथा प्रतीतिमात्रत्वावैशिष्ट्येऽपि प्रात्यक्षी आनुमानिक्यागमोत्था प्रतिभानकृता योगिप्रत्यक्षजा च प्रतीतिरुपायवैलक्षण्यादन्यैव तद्वदियमपि प्रतीतिश्चर्वणास्वादनरसनाभोगापरनामाऽस्तु। तद्धेतुभूताया हृदयसंवादाद्युपकृताया विभावादिसामग्र्या लोकोत्तररूपत्वात् इति प्रतीयमान एव रसः। प्रतीतिरेव च विशिष्टा

व्या——रसनाचर्वणाचमत्कारास्वादभोगलयादिशब्दवाच्या । सा च नास्ये लौकिकानुमानप्रतीतिविलक्षणा । सा च तां प्रमुखे उपायतया सन्दधाति । एवं काव्येऽप्यन्यशब्दप्रतीतेर्विलक्षणा परं प्रमुखे उपायतया तामपेक्षते । लौकिकप्रमाणादिव्युत्पन्नहृदयो हि लोकोत्तरं व्यवहारमाकलयति । एवं च प्रतीत्यादिव्यतिरिक्तो न भोगः, प्रतीत्याद्यव्यतिरिक्तत्वात् भोगो रसना भविष्यत्यपि, रसनाऽपि प्रतीतिरेव भोगीकरणव्यापारः काव्यस्य रसविषयो *व्यञ्जनरूपो नामान्तरेण परैः स्मृतः । किञ्च उत्पत्त्यभिव्यक्तिद्वयानभ्युपगमे नित्यो वा असन् वा रस इति न तृतीया गतिस्यादिति निष्टङ्कच

---

* अत्रायमाशयः—व्यञ्जनं द्विविधं, एकं कारणे सूक्ष्मतया स्थितस्य स्थूलरूपत्वं, यथा दुग्धावस्थायां शक्त्यवस्थस्योत्तरं दधिरूपत्वम् । इदं च प्रतीत्यनपेक्षमेव केवलवस्तुसमवेतव्यञ्जनम् । द्वितीयं तूपायप्रतीतिसापेक्षं उपेयप्रतीतिरूपम् । यथा प्रदीपे घटादौ प्रदीपप्रतीतिसाहित्येनैव घटप्रतीतिः, प्रदीपस्य व्यञ्जकत्वात्, तथेह रसविभावादीनां व्यङ्ग्यव्यञ्जकभावो व्याख्येयः, विभावादिप्रतीतिसाहित्येनैव रसप्रतीतेः । ततो रसाद्याश्रयेणालक्ष्यक्रमव्यङ्ग्यता व्यञ्जने प्रदीपघटदृष्टान्तता च प्रोक्ता । एवं रसादौ क्रमस्सन्नप्युत्पलपत्रशतभेदन्यायेन न लक्ष्यते । यतस्तत्र प्राक्केवलव्यञ्जकाः प्रतीयन्ते पश्चाद्व्यञ्जकसाहित्येन व्यङ्ग्यं प्रतीयते । लक्ष्यक्रमव्यङ्ग्ये तु व्यञ्जकप्रतीतिपूर्वं व्यङ्ग्यप्रतीतौ क्रमो लक्ष्यत एव । तदुक्तम्—न हि व्यङ्ग्ये प्रतीयमाने वाच्यप्रतीतिर्दूरीभवतीति । एवमेव चैतद्व्यङ्ग्यप्रतीतिसद्भावे हि व्यञ्जकप्रतीतिरुपयुक्ता न व्यञ्जकप्रतीतौ व्यङ्ग्यप्रतीतिः घटप्रदीपवदेव, प्रदीपप्रतीतेः केवलाया अपि भावात् । तदेवं विभावादयो व्यञ्जकाः, रसादयस्तु व्यङ्ग्याः इति स्थिते व्यञ्जनं व्यवस्थितम् ॥

लोके [1]प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्यैः 'ममैवैते,' 'शत्रोरेवैते' 'तटस्थस्यैवैते' न ममैवैते, न शत्रोरेवैते, न तटस्थस्यैवैते, इति [2]संबन्धिविशेषस्वीकारपरिहार[3]नियमानवसायात्साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मतया

श्रीमानभिनवगुप्तः प्राह—लोके प्रमदादिभिरित्यादि। यथा लोके धूमदर्शनानन्तरं अग्न्यनुमानं धूमाग्न्योरपि नियतदेशादितया यत्राग्निस्तत्र धूम इति व्याप्तिनिश्चयश्च, तथा विभावादिप्रतीत्यनन्तरमेव रत्याद्यनुमानं नियततया यत्र विभावादिः तत्र रत्यादिरिति व्याप्तिग्रहोऽपीत्यर्थः। नाट्ये चेति। नाट्येऽपि तैरेव कारणादिभिः विभावादिवाच्यैः स्थायी व्यक्तः, काव्येऽपि च लोकनाट्यधर्मिस्थानीयेन स्वभावोक्तिवक्रोक्तिप्रकारद्वयेनालौकिकप्रसन्नमधुरौजस्विशब्दसमर्प्यमाणविभावादियोगात् इयमेव रसवार्ता।* यन्मुनिः 'काव्यार्थान् भावयन्तीति भावाः' इति। असाधारण्यप्राधान्याभ्यां काव्यार्थो रसाः, पदार्थवाक्यार्थौ तु रसेषु पर्यवस्यतः। अर्थ्यन्ते प्राधान्येनेत्यर्थाः, न त्वर्थशब्दोऽभिधेयवाची, रसादेः स्वशब्देनानभिधेयत्वात्। ममैवैते इत्यादिकं साधारण्यप्रतीतौ हेतुः। स्वस्य शत्रोरुदासीनस्येति पक्षत्रयेण सर्वसम्बन्धिनां दर्शनम्। सम्बन्धिनां विशेषेण सम्बन्धिविशेषाणां वा यौ स्वीकारपरिहारौ यस्तयोर्नियमः

1 प्रमदादिभिः कारणादिभिः 2 संबन्धविशेष 3 नियमानध्यवसायात्'

* 'परिशुद्धितत्व उक्तमेव मुनिना—काव्यार्थान् भावयन्तीति भावाः' इति हैमकाव्यानुशासने,

**स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात्तत्कालविगलितपरिमित[1]प्रमातृतावशोन्मी - लितज्ञेयान्तरस्पर्शशून्यापरिमितभावेन प्रमात्रा [2]सकलहृदयसं- वादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृत-**

तस्यानवसायोऽपरिच्छेदः तस्मात् । **नियतप्रमातृगतत्वेनेति** । यः कोऽपि विदग्धः स नियतः । **साधारणोपायेति** । विभावादयो हि सर्वेषां तुल्यत्वेन प्रतीतिगोचराः । **तत्कालेति** । तत्कालं विभावा- दिदर्शनश्रवणसमकालं विगलिता या परिमितप्रमातृता तद्वशादुन्मी लितो ज्ञेयान्तरस्पर्शशून्योऽपरिमितभावोऽपरिमितत्वं यस्य स तथा, तेन प्रमात्रा । स्वगतत्वेन हि रतिप्रतीतौ कामित्वं, परगतत्वेन तु द्वेषादिताटस्थ्यं वा घटादिवत् । सर्वसाधारणप्रतीतौ ताटस्थ्यमेव न रसनीयत्वम् । रसनीयतायामपि सुखवन्नियतनिष्ठत्वे कामित्वम्। तस्मा- दनियतनिष्ठत्वेन यो रसनीयः सर्वप्रमातृतावलम्बनेनैव स रस्यते । अत एव रङ्गमण्डपान्तःप्रविष्टानां सर्वेषां हृदयसंवादभागित्वमुच्यते । अत एव च रङ्गभूमावहृदयानामपि साधारण्यप्रतीतये सहृदयीकर- णाय साधारण्यमहिम्ना सकलभोग्यत्वसहिष्णुभिः शब्दादिविषयमयै- रातोद्यगानविचित्रमण्डपविदग्धगणिकादिभिरुपरञ्जनमाश्रितम् । अस्मा- देव च साधारणसंवादकार्युपरञ्जनसमाश्रयणात् सुखादिप्रतीत्या न प्रमा- ता विवशी भवति । अविवशीभूतश्च रससंविदं वस्त्वन्तरे विश्रम- यति—**स्वाकार इवेति** । यथा स्वात्मानमहमात्मना जानामी-

[1] प्रमातृभाववशोन्मिषितवेद्यान्तरसंपर्कशून्य [2] सकलसहृदय

**श्रव्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन् अन्यत्सर्वमिव तिरोदधत्** [1] **ब्रह्मानन्दास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः।**

त्यत्राभिन्नोपि स्वाकारो ग्राह्यः । ग्राहकता हि सर्वत्र भेदे स्यात्, अत्र त्वभेदेऽपीत्यपिशब्दार्थः । **चर्व्यमाणतैकेति** । न सिद्धस्वभावोऽपि तु तात्कालिक एव । न च चर्वणातिरिक्तकालस्थायी, अत एव विभावादिजीवितावधिः । विभावादीनां च यावज्जीवितसत्ताप्रतीती तावद्रसस्य जीवितसत्ताप्रतीती । अत एव रसो न कार्यः । न हि कार्यं स्वज्ञानकाले कारणजीवितप्रतीती अपेक्षते । **पानकरसेति।** यथा हि पानकरसास्वादो गुडमरिचादिषु वस्तुषु मध्ये एकस्मिन् वस्तुनि चर्वद्भिरवधारयितुं न शक्यते तथाऽयमपि । **अनुभावयन्निति** । साक्षात्कारयन् । **रस इति** । **अयमाशयः**—प्रमदादिभिः कारणादिभिः लौकिकीं कारणत्वादिभुवमतिक्रान्तैर्विभावनानुभावनासमुपरञ्जकत्वप्राणैः अत एवालौकिकविभावादिशब्दव्यपदेश्यैरलौकिकनिर्विघ्नसंवेदनात्मकचर्वणागोचरश्चर्वणैकसारः स्थायिविलक्षण एव रसः, न तु यथा शङ्कुकादिभिरभ्यधायित । स्थाय्येव विभावादिप्रत्याय्यमानो रस्यमानत्वाद्रस उच्यते, एवं हि लोकेऽपि रसः स्यात् । असतोऽपि हि यत्र रसनीयता तत्र वस्तुसतः कथं न भविष्यतीति । तेन स्थायिप्रतीतिः अनुमितिरूपा वाच्या, न रसः । अत एव

[1] ब्रह्मास्वाद.

**स च न कार्यः,** [1]**विभावादिविनाशेऽपि तस्य संभवप्रसङ्गात्। नापि ज्ञाप्यः, सिद्धस्य** [2]**तस्यासंभवात्। अपितु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति** [3]**चेत्, न क्वचिद्दृष्टमिति** [4]**अलौकिकसिद्धेर्भूषणमेतत्** [5]**न दूषणम्। चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्।**

'विभावानुभावव्यभिचारिसंयोगात्' इति सूत्रवाक्ये स्थायिग्रहणं न कृतम्। तत्कृतं प्रत्युत शल्यभूतं स्यात्। स्थायी रसीभूत इति पुनरौचित्यादुक्तम्। औचित्यं तु तत्स्थायिगतत्वेन, कारणादितया प्रसिद्धानामिदानीं चर्वणोपयोगितया विभावादित्वावलम्बनात्। **विभावादिभिर्व्यञ्जित इति।** दीपादिव्यङ्ग्यलौकिकघटादिवैलक्षण्येन व्यञ्जितः। ननु यदि रस्यैकप्राणो ह्यसौ न प्रमेयादिरूपस्तर्हि सूत्रे निष्पत्तिरिति कथमित्याह—**चर्वणानिष्पत्त्येति।** नेयं रसस्य निष्पत्तिः, अपि तु तद्विषयरसनायाः, तन्निष्पत्त्या तु तदेकायत्तजीवितत्वात् यदि रसस्य निष्पत्तिरुपचर्यते तन्न कश्चिद्दोषः। सा च चर्वणा न प्रमाणान्तरतः पूर्वं जाता, येनेदानीं स्मृतिः स्यात्। न चाधुना प्रमाणान्तरादुत्पन्ना, लोकोत्तरे प्रत्यक्षाद्यव्यापारात्। स्वयं तु नाप्रामाणिकी, स्वसंवेदनसिद्धत्वात्। चर्वणा अवबोधरूपैव, ज्ञानविशेषस्यैव चर्वणारूपत्वात्। **अयं भावः**—विभावादिभ्यो लोकोत्तरेभ्य उपायेभ्यो जातत्वात् लोकोत्तरा चर्वणैषा बोधरूपा, लौकिककारणादिजातेभ्योऽत एव लौकिकेभ्यो ज्ञानान्तरेभ्यो वि-

1 विभावादिनाशेऽपि तत्संभव. 2 तस्याभावात्. 3 चेन्न। क्वचिन्न दृष्ट.
4 अलौकिकत्वसिद्धेः 5 न तु दूषणम्

[1] लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोध[2]शालिमितयोगिज्ञान—[3]वेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तरस्व[4]संवेदनगोचर इति प्रत्येयोऽभिधीयताम्। तद्ग्राहकं च प्रमाणं न निर्विकल्पकं, विभावादि[5]परामर्शप्रधानत्वात्। नापि सविकल्पकं, चर्व्यमाणस्या-

लक्षणैव। प्रत्येयत्वमपि दर्शयति—लौकिकेति। लौकिकप्रमाणेभ्यो विलक्षणं चमत्कारकारित्वात्, तथा ताटस्थ्येन स्वात्मानं विना यः परस्य बोधः तेन शालते यन्मितयोगिज्ञानं तस्माद्विलक्षणं, ताटस्थ्यप्रतीत्यादित्वेन रत्यादिबोधस्य निषिद्धत्वात्, तथा विषयोपरागशून्यस्वनिष्ठामितयोगिज्ञानाच्च विलक्षणं, स्वात्मगतत्वेन प्रतीत्यादिनिषेधस्योक्तत्वात्, यत्स्वसंवेदनं, अत एव लोकोत्तरं ग्राह्यम्, तस्य गोचरः। अलौकिकानन्दमयस्येति। संज्ञोल्लेखरहितस्येत्यर्थः। तदयमत्र संक्षेपः—मकुटप्रतिशीर्षकादिना तावन्नटधीराच्छाद्यते। गाढप्राक्तनसंवित्संस्काराच्च काव्यबलोपढौक्यमानाऽपि न तत्र रामधीर्विश्राम्यति। अत एवोभयदेशकालत्यागः। रोमाञ्चादयश्च भूयसा रतिप्रतीतिकारितया दृष्टास्तत्रावलोकिता देशकालानियमेन रतिं गमयन्ति। यस्यां स्वात्माऽपि तद्वासनावत्त्वादनुप्रविष्टः। अत एव न ताटस्थ्येन रत्यवगमः। न च निर्हेतुतया, येनार्जनाभिष्वङ्गादिभावना।

[1] लौकिकप्रमाण. [2] शालिपरिमित. [3] वेद्यसंस्पर्श. [4] संवेदनागोचर.
[5] परामर्शनप्रधानत्वात्.

लौकिकानन्दमयस्य तस्य स्वसंवेदनसिद्धत्वात् । [1]उभयाभावस्वरूपस्य चोभयात्मकत्वमपि पूर्ववत् [2]लोकोत्तरतामेव गमयति न तु विरोधमिति [3]श्रीमदाचार्याभिनवगुप्तपादाः ॥

व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणां, अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः, चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानामिति पृथगनैकान्तिकत्वात्सूत्रे [4]मिलिता एव निर्दिष्टाः ॥

---

न च नियतपरात्मैकगततया, येन दुःखद्वेषकामित्वाद्युदयः । तेन साधारणीभूता संतानवृत्तेरेकस्या एव वा संविदो गोचरीभूता रतिः शृङ्गारः साधारणी भावनदिभिरिति । अत्र सङ्केतस्य प्रस्तुतत्वाद्रसविचारः संक्षेपादुक्तः । विस्तरेण तु लोलटादिविरचितरसविवरणेभ्यो ज्ञेयः । **पादा** इति बहुवचनोक्त्या ग्रन्थकारस्तन्मतं बहुमतवानिति ।

**व्याघ्रादय** इति । विभावादयः प्रत्येकं रसेषु पृथगुच्यमाना अनैकान्तिकतां भजन्ते, संयोगस्त्वव्यभिचारी । तथा हि—यत्र बन्धुविनाशो विभावः अश्रुपातादिश्चानुभावः चिन्तादैन्यादिश्च व्यभिचारी सोऽवश्यं शोको रसः, इत्येवमन्यत्रापि । **अश्रुपातादय इति** । तत्र वीरेऽश्रुपातो माघे निबद्धो यथा—

* स वमन् रुषाऽश्रु घनघर्मविगलदुरुगण्डमण्डलः ।
स्वेदजलकणकरालकरो व्यरुचत्प्रभिन्न इव कुञ्जरस्त्रिधा ॥

इति । **मिलिता इति** । संयोगरूपतया ।

---

[1] उभयाभावरूपस्योभयात्मक. [2] लोकोत्तरतामवगमयति.
[3] श्रीमदभिनवगुप्तपादाचार्याः. [4] मिलिता निर्दिष्टाः. * (मा. १९-४)

वियदलिमलिनाम्बुगर्भमेघं
मधुकरकोकिलकूजितैर्दिशां श्रीः ।
धरणिरभिनवाङ्कुराङ्कटङ्का
प्रणतिपरे दयिते प्रसीद मुग्धे ॥ २८ ॥

इत्यादौ

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीं
अभिनवकरिदन्त [1]च्छेदकान्तः कपोलः ॥ २९ ॥

इत्यादौ

दूरादुत्सुकमागते [2]विवलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने [3]किञ्चाञ्चितभ्रूलतम् ।

---

वियदलीति। टङ्को बन्धः । अत्र केवलविभावसद्भावेऽप्यन्यतमद्वयाक्षेपकत्वेन रसपुष्टिः ।तेन नानैकान्तिकत्वम् । अन्यतमद्वयाक्षेपश्च प्रसीदेति पदात्प्रसन्नावलोकनमुखप्रसत्तिप्रसादवचनादिरनुभावर्गः, प्रणतिपर इति पदाच्चौत्सुक्यातिलापदैत्यादिः मुग्धपदाद्वा त्रासत्रपाहर्षादिर्व्यभिचारी च समाक्षिप्यत इति ।

परिमिलितेति । अत्र कथमपिपदात ग्लान्यालस्यश्रमप्रभृतिर्व्यभिचारिगणः, अङ्ग प्रवृत्तिः कपोल इति पदेभ्यः कस्या अङ्गमित्याद्यपेक्षायां विभावश्च लभ्यते ।

दूरादुत्सुकेति। अत्रौत्सुक्यादिव्यभिचार्यनुगतत्वेन दूरादित्यादि-

---

[1] च्छेदपाण्डुः कपोलः [2] विचलितं. [3] कोपाञ्चितभ्रूलतम्.

मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ ३० ॥

इत्यादौ च यद्यपि [1]विभावानामनुभावानामौत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानां च व्यभिचारिणां [2]केवलानामत्र स्थितिः, तथाऽप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तिकत्वमिति ॥

तद्विशेषानाह—

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसास्स्मृताः॥**

---

पदेभ्यः सहसा प्रसारणादिरूपोऽनुभावः, प्रेयसीति पदाच्च विभावो लभ्यते । पूर्णेक्षणमित्यत्रेक्षणशब्दो व्यापारवचनः । एवं द्वयसद्भावेऽप्युदाहार्यम् । परं विभावादित्रयसद्भावे रसप्रतीत्युत्कर्षः । त्रयसद्भावश्च दशरूपक एव । यदाह वामनः—

*'सन्दर्भेषु दशरूपकं श्रेयः, †तद्धिचित्रं चित्रपटवद्विशेषसाकल्यात्' इति । तद्रूपसमर्पणया तु प्रबन्धेऽपि । **नानैकान्तिकत्वमिति ।** विभानुभावव्यभिचारिसंयोगस्येति शेषः ॥

**शृङ्गारेति ।** अत्र कामस्य सकलजातिसुलभतया अत्यन्तपरिचितत्वेन सर्वान् प्रति हृद्यतेति पूर्वं शृङ्गारः, तदनुगामित्वात् हास्यः, तद्वैपरीत्यान्निरपेक्षभावाच्च ततः करुणः, ततस्तत्कारणमर्थसारो रौद्रः, ततो रौद्रस्य कामार्थप्राधान्येन कमार्थयोश्च

---

[1] विभावानुभाव ना. [2] केवलानामेवास्ति स्थितिः.

*-† 'तद्धि चित्रं'. इति वामनसूत्रे दृश्यते. अधि. १. अध्या. ३. सू ३०-३१

**तत्र शृङ्गारस्य द्वौ भेदौ, संभोगो विप्रलम्भश्चेति । तत्राद्यः [1] परस्परावलोकनालिङ्गनाधरपानपरिचुम्बनाद्यनन्तभेदत्वादपरिच्छेद्य इत्येक एव गण्यते । यथा—**

**शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैः**
**निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।**
**विश्रब्धं [2]परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं**
**[3]लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥**

---

धर्ममूलत्वादिति धर्मप्रधानो वीरः, तस्य भीतत्राणसारत्वात्ततो भयानकः, ततस्तद्विभावसाध्यसम्भावनाद्बीभत्सः, इतीयद्वीरेणाक्षिप्ते वीरस्य फलभूतोऽद्भुतः इत्यस्त्येषां क्रमः । **द्वौ भेदाविति ।** आत्मेति शेषः । अतो द्वौ भेदावात्मा शृङ्गारस्य न त्वात्मानाविति । **अयमभिप्रायः**—सम्भोगे चेन्न विप्रलम्भाशङ्का, तदा स्वाधीनेऽनुकूले चानादरस्स्यात्, वामत्वात्कामस्य । यन्मुनिः—

यद्वामाभिनिवेशित्वं यतश्च विनिवार्यते ।
दुर्लभत्वं च यन्नार्याः कामिनस्सा परा गतिः ॥

विप्रलम्भे चेन्न संभोगाशा तदा नैराश्येन करुण एव स्यात् । तस्मात्प्राप्तं गतमिव गतं प्राप्तमिवेत्येवं परम्पराक्रमेण वर्धिष्णुरयं कामः परमप्रीतिकृत् । सम्भोगविप्रलम्भयोस्तु शृङ्गारशब्दो ग्रामैकदेशे ग्रामशब्दवदुपचारात् । **सम्भोग इति ।** संयुक्ताभ्यां भुज्यत इति संभोगः । संभोगसुखास्वादलोभेन विप्रलभ्यते आत्माऽनेनेति विप्रलम्भः । **शून्यमिति ।** किञ्चित् पूर्वकायेन । शनैः मन्दं यथा स न

---

[1] परस्परालोकनालिङ्गनचुम्बन. [2] परिरभ्य. [3] लज्जेति पृथक्पदं, लज्जावतीत्यर्थः । अतो लज्जनक्रियया समानकर्तृकत्वादालोक्येति क्त्वोपपत्तिरित्युद्द्योते

**तथा—**

**त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं**
**लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि।**
**[1] शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो**
**निर्यातश्शनकैरलीकवचनोपन्यासमालीजनः ॥ ३२ ॥**

**अपरस्तु अभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविधः। क्रमेणोदाहरणानि—**

**प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयाः**
**तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि।**

---

जागर्तीत्याशयेन। अत्र गण्डयोः पुलकोद्गमेन निद्राव्याजावगत्या नायिकाया लज्जाभावः।

त्वं मुग्धाक्षीति। वीटिका कशासंयोजनपाशः, जालिकेति यावत्। सम्भोगस्य तात्कालिकं फलं परीरम्भः, स च कञ्चुलिकासद्भावेन तथाविधो न स्यादित्याशयेन विनैव कञ्चुलिकयेत्युक्तम्। सस्मिता या सखी सैव नेत्रोत्सवः तेनानन्दितः, समिषोपन्यासं यथा भवतीत्यर्थः।

**अपरस्त्विति।** पूर्वमसङ्गे सङ्गेच्छा **अभिलाषः।** प्रतिनियतेऽपि सङ्गे कुताश्चित्कारणात् असंयोगो **विरहः।** सपत्नीषु कान्तकृतसन्मानाद्यसहनं **ईर्ष्या।** देशान्तरगमनं **प्रवासः।** कुपितदैवादिकृतो वाग्दण्डः **शापः।**

**प्रेमार्द्रा इति।** प्रणयस्पृशः स्वयमाश्लेषादियाच्ञास्पृशः। परिचयात्पुनः करणादुद्गाढरागोदयाः तास्ताश्चेष्टा मयि भवेयुः

---

1 तल्पोपान्त.

यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणात्
आशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः॥३३॥
अन्यत्र व्रजतीति का खलु कथा नाप्यस्य [1]तादृक् सुहृत्
यो मां नेच्छति [2]नागतश्च हहहा कोऽयं विधेः प्रक्रमः।
इत्यल्पेतरकल्पनाकबलितस्वान्ता निशान्तान्तरे
[3]बाला वृत्तविवर्तन[4]व्यतिकरा नाप्नोति निद्रां निशि॥

एषा विरहोत्कण्ठिता—

सा पत्युः [5]प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्ति[6]संसूचनम्।

---

भवन्त्विति आशंसापरिकल्पितासु मनोरथविषयीकृतासु, लयः चेष्टानां साक्षादनुभव इव।

**अन्यत्रेति**। अन्यत्र नायिकायाम्। एतेन स्वस्मिन् पत्यनुराग उक्तः। नाप्यस्य तादृगित्यादिना तु परिवारानुकूलत्वमुक्तम्। **निशान्तान्तरे** गृहान्तः न बहिः, एतेन सतीत्वमुक्तम्।

**सा पत्युरिति**। अत्र सख्युर्भावः सख्यं मैत्री। *'सखिवणिग्दूताद्यः' इति यः। तेनोपदेशस्तं तथा। अथवा सख्यां साधुरुचितः †'तत्र साधौ' इति यः। स चासावुपदेशश्च तं तथेति। रोदनस्य सशब्दत्वपरिहारायाश्रुभिरित्युक्तम्। अश्रूणामेव च प्राचुर्याय लोलोदकैरिति चोक्तम्। स्वच्छैरित्यनेन तु चिरकालं रोदनं लभ्यते न क्षणमात्रं, क्षणमात्ररोदने हि किञ्चिदञ्जनसद्भावादश्रूणां न स्वच्छता

---

1 तादृग्जनो या. 2 नागतश्च सहसा कोऽयं 3 बालानामविवर्तन.
4 व्यतिकरादाप्नोति. 5 प्रथमेऽपराधसमये. 6 संसूचितम्.
* हेमशब्दानुशासने ७ अध्या १ पा १५ सू † हेमशब्दानुशासने ७ अध्या १ पा ६३ सू

**स्वच्छैरच्छ[1]कपोलमूलगलितैः पर्यस्तनेत्रोत्पला**
**बाला केवलमेव रोदिति [2]लुठल्लोलोदकैरश्रुभिः ॥ ३६ ॥**
**प्रस्थानं वलयैः कृतं प्रियसखैरस्त्रैरजस्रं गतं**
**धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।**
**यातुं निश्चितचेतसि प्रियतमे [3]सर्वे समं प्रस्थिताः**
**गन्तव्ये सति जीवित प्रिय सुहृत्सार्थः [4]किमु त्यज्यते॥ ३७॥**

---

स्यात् । प्रागश्रूणि बिन्दुतया कपोलमूले पतन्ति, पश्चात्तत्र मिलितानि लुठल्लोलोदकतया परिणमन्तीति तात्पर्यार्थः ।

**प्रस्थानमिति** । अत्र गतमासितमित्यारम्भे क्तो नातीते । अतीतक्ते हि तयोरतीतत्वात्सुहृत्सार्थः किमु त्यज्यत इत्यत्रार्थासङ्गतिः स्यात् । जीवित प्रियेत्यामन्त्रणम्, इदं पदद्वयम् । प्रियेति तु सुहृद्विशेषणे प्रियसखैरिति विशेषणं न वाच्यं स्यात् । अथवा प्रियस्य पत्युर्मित्राणि वलयानि तद्भावभावित्वादिति यदा व्याख्या, तदा प्रिय इति सुहृद्विशेषणतया वाच्यम् । प्रियतमे अत्यन्तवल्लभे न तु भर्तरि । तदयं तात्पर्यार्थः— हे प्रिय! प्रियत्वादेव त्वं भण्यसे, पश्चादपि यातव्ये सुहृत्सार्थः किमिति त्यज्यते, पश्चान्महद्दुःखमनुभविष्यसीति किमु इति पदं काक्वा प्रश्नेन वा व्याख्येयम् । यदि च प्रियेण सनाथः सुहृत्सार्थः प्रियसुहृत्सार्थः इति मध्यमपदलोपी समासः । ततोऽयमर्थस्तावदेकः सुहृत्सार्थः अन्यश्च प्रिययुक्तः, तद्गन्तुमुचितमेवेत्यपि व्याख्या ।

---

[1] कपोलपालिगलितैः. [2] लुठल्लोलालकैः. [3] सर्वैस्समं प्रास्थितं.
[4] किमुत्सृज्यते.

त्वामालिख्य प्रणयकुपितां धातुरागैश्शिलायां
आत्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥ ३७ ॥

हास्यादीनां क्रमेणोदाहरणानि—

आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वरं प्रथितथूत्कमदात्प्रहारं
हाहा हतोऽहमिति रोदिति विष्णुशर्मा ॥ ३८ ॥

हा मातस्त्वरिताऽसि कुत्र किमिदं हा देवताः काशिषः
धिक्प्राणान् पतितोऽशनिर्हुतवह[1]स्तेऽङ्गेषु दग्धे दृशौ ।

---

**त्वामालिख्येति** । आत्मानमङ्घ्रिगतं यावदालेख्यतया साक्षादिव चेच्छामि तावदालेख्येऽपि साक्षादिव तद्विभावनादश्रूद्गमः । **तस्मिन्नपीति** । चित्रे । तथाऽत्र मनसैव तस्याश्चित्रविषयनयनं तस्य च पादविषयपतनं न बहिर्वर्णकादिभिः करणमित्यपि व्याख्यातम् । व्याख्याद्वयेऽप्यत्र सहृदयैः सारेतरता विभाव्या ॥

**आकुञ्च्येति** । अत्राशुचिं वामं अशुचिक्रियाकारणत्वात्पाणिम् ।

**हा मातरिति** । काश्मीरराजमातृमरणे भट्टनारायणकविकाव्यमिदम् । अशनिर्हुतवहो वज्राग्निः । मध्यं रुद्धं यथा ताभिस्तथा ।

---

[1] स्तेऽङ्गे प्रदग्धे (स्तेऽङ्गे सुदग्धे)

इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिरः
चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि॥३९॥

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिनां
अयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ ४० ॥

क्षुद्राः! संत्रासमेते विजहित [1]हरयः क्षुण्णशक्रेभकुम्भाः
[2]युष्मद्देहेषु लज्जां दधाति परममी सायका निष्पतन्तः ।
सौमित्रे! तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥४१॥

---

ततो घर्घरादित्रिपदकर्मधारयः । घर्घरा अव्यक्ताः ।

कृतमिति । अत्र नरकरिपुरच्युतः । किरीटी अर्जुनः ।

क्षुद्रा इति । विजहितेति जहातेः * पञ्चमीपरस्मैपदमध्यबहुवचने †'हाकः' इत्याकारस्येत्वम् । सौमित्रे इति । मातृतनयत्वेनावीरत्वं ख्याप्येत । वीरत्वादि हि पितुर्धर्मः, कौलीन्यादिकं च मातुः । मेघनाद इति । अत्र मेघनादे वक्तरि मेघनाद इत्यनुपयुज्यमानत्वाद्बाधितस्वार्थः स्ववाच्यभूतार्थगामित्वरूपात्सम्बन्धादिन्द्रजेतृत्वस्वर्गपर्यवस्कन्ददातृत्वाद्यर्थान्तरं लक्षयदनन्यसामान्यविक्रमादिकं ध्वनयति । इयं शुद्धा सारोपलक्षणा सादृश्यव्यतिरिक्तसम्बन्धान्तरजत्वात्, आरोप्यस्य मेघनादशब्दस्यारोपविषयस्याहंशब्दाभिधेयस्य चोक्तत्वात् । अत्र मेघ

---

[1] हरयो भिन्नशक्रेभकुम्भाः. [2] युष्मद्गात्रेषु

* लोट्परस्मैपदमध्यमपुरुषबहुवचन इत्यर्थः † हैमसूत्रम्. ४-२-१००.

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टश्शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैश्श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्र[1]प्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥४२॥

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ [2]पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठ[3]पिण्ड्याद्यवयवसुलभा[4]न्युग्रपूतीनि जग्ध्वा ।
[5]आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कात्
अङ्कस्था[6]दस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥४३॥

---

नादरूपं वाच्यं स्वपरत्वेनानुपात्तं, व्यङ्ग्यार्थान्तरपरिणतत्वात् । तस्मादविवक्षितमेव वाच्यं नात्यन्ततिरस्कृतं, व्यङ्ग्यार्थाधारेण तस्याप्युपयुक्तत्वात् । यदि वा शुद्धसाध्यवसानाऽपि लक्षणा स्यात् । तथाहि—अत्रारोपविषयः शक्रजेतृत्वादिरर्थं आरोप्येण मेघनादार्थेन विषयिणा निगीर्ण इति । एतच्च युक्तमिव व्याख्यानं भाति । यतो यत्र लक्ष्यलक्षणयोः विषयविषयिभावेन ताटस्थ्यं स्यात्तत्र सारोपत्वम् । पूर्वव्याख्याने तु न हि मेघनादनाहंभावो लक्ष्यते, किन्तु शक्रजेतृत्वादीति । अर्थान्तरं च लक्ष्यं कार्यम्, यत्र वाच्यं परिणम्यते न पुनर्व्यङ्ग्यम् । किञ्चित्संरम्भया लीलया क्रीडया बद्धाञ्चिम् । रमते क्रीडतीति व्युत्पत्त्याऽन्वितनामानं राममन्वेषयामीति ॥

अनुपततीति । पृष्ठापातिनि ।

उत्कृत्येति । अथेति सामस्त्ये चार्थे वा । स्थपुटगतं विषस्थानस्थमपि ।

---

[1] प्लुतित्वाद्वियति. [2] पृथूच्छोफभूयांसि. [3] पिण्डाद्यवयव.
[4] न्युग्रगन्धीनि. [5] आत्तस्नाय्वन्त्रनेत्रः पृथुतरजठरः प्रेत. [6] दस्थिशेषं.

चित्रं [1]महानेष बतावतारः
क्व कान्तिरेषाऽभिनवैव भङ्गिः ।
लोकोत्तरं धैर्यमहो प्रभावः
काऽप्याकृतिर्नूतन [2]एष सर्गः ॥ ४४ ॥

एषां स्थायिभावानाह —

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।**
**जुगुप्सा [3]विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥**

स्पष्टम् ॥

---

तत्र इत्यष्टौ रसास्सुखप्रधानाः, स्वसंविच्चर्वणरूपस्यैकघनस्य प्रीतिसारत्वात् । तथाहि—एकघनशोकसंविच्चर्वणेऽपि लोके स्त्रीलोकस्य हृदयविश्रान्तिरन्तरायशून्यविश्रान्तिशरीरत्वात् । अविश्रान्तिरूपैतव च दुःखम्, तत एवाहुः कापिला रजोवृत्तितां वदन्तो दुःखस्य चाञ्चल्यमेव प्राणा इति । तस्मादानन्दरूपास्सर्वरसाः किन्तूपरञ्जकविषयवशात्केषामपि कटुतास्पर्शोऽस्ति वीरस्येव । स हि क्लेशसहनादिप्राण एव ।

रतीत्यादि । अन्योन्यास्थाबन्धात्मिका **रतिः** । चित्तस्य विकासो **हासः** । वैधुर्यं **शोकः** । तैक्ष्ण्यप्रबोधः **क्रोधः** । स्थेयान् संरम्भ **उत्साहः** । वैक्लब्यं **भयम्** । सङ्कोचो **जुगुप्सा** । विस्तरो **विस्मयः** ।

तत्रैषां विभावानुभावव्यभिचारिणः कथ्यन्ते—मिथःस्त्रीपुंसा-

---

[1] महानेष तवावतारः. [2] एव सर्गः. [3] विस्मयश्चाष्टौ स्थायि.

वलम्बनरूपतदुपयोगिपवनारामचन्द्रार्कोदयास्तजलक्रीडाद्युद्दीपनरूपवि-भावा सम्भोगे सुखमयहर्षादिव्यभिचारिणी रोमाञ्चस्वेदाश्रुकम्पश्वसितकेशबन्धांशुकसंयमनभूषामाल्यादिसम्यङ्निवेशचाटुप्रभृत्यनुभावा, विप्रलम्भे तु दुःखप्रायशङ्कौत्सुक्यमदग्लानिनिद्रानिर्वेदमरणादिव्यभिचा-रिणी सन्तापजागरकृशताविलापदीनवचनलेखनवाचनवातप्रिक्षमरणोद्य-मसन्देशाद्यनुभावा रतिर्जुगुप्सालस्यौग्र्यवर्जिता शृङ्गारः। स्थायी चर्व-णतां गतो रसस्स्यात् इति सर्वत्र ज्ञेयम्। यद्यपि रतिश्रमकृतं निद्रादि सम्भोगेऽप्यास्ति, तथापि तद्गतौ चित्रतामाधत्ते। विप्रलम्भे तु तद्गतिभाव-नापरम्परोदितमेवेति युक्तमेवात्र सुखमयत्वम्। विप्रलम्भे च मरण-मचिरकालप्रत्यापत्तिमयमिष्टं, येन न शोकावेशः। अथवा चैतन्या-वस्थितैव प्राणत्यागकर्तृतात्मिका पूर्वक्रियैव पाशबन्धाद्यवसरगता मन्तव्या, न तु प्राणत्यागः। तथा विप्रलम्भे उन्मादापस्माराव्या-धीनां या नात्यन्तं कुत्सिता दशा सा काव्ये नाट्ये च दर्शनीया। यदि वा तादृश्यां दशायां स्वजीवितनिन्दात्मिकायां तद्देहोपभोग-साररत्यात्मकस्थो बन्धादिर्विच्छिद्यत एवेति कुत्सितदशाया असम्भ-व एव।

विकृतकेशबन्धवेषनर्तनगत्यनुकरणभूषणन्यासोद्घट्टनादिविभावो नासौष्ठकपोलस्पन्दननेत्रविकासमुखरागपार्श्वग्रहणाद्यनुभावः त्रपावहि-त्थनिद्रालस्यादिव्यभिचारी हासो हास्यः। स आत्मस्थ उत्तममध्यमा-

धर्मेषु स्मितविहसितापहसितैस्त्रेधा । *तत्र कपोलोल्लासमात्रमदृश्यदन्तं स्मितम् । मधुरं सस्वनं सास्यरागं कालागतं विहसितम् । निर्हेतुकं साश्रुनेत्रं कम्पितांसशिरस्कमपहसितम् । एतेषां स्मितादीनां क्रमेण सङ्क्रमजैर्हसितोपहसितातिहसितैः परस्थमपि त्रेधा । उपहसितातिहसितयोरुपसर्गभेदेनार्थभेदः । उत्फुल्लास्यनेत्रं विकासिगण्डं किञ्चिद्दृश्यदन्तं हसितम् । उत्फुल्लनासं विजिह्मदृष्टिनिरीक्षणं निकुञ्चितांसशिरस्कमुपहसितम् । ससंरम्भसाश्रुनेत्रमुद्धतं सशब्दं सकराघातमतिहसितम् । **अयं भावः—परं** हसन्तं दृष्ट्वा स्वयं विभावानपश्यन्नपि हसन् लोके दृष्टः, तथा विभावदर्शनेऽपि गाम्भीर्यात्कोऽपि न हसति, परहासेक्षणे च तत्क्षणं हसति । **यथा** अम्लदाडिमादिरसास्वादोऽन्यत्रापि दन्तोदकविकारानुरूपदर्शनात्सङ्क्रमणस्वभावः, तथा हासोऽपि सङ्क्रामति, नान्ये रसाः । यस्तु स्वामिशोकात् भृत्यस्य शोकः सोऽन्य एव शोकवत्स्वामिविभावको विभावभेदात् । इह च तद्विभावक एव हासः सङ्क्रामतीत्यर्थः ।

इष्टानिष्टवियोगसंयोगाविभावो निश्वासमुखशोषाश्रुपातभूलुठनाक्रन्दाद्यनुभावो निर्वेददैन्यविषादमरणादिव्यभिचारी शोकः करुणः ।

दारापहारदेशजातिविद्यानिन्दाक्रोशादिविभावो नेत्ररागभ्रुकुटीकरणदन्तौष्ठग्रहणाद्यनुभावः औग्र्यावेगामर्षादिव्यभिचारी क्रोधो रौद्रः ।

विपक्षगतनयासंमोहाध्यवसायप्रतापविक्रमाधिक्षेपादिविभावः

---

* ईषद्विकसितैर्गण्डैः कटाक्षैस्सौष्ठवान्वितैः । अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥ आकुञ्चिताक्षिगण्डं यत्सस्वनं मधुरं तथा । कालागतं सास्यरागं तद्वै विहसितं भवेत् ॥ अस्थानहसितं यत्तु साश्रुनेत्रं तथैव च । उत्कम्पितांसकशिरस्तच्चापहसितं भवेत् ॥ अत्रेमानि भरतमुनिपद्यान्यनुसन्धेयानि ।

स्थैर्यधैर्यगाम्भीर्यत्यागाद्यनुभावो धृतिस्मृतिगर्वामर्षादिव्यभिचार्युत्साहो वीरः । स च त्रेधा धर्मदानयुद्धभेदात्* । धर्मादित्रयं तु विपक्षगतं साद्विभावरूपं स्यात्, स्वपक्षगतं त्वनुभावरूपमिति । इह च विपत्पङ्कनिमग्नतास्वल्पसंतोषमिथ्याज्ञानान्यपास्य यस्तत्वनिर्णयरूपोऽसंमोहाध्यवसायः स एवोत्साहहेतुः प्राधान्येन । रौद्रे तु ममत्वाप्राधान्यादशास्त्रितानुचितयुद्धाद्यपीति मोहविस्मयप्राधान्यमिति विवेकः ।

पिशाचादिविकृतस्वरश्रुतितद्दृष्टिशून्यगृहारण्यगमनादिविभावं करहृत्पादकम्पमुखमालिन्याद्यनुभावं शङ्कादैन्यादिव्यभिचारि स्त्रीनीचादीनां सहजमुत्तमानां कृतकं भयं भयानकः । उत्तमा हि भयाभावेऽपि गुरुराजादिभ्यो भयं दर्शयन्तः सुतरामुत्तमास्स्युः । प्रभुभक्तिश्च सचिवादीनां, यथा स्वेच्छाचारी भीत एवास्मीति । ननु राजादयः किमिति गुर्वादिभ्यः कृतकं भयं दर्शयन्तो मृदून् करकम्पादीन् दर्शयन्ति । किमिति च भय एव कृतकत्वं, सर्वस्य हि कृतकत्वं सम्भवति, यथा †वेश्याऽर्थिनां कृतकां रतिं स्पष्टयति । उच्यते–नये हि दर्शिते गुरुर्विनीतं मन्यते, मृदुचेष्टया नाधमप्रकृतिमेनं गणयति । कृतकरत्यादेश्चोपादिष्टान्न किञ्चित्फलम् । यत्र तु राजा परानुग्रहाय क्रोधविस्मयादीन् दर्शयति, तत्र व्यभिचारितैव तेषां, न स्थायितेति ।

वमनव्रणपूतिविष्ठाकृमिकीटादिदर्शनश्रवणादिविभावा गात्रसङ्कोचहृल्लासनासाविकूणनपिधानथूत्काराद्यनुभावा मोहापस्मारौग्र्चादिव्यभिचारिणी जुगुप्सा बीभत्सः ।

---

* दानवीरं धर्मवीरं युद्धवीरं तथैव च । रसं वीरमपि प्राह ब्रह्मा त्रिविधमेव हि ॥ अत्रायं भरतमुनिश्लोकोऽनुसंधेयः. † वेश्याऽर्थिनी कृतकां.

दिव्यविमानमायेन्द्रजालावदातकर्मेप्सितावाप्तिप्रभृतिविभावो नि-र्निमेषाक्षिविकासरोमाञ्चप्रीत्यश्रुसाधुवादप्रसाददानाद्यनुभावो हर्षावेग-जाड्यादिव्यभिचारी विस्मयः अद्भुतः। भावयन्ति व्याप्नुवन्ति सभ्यानां मन इति भावाः। यद्वा लोकोत्तरवाचिकाद्यभिनयैश्चित्तवृत्तय एव भावयन्ति लोकदशायामनास्वाद्यमप्यास्वाद्यं स्वं कुर्वन्तीति भावाः, स्थायिनो व्यभिचारिणश्च। जात एव हि जन्तुरल्पाभिस्संविद्भिर्युज्यते। तथाहि—दुःखद्वेषी सुखलुब्धः सर्वोऽपि रिरंसते, हसति, शङ्कया शोचति, परस्मै कुप्यति, हितायोत्सहते, बिभेति, परं जुगुप्सते, ततश्च स्वपरकर्तव्यवैचित्र्यदर्शनाद्विस्मयते, केवलं कस्यचित् काचिदधिका चित्तवृत्तिः, काचिदूना, कस्यचिदुचितविषयनियन्त्रिता, कस्याप्यन्यथा, तत्काचिदेवोपयोगिनीत्युपदेश्या, तद्विभागकृतश्चोत्तमादिव्यवहारः। ये त्वमी व्यभिचारिणस्ते रसायनमुपयुक्तवतो ग्लान्यालस्यश्रमप्रभृतयो जन्ममध्ये न भवन्त्येव। यस्यापि वा विभावबलाद्भवन्ति तस्यापि हि हेतुक्षये क्षीयमाणाः संस्कारशेषतां नावश्यमनुबध्नन्ति। रत्यादयस्तु कृतस्वकर्तव्यतया संस्कारशेषतां नातिवर्तन्ते, वस्त्वन्तरविषयस्य रत्यादेरनुच्छेदात्। तस्मात् स्थायिरूपभावसूत्रस्यूता एवामी स्वमुदयास्तमयवैचित्र्यशतसहस्रधर्माणं लभमानाः स्थायिनं विचित्रयन्तो भान्तीति व्यभिचारिणः। तथाहि—ग्लानोऽयमित्युक्ते कुत इति हेतुप्रश्नेनास्थायिता अस्य सूच्यते, न तु राम उत्साहशक्तिमानित्यत्र हेतुप्रश्नमाहुः। अत एव विभावास्तत्रोद्बोधकास्सन्तस्स्वरूपोपरञ्जकत्वं कुर्वाणा रत्युत्साहादे-

व्यभिचारिणो ब्रूते—

निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता [1]मोहः स्मृतिर्धृतिः ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं [2]निद्राऽपस्मार एव च ॥३२

रुचितानुचितत्वमावहन्ति, न तु ते। तदभावे स्थायिनः सर्वथैव निरुपाख्याः, वासनात्मतया तेषां स्थितत्वात् । व्यभिचारिणां स्वविभावाभावे नामापि न स्यात् । तथा एषां विभावबहुत्वे स्थायित्वं, तदल्पत्वे तु व्यभिचारित्वम् । यथा रावणादौ मिथःप्रतीत्यभावात् रतिर्व्यभिचारिणी, तथा गुर्वादिषु च वीरशृङ्गारादौ रोषो व्यभिचार्येव । एवं भावान्तरेषु वाच्यम् ॥

**निर्वेदः** स्वावज्ञा । **ग्लानिः** बलापचयः । **शङ्का** अनिष्टोत्प्रेक्षा । **असूया** अक्षमा । प्रीतिसंमोहसंभेदो **मदः** । **खेदः** श्रमः । कार्येष्वनादर **आलस्यम्** । **दैन्यं** अनौजस्यम् । **चिन्ता** ध्यानम् । **मोहो** मूढता । **स्मृतिः** स्मरणम् । **धृतिः** संतोषः । **व्रीडा** मनस्सङ्कोचः । **चपलता** चेतोऽनवस्था । **हर्षः** चित्तप्रसत्तिः । **आवेगः** सम्भ्रमः । **जडता** अर्थाप्रतिपत्तिः । **गर्वः** परावज्ञा । **विषादः** चित्तपीडा । **औत्सुक्यं** विलम्बाक्षमत्वम्। **निद्रा** मनस्संमीलनम्। **अपस्मारः** आवेशः।

[1] मोहो धृतिस्स्मृतिः [2] निद्रा विस्मृतिरेव

[1]सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ ३३ ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः॥३४

निर्वेदस्य अमङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादानं व्यभिचारित्वेऽपि स्थायिताभिधानार्थम् ।

---

**सुप्तं** निद्रागाढावस्था । **विबोधो** विनिद्रता । **अमर्षः** प्रतिकर्तुमिच्छा । **अवहित्थं** आकारगोपनम् । **उग्रता** चण्डत्वम् । **मतिः** अर्थनिर्णयः । **व्याधिः** मनस्तापः । **उन्मादः** मनोविप्लवः । **मरणं** म्रियमाणता । **त्रासः** चित्तचमत्कारः । **वितर्कः** सम्भावनम् । त्रयस्त्रिंशदिति नियमार्थम् । तेनान्येऽत्रैवान्तर्भवन्ति । तथा हि—दम्भोऽवहित्थे, उद्वेगो निर्वेदे, क्षुत्तृष्णादि ग्लानौ । अन्ये त्वेवमाहुः—त्रयस्त्रिंशतैव स्थायी चर्वणायोग्यः स्यादिति त्रयस्त्रिंशदित्युक्ताः । एषां विभावानुभावाः स्वयमूह्याः, न तु व्यभिचारिणः । एवं हि तदास्वादे रसान्तरमपि स्यात् । यत्रापि व्यभिचारिणि व्यभिचार्यन्तरं स्याद्यथा, पुरूरवस उन्मादे वितर्कचिन्तादि, तत्रापि रतिस्थायिभावस्यैव व्यभिचार्यन्तरयोगः, स वितर्कादिः केवलमुन्मादेन कृतोपराग इति । एते च मिथः क्वापि विभावानुभावा भवन्ति । तथाहि—गर्वोऽध्यात्मशास्त्रावेक्षणाद्यनुभावः आवेगजोऽसूयाकृत् इत्यादि ॥ निर्वेदस्येति आदौ न्यासः स्थायिनामन्ते नैकट्येन सामीप्यार्थम् ।

---

[1] स्वप्नं प्रबोधो

तेन—

[1]निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः।

यथा—

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा।
तृणे वा स्त्रैणे वा मम समदृशो [2]यान्ति दिवसाः
[3]क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ॥ ४९ ॥

---

तेनेति। वैराग्यतत्वज्ञानसर्वज्ञानुग्रहादिविभावो यमनियमाध्यात्मशास्त्रेक्षणाद्यनुभावो धृतिस्मृत्यादिव्यभिचारी निर्वेदस्थायी भावः शान्तः। न चायं विषयजुगुप्सारूपत्वात् भीभत्सेऽन्तर्भावयितुं युक्तः। विषयजुगुप्सा ह्यस्य व्यभिचारिणी, न तु स्थायितामेति। तस्या निर्वाहे मूलोच्छेदात्। न च धर्मवीरे, अहमेवंविध इत्येवं प्राणोत्साहरूपतया तस्य गर्वमयत्वेन व्यवस्थानात्। अस्य च गर्वप्रशमैकरूपत्वात्। ईहामयत्वनिरीहत्वाभ्यां विरुद्धयोरपि तयोरैक्ये क्रमेण कामार्थधर्मार्जनोपयोगेन तुल्यरूपत्वादविरुद्धयो रौद्रवीरयोरप्यैक्यप्रसङ्गः। धर्मवीरादीनां चित्तवृत्तीनां सर्वथा निरहङ्कारत्वे शान्तरसभेदत्वम्, इतरथा तु वीररसभेदत्वमिति व्यवस्थायां न कश्चिद्दोषः। तथा—यथा धर्मार्थकामेषु योग्या रत्यादिचित्तवृत्तयः कविनटव्यापारेणास्वाद्यतां नीतास्ताद्दृग्हृदयसंवादवतः सभ्यान् प्रति रसत्वं यान्ति, तथा मोक्षाख्यपरा-

---

[1] निर्वेदस्थायिभावाख्यश्शान्तोऽपि [2] यान्तु दिवसाः [3] क्वाचित्पुण्यारण्ये

र्थौचिताऽपि निर्वेदरूपा चित्तवृत्ती रसतां यातीति। तथा चास्य निर्वेदस्थायिनो लौकिकरत्यादिलोकोत्तरश्रृङ्गारादिरूपा चित्तवृत्तिः सर्वाऽपि व्यभिचारिणी, तदनुभावा एव च यमनियमाद्युपकृता अनुभावाः विभावा अपि सर्वज्ञानुग्रहाद्याः प्रक्षयोन्मुखाश्च रत्यादयोऽत्र स्वाद्यन्ते। परं यथा विप्रलम्भे औत्सुक्यं संभोगेऽपि वा प्रेमासमाप्तोत्सवमिति, यथा च रौद्रवीरभयानकाद्भुतेषु क्रमेणौग्र्यधृतित्रासहर्षा व्यभिचारिणोऽपि प्राधान्येन भान्ति, तथा शान्ते जुगुप्साद्याः, सर्वथा रागविपक्षत्वात्। स्वात्मनि कृतकृत्यस्य परार्थ एवोद्यम इत्युत्साहोऽस्य परोपचिकीर्षाप्रयत्नरूपो दयापरपर्यायोऽभ्यधिकोऽन्तरङ्गः। अत एवान्ये दयाधर्मवीरत्वाभ्यामेनमूचुः। ननूत्साहो गर्वप्राणः शान्तस्तु गर्वशैथिल्यात्मा। ननु किमतः? व्यभिचारित्वं हि विरुद्धस्यापि नायोग्यं, रताविव निर्वेदादेः। परोपकारक्रियायामुत्साहस्यैव प्रकर्षः। न चोत्साहशून्या काऽप्यवस्था। इच्छाप्रयत्नव्यतिरेकेण पाषाणतापत्तेः। यत एव शान्तात्मा तत्वज्ञतया स्वात्मोद्देशेन कार्यविमुखः, अत एव परोपकाराय शरीरादि त्यजति। चिन्तयति चैवं यथा कथञ्चित्त्याज्यं शरीरं यदि परार्थं त्यज्यते तत्किमिव नार्जितं स्यात्, इति। तदिदं तत्वम्—तत्वज्ञानितया शान्तात्मा परार्थे निराकाङ्क्षतया शरीरादि त्यजति। अत एव युद्धवीरः स्वदेहत्यागं परविजयोद्देशेन कुर्वाणो न शान्तात्मा। भृग्वादिपात्यपि शुभान्यदेहमाकाङ्क्षुः पूर्वदेहत्यागेऽपि न तथा। तदत्र दयारूपोऽभ्युत्साहः प्रधा-

नम् । अन्येऽपि व्यभिचारिणो यथायोग्यं स्युः । ननु नायं सर्वस्य श्लाघास्पदं, तत्कथं रसः । तर्हि मुनीनां शृङ्गारोऽपि न श्लाघ्य इति सोऽपि रसत्वात् च्यवताम् । यैरपि तृष्णाक्षयरूपस्थाय्यसावुक्तः, तन्मते तृष्णाया क्षयोऽभाव इत्यायातम् । तदभावेऽपिच रत्यादि-चित्तवृत्तीनामप्यभावः, तृष्णाविकारत्वात्तासाम् । एतच्चित्तवृत्त्यभाव-एव यदि शमस्तदा शमस्य चित्तवृत्तित्वाभावः, अभावस्यावस्तुत्वात् । अथाधर्म इत्यत्र धर्मविरोधि पापं लभ्यते न धर्माभावो यथा, तथापि तृष्णात्मरत्याद्यभावो रत्यादिचित्तवृत्तिविरोधी चित्तवृत्तिविशेषः तदाऽस्मन्मते तस्य निर्वेद इति नाम, तन्मते तु शम इति । अनधिकारकत्वेन तु शान्तो रसो न निबध्यत इति चन्द्रिका । तदेवं नवैव रसाः, पुमर्थोपयोगेन रञ्जनाधिक्येन चोपदेश्यत्वात् । तेनार्द्रतास्थायी स्नेहो रसः, गर्धस्थायि लौल्यं रस इत्यसत् । तयोः क्रमेण रत्यादौ हासरत्यादौ चान्तर्भावात् । तथाहि—तरुणस्य मित्रे स्नेहो रतौ, लक्ष्मणादेर्भ्रातरि स्नेहो धर्मवीरे, बालस्य मात्रादिषु वृद्धस्य पुत्रादिषु स्नेहो भये विश्रान्तः । तदिदमत्र तात्पर्यं—स्नेहः भक्तिः वात्सल्यं मैत्री आबन्ध इति रतेरेव विशेषाः । तुल्ययोर्या मिथो रतिः स स्नेहः, प्रेमेति यावत् । तथा तयोरेव निष्कामतया मिथो रतिः सा मैत्री । अवरस्य वरे रतिर्भक्तिः । सैव विपरीता वात्सल्यम् । सचेतनानामचेतने रतिराबन्ध इत्यादि स्वयमूह्यम् । विस्तरविचारस्तु कोहललोचनादिग्रन्थात् ज्ञेयः ।

**रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः ॥३५**

**भावः प्रोक्तः,**

आदिशब्दात् मुनिगुरुनृपपुत्रादिविषया । कान्ताविषया तु व्यक्ता शृङ्गारः ॥

उदाहरणम्—

कण्ठकोणविनिविष्टमीश ते
कालकूटमपि मे महामृतम् ।
[1]अप्युपात्तममृतं भवद्वपु-
र्भेदवृत्ति [2]यदि मे न रोचते ॥ ४६ ॥

हरत्यघं संप्रति हेतुरेष्यतः
शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥ ४७ ॥

[3]एवमन्यदप्युदाहार्यम् । आञ्जितव्यभिचारी यथा—

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
[4]मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः ।

---

कान्तादिविषया रतिः शृङ्गारः, देवादिविषया व्यक्ता सती भावो व्यभिचारी चेत्याह—रतिरिति ।

जाने इति । अत्र गन्तुं प्रवृत्तेत्यर्थौचित्यादाश्वासयामीत्यत्र

---

[1] अप्युदात्त [2] यदि रोचते न मे [3] एवमन्यदुदाहार्यम् । व्यभिचारी यथा–
[4] मा मा संस्पृश

नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियां
भ्रान्तस्तावदहं शठेन विधिना [1]निद्रादरिद्रीकृतः ॥ ४८ ॥

अत्र विधिं प्रत्यसूया ।

## तदाभासा अनौचित्यप्रवर्तिताः ।

तदाभासाः रसाभासा भावाभासाश्च ।

तत्र रसाभासो यथा—

स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे ।
सुलग्ने को जातश्शशिमुखि यमालिङ्गसि बलात्
तपश्श्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥ ४९ ॥

अत्रानेककामुकविषयमभिलाषं तस्याः स्तुम [2]इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति ।

भावाभासो यथा—

---

आश्विति भिन्नं व्याख्येयम् । गच्छन्त्या हि प्रागासनं पश्चादाश्वासनं युक्तम् । शठेनेत्यर्थसाहाय्यादन्यपदार्थानां व्यञ्जकत्वम् ।

स्तुम इति । विलेभे व्यथितवानिति । अत्रानेकेति । स्तुमः कमित्याद्यनुगतमेकस्त्रीविषयं रमणमृगणालिङ्गनध्यानरूपं बहुव्यापारग्रहणं कर्तृ बहुकामिविषयं प्रेम व्यनक्ति । तच्च प्रेमानुचितं, अन्योन्यास्थाबन्धात्मिकाया रतेः शृङ्गारत्वप्रतिपादनात् ।

---

[1] निद्रादरिद्रः कृतः. [2] इत्याद्यनुचितं.

राकासुधाकरमुखी तरलायताक्षी
[1]सा स्मेरयौवनतरङ्गितविभ्रमास्या ।
तत्किं [2]करोमि विदधे कथमत्र मैत्रीं
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥ ९० ॥

अत्र चिन्ता अनौचित्यप्रवर्तिता । एवमन्येऽप्युदाहार्याः ॥

राकेति । अत्र स्मेरयौवनेन तरङ्गितविभ्रमा आस्या अवस्थानं यस्यास्सा तथा, न तु तरङ्गितविभ्रमं आस्यं, पौनरुक्त्यात् । त्यदो वा स्येति रूपम् । अत्र चिन्तेति । अत्र नार्याः परपत्नीत्वचिन्ता इहानौचित्यप्रवृत्ता । नन्वेकपाक्षिक्या रतेः सद्भावाद्र-साभासत्वं युक्तं वक्तुं, न चिन्ताविभावानाम्, प्राधान्येन तस्या एव चमत्कारित्वात् । 'प्राधान्येन च व्यपदेशा भवन्ति' इति भावाभासत्वम् । **अयं भावः**—यद्यपि रसेनैव काव्यं जीवति, तथापि तस्य रसस्य नानाद्रव्यजपानकस्येवैकघनास्वादात्मनोऽपि कुतश्चिदंशाद्भावादिरूपा-दुद्रिक्तावस्थामापन्नाच्चमत्कारातिशयो भवति यदा, तदा भावादिध्वनि-रेव । यदा तु विभावाभासाद्रत्याद्याभासः, तदा विभावानुभावाभा-साच्चर्वणाभास इति रसाभासः । एवं भावाभासोऽपि । रसध्वनेरेवामी रसभावाभासध्वनिप्रभृतयो निष्यन्दाः आस्वादे प्रधानं प्रयोजक-मंशं विभज्य पृथक् व्यवस्थाप्यन्ते, यथा पानकयुक्तिज्ञैरेकसंमूर्छित-रसोपभोगेऽपि सुपरिशुद्धद्राक्षायां प्रयुक्तोऽयं रस इति । तथा निरिन्द्रियलतातरुनदीशैलादेः सेन्द्रियपश्वादेश्च यः काव्ये कामादि-व्यवहारः तत्र रसभावाभासता । एवमन्येऽपीति । रसाभासा भावाभासाश्चेत्यर्थः ।

[1] सस्मेर. [2] करोमि कथमत्र तनोमि मैत्रीं.

भावस्य शान्तिरुदयः सन्धिश्शबलता तथा ॥

क्रमेणोदाहरणानि—

तस्यास्सान्द्रविलेपन[1]स्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यनिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
संश्लिष्टा रभसेन तत्सुख[2]वशात्तन्व्या च तद्विस्मृतम् ॥

अत्र कोपस्य ।

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यो [3]मानपराङ्मुखग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं [4]स्थितस्तत्क्षणं
मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ ९२ ॥

अत्रौत्सुक्यस्य ।

उत्सिक्तस्य तपःपराक्रम[5]निधेरभ्यागमादेकतः
सत्सङ्गप्रियता च [6]वीररभसोल्लासश्च मां कर्षतः ।

---

तस्या इति । स्तनतटस्य प्रश्लेषेण या मुद्रा प्रतिबिम्बं तयाऽङ्कितम्, अन्यदपि यद्वस्तु मुद्राङ्कितं तत्केनापि व्याजेन रक्ष्यत इत्युक्तिलेशः । अत्र स्त्रीकोपस्य शान्तिः ।

**एकस्मिन्निति** । मानेन कोपेन पराङ्मुखी चासौ ग्लापिता च । सुप्त इव प्रार्थनाविमुखः । अत्र स्त्रीगतौत्सुक्यस्योदयः ।

**उत्सिक्तेति** । गर्वात्तपोविक्रमयोरुत्कर्षसम्भावना। सत्सङ्गप्रियता तपोनिधित्वात् । वीररभसोल्लासश्च पौरुषनिधित्वात् । पूर्वस्मिन्नर्धे

---

[1] स्तनयुगप्रश्लेष. [2] वशात्तस्याश्च. [3] मानपरिग्रहग्लपितया. [4] स्थितस्तत्क्षणात्. [5] निधेरभ्युद्गमादेकतः. [6] वीरभसोत्फालश्च.

वैदेहीपरिरम्भ [1]एष च मुहुश्चैतन्यमामीलयन्
आनन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः ॥

अत्रावेग[2]हर्षयोः ।

[3]क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
[4]दोषाणां [5]प्रशमाय नश्श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृति[6]चिन्तानाम् । भावस्थितिस्तूक्ता, उदाहृता च जाने कोपपराङ्मुखीत्यादिना ।

**मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ।**

---

आवेगः, अपरस्मिन् हर्षः, तयोस्सन्धिः तुल्यतया मिथोऽनाबाधया च स्थितिः । अत एव च प्रियता चोल्लासश्चेत्यत्र चकारद्वयम् ।

क्वाकार्यमिति । अत्र किंशब्दः कुत्सार्थः प्रश्नार्थश्चावृत्त्या व्याख्येयः । तथाऽत्र वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये धृतिचिन्तने मिथो बाध्यबाधकतया तिष्ठन्ती चिन्तायामेव पर्यवस्यन्ती परमास्वादस्थानम्। वितर्कादीनां शबलतेति योगः। भावस्थितिरिति। रतिर्देवादीत्यत्र भावस्य स्थितिरेव केवलोक्ता, न शान्त्यादिविशेषेण विशिष्टा ।

ननु मुख्यस्य रसस्यैवाङ्गित्वं वक्तुं युक्तं, तत्कथं भावप्रशान्त्यादीनां तदुक्तमित्याह—मुख्ये रसेऽपीति ।

---

[1] एष बहुशश्चैतन्य. [2]हर्षयोः सन्धिः । [3] क्वाकृत्यं.
[4] दोषाणामुपशान्तये. [5] प्रशमाय मे श्रुत [6] चिन्तानां शबलता

ते भावशान्त्यादयः । [1]अङ्गित्वं राजानुगतविवाहप्रवृत्तभृत्यवत् ।

**अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥**
**शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः।**

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः, अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यः, उभयशक्तिमूलानुरणनरूपश्चेति [2]त्रिविधः । तत्र—

**अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ॥**
**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ।**

[3]वस्त्वेवेत्यनलंकारं वस्तुमात्रम् । आद्यो यथा—

उल्लास्य कालकरवालमहाम्बुवाहं

---

अलक्ष्यक्रममुक्त्वा लक्ष्यक्रमं त्रिधा ध्वनिमाह—**अनुस्वानाभेति** । वाच्योऽर्थो घण्टाघातायते, व्यङ्ग्यस्त्वनुरणनायत इति स्थित्या व्यङ्ग्यमनुरणनरूपम् । **तत्रेति** । तेषु मध्ये ।

शब्दमूलमाह—**अलङ्कार इति** । **वस्त्वेवेति** । रसस्यालक्ष्यक्रमत्वेन पूर्वमुक्तत्वाद्वस्तुनश्च लक्ष्यक्रमत्वेनात्राभिधीयमानत्वादलङ्कार एव व्यवच्छेद्यतयाऽवशिष्यते, अतोऽनलंकारमित्युक्तम् । **प्रधानत्वेनेति** । शब्दस्य मुख्यतया व्यञ्जकत्वमर्थस्य तु सहकारितयेति भावः ।

**उल्लास्येति** । शत्रुविषये संतापकत्वं प्रसिद्धः प्रतापः ।

---

[1] आङ्गित्वं च राजानुगत. [2] त्रिधा. [3] वस्त्वेवेत्यलंकारभिन्नं वस्तुमात्रं.

देवेन येन जरठोर्जितगर्जितेन ।
निर्वापितस्सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥ ९९ ॥

अत्र यदा राजवर्णनप्रस्तावान्नियमिताभिधाः कालादिशब्दा एकमेवार्थमुक्त्वा सार्थकाः, अनन्तरं त्वर्थान्तरप्रतीतिः शब्दोत्थध्वननादेवेति मेघवृत्तान्तरूपवस्तुध्वनित्वम् । यदा तु ध्वन्यवाच्यार्थयोर्वाक्यार्थस्यासम्बद्धार्थाभिधायकत्वमित्यादिनयेन मिथस्सङ्गतिस्स्यात्तदाऽलंकारध्वनित्वमपि । अयं भावः—सादृश्यरूपेणार्थसामर्थ्येन द्वितीयाभिधैव प्रतिप्रसूयते । ततश्च द्वितीयोऽर्थ उच्यत एव न ध्वन्यते । तदनन्तरं तु तस्य द्वितीयार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्रकृतेन साकं या रूपणा सा तावद्विभात्येव । न चान्यतः साशब्दादिति ध्वननव्यापारात्तत्राभिधाशक्तेः कस्याश्चिदनाशङ्क्यत्वादिति प्रकृताप्रकृतवाक्यार्थयोः साम्यं देवो देव एवेति रूपं ध्वन्यते । अत्र पक्षे पदैः प्रस्तावनियमिते मेघवृत्तान्तोचिताः पदार्था उच्यन्ते । ततः प्रस्तावस्य शब्दशक्त्या वाक्योपपत्तिसहायया न्यक्कृतिर्जायते । ततो मेघवृत्तान्तोचितवाक्यार्थप्रतिपत्तिः । ततो वाक्यार्थद्वयस्य साम्यं, व्यञ्जनव्यापारात् । यदा तु पदसमूह एव शब्दशक्त्या मेघवृत्तान्तं व्यनक्तीति वाक्यार्थः तदा वस्तुध्वनिरेव । अलङ्कारध्वनिपक्षे श्लेषोऽर्थाक्षिप्तो न शब्दोपारूढ इति साम्यध्वनिरेवेति न श्लेषविषयता। यदा तु प्रस्तावादिनियमो न स्यात्तदा द्वयोरप्यर्थयोर्वाच्यत्वे श्लेषालङ्कार एव, न शब्दोत्थवस्त्वलङ्कारध्वनित्वम् । देवेनेति । एकत्र

अत्र वाक्यस्यासंबद्धार्थाभि[1]धायकत्वं मा [2]प्रसाङ्क्षीदिति प्राकरणिकप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमालङ्कारो व्यङ्ग्यः ।

तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः ।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥

अत्रैकैकस्य पदस्य द्विपदत्वे विरोधाभासः ।

अमितस्समितः प्राप्तैरुत्कर्षै[3]र्हर्षद प्रभो ।
अहितः सहितः साधुयशोभिरसतामसि ॥ ९७ ॥

अत्रापि विरोधाभासः ।

---

प्रस्तावात्त्वया, अन्यत्रेन्द्रेण, इन्द्रो वै वर्षतीति । एवं 'भद्रात्मनः' इत्यादिष्वपि ।

तिग्मरुचिरिति । अत्र समासे सत्यैकपद्यं विरोधत्यागश्च । असमासे तु द्विपदत्वं विरोधश्च । तथाहि—यस्तिग्मरुचिः सूर्यः स कथं अप्रतापः । यो विधुश्चन्द्रः स कथमनिशाकृत् । यश्च मधुश्चैत्रः स कथमलीलः । यश्च मतिमान् स कथमतत्त्ववृत्तिः । या च प्रतिपत् सा कथमपक्षाग्रणीः पक्षस्यानादिः । जनं विधुरयन्तीति विधुरा रिपवः तेषां निशाकृत् मृत्युकृत् । मतौ माने तत्त्वे च तानि वा मतिमानततत्त्वानि वृत्तिर्यस्य । प्रतिपदं प्रतिप्रयोजनम् । पक्षस्य निजस्य ।

अमित इति । समितः सङ्ग्रामात् प्राप्तैरुत्कर्षैरहि-

---

[1] धायित्वं. [2] प्रसाङ्क्षीदिति प्राकरणिकाप्राकरणिकयोः [3] हर्षद प्रभो.

**निरुपादानसंभारमभित्तावेव तन्वते ।**
**जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥ ९८ ॥**

**अत्र व्यतिरेकः । अलंकार्यस्यापि ब्राह्मणश्रमणन्यायेनालंकारता । वस्तुमात्रं यथा—**

**पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्तरत्थले गामे ।**
**उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु ॥९९॥**

(छाया—पथिक नात्र स्रस्तरमस्ति मनाक्प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं दृष्ट्वा यदि वससि तदा वस ॥)

---

तानां हर्षदः प्रीतिच्छेदी । अत्र दृष्टान्तद्वयेऽपि द्योतकस्यापिशब्दादेरभावाद्विरोधो व्यङ्ग्यः । अत्र पदयोर्भिन्नयोरेव विरोध इति पूर्वोदाहरणाद्भेदः ।

**निरुपादानेति** । उपादानं वर्णकादि । अभित्तौ निराश्रयत्वात् । चित्रं विचित्रमालेख्यं च । कला शिल्पं चान्द्री च । अत्र तुशब्दादेर्द्योतकस्याभावाद्व्यतिरेको व्यङ्ग्यः । **अलमिति** । अन्यत्रालंकारतया दृष्टत्वाद्व्यङ्ग्यत्वेऽलंकार्याणामप्यलंकाराणां अलंकारव्यपदेशः पूर्वप्रत्यभिज्ञानबलात् ॥

**पन्थिअ इति** । तृणादिशय्या स्रस्तरम् । मणं मनागपि । उन्नतं पयोधरं मेघं प्रेक्ष्य स्रस्तराद्यभावेऽपि यदि वससि तद्वस । अत्र स्रस्तरनिषेधप्रस्तरोन्नतपयोधरादिशक्तिजं प्रहरचतुष्टयोपभोगान्नात्र निद्रातुं लभ्यत इति, सर्वे ह्यत्राविदग्धा इति, तदुन्नतप-

अत्र यद्युपभोगक्षमोऽसि तदाऽऽस्स्वेति व्यज्यते ।

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
[1]यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥ ६० ॥

अत्र विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत [2]इति व्यत्ययेन व्यज्यते ।

**[3]अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकस्संभवी स्वतः॥**
**प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा।**

---

योधरां मामालोक्योपभोक्तुं यदि वससि तदाऽऽस्स्वेति च वाच्यव्यङ्ग्यमुपभोगक्षमोऽसीत्यनेन क्रोडीकृत्य दर्शयति—अत्र यद्युपभोगेति । वाच्यबाधेन च व्यङ्ग्यस्य स्थितत्वात्तयोर्मिथोऽसङ्गत्या नोपमानोपमेयभाव इति नालङ्कारो व्यङ्ग्यः, किन्तु वस्त्वेव ।

'पंथिअ न इत्थ सत्थर अमत्थि णं पत्थरत्थले गामे' इति पाठे तु सत्थर अं शास्त्ररतं यदि वा शास्त्रोक्तं च तद्रतं च शास्त्ररतं नास्ति ग्राम्याणामविदग्धत्वादिति । अस्मिन् पाठे चायं गुणः–श्लिष्टशब्दानां बहुत्वाद्वाक्यत्वे वाक्यप्रकाश्यत्वम् । पत्थरत्थल इत्युक्त्या एकान्तसूचापि । व्यत्ययेनेति । शनिरशनिरित्यादिरूपेण शब्दद्वारकेणैव कार्यं निहननभानात्मकं त्वदनुवर्तनार्थमिवेत्युत्प्रेक्षानुगृहीतं वस्तुस्वभावं कुरुत इति व्यज्यते । अशनिः वज्रम् । अनुदारः अनुगतदारोऽपि । चकारश्चात्र विरोधवाचीति विरोधो वाच्य एव, न तु व्यङ्ग्य इत्याहुः । तेन वस्तुध्वनौ द्वितीयमुदाहरणम् । तेनोम्भितस्य वेति ॥ तेन कविना उम्भितस्य निबद्धस्य ।

---

[1] यस्मै प्रसीदसि. [2] इति ध्वन्यते. [3] अर्थशक्त्युद्भवेऽप्यर्थे,

**वस्तु वाऽलंकृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत्॥**
**वस्त्वलंकारमथवा तेनायं द्वादशात्मकः।**

अर्थो द्विविधः, स्वतस्संभवी इदंप्रथमकल्पितश्चेति। तत्र स्वतस्संभवी न केवलं भणितिमात्रनिष्पन्नो [1]यावद्बहिरप्यौचित्येन संभाव्यमानः। [2]कविना प्रतिभामात्रेण बहिरसन्नपि निर्मितः कविनिबद्धेन वा वक्त्रेति द्विविधोऽपर इति त्रिविधः। वस्तु वाऽलंकारोऽसाविति षोडा व्यञ्जकः। तस्य वस्तु वाऽलंकारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः।

क्रमेणोदाहरणानि—

अलसासिरोमणि धुत्ताणमग्गिमो पुत्ति धणसमिद्धिमओ।
इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ॥ ६१॥

---

इदंप्रथमकल्पित इति। अयं प्रथमः स चासौ कल्पितः इदंप्रथमकल्पितः, कविब्रह्मसृष्ट इत्यर्थः। तत्र स्वत इति व्यापकत्वात्प्रागनुक्तोऽपि स्वतस्सम्भवी पूर्वं व्याख्यातः, सूत्रक्रमापेक्षया वा प्रथमं व्याख्यातः। अपर इति। इदंप्रथमकल्पितः। इह प्रौढोक्तिनिमित्तत्वमात्रेणैव साध्यसिद्धेः अन्यभेदद्वयकथनं प्रपञ्चार्थम्। यतस्स्वतस्सम्भव्यप्यर्थः कविप्रौढोक्त्यैव जीवति, कविप्रौढोक्तिरेव च तन्निबद्धप्रौढोक्तिरिति।

अलसेति। समृद्धिमयः समिद्धमदो वा। अन्यासामप्रौढस्त्रीणां नीरसोऽपि मम चातुर्याद्वशीभूत इत्यभिप्रायः। अत्र गाथावस्तुना

---

[1] यद्बहिरौचित्येन. [2] कविना प्रौढोक्तिमात्रेण (प्रतिभानमात्रेण) निर्मितः

{ छाया—अलसाशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः ।
इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥ }

अत्र [1]ममैवोपभोग्य इति वस्तुना वस्तु व्यज्यते ।

धन्याऽसि या कथयसि प्रियसङ्गमेऽपि
विश्रब्ध[2]चाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि ॥ ६२ ॥

अत्र त्वमधन्या, अहं तु धन्येति व्यतिरेकालंकारः ।

दर्पान्धगन्धगजकुम्भ[3]कपाटकूट-
सङ्क्रान्तनिघ्नघनशोणित[4]शोणशोचिः ।
वीरैर्व्यलोकि युधि कूपकषायकान्तिः
काळीकटाक्ष इव यस्य करे कृपाणः ॥ ६३ ॥

---

ममैव भोग्य इति वस्तु व्यज्यते ।

धन्याऽसीति । हे सख्यः शपामि शपेऽहम् । अत्र शपामीति शपेवाचरामीति व्युत्पत्तिः । यदि वा स्वामित्यध्याहारेण क्रोशामीत्यपि । अन्यथा परस्मैपदं चिन्त्यम् । रतान्तराणि रतविशेषाः । सख्य इति । धन्याऽसि येत्यत्रार्थासङ्गत्यालोचने 'सख्याः शपामि' इति युक्तः पाठः । सख्या इति षष्ठ्यन्तम् । यदि वा सखि आः इति भिन्नं व्याख्येयम् ।

दर्पान्धेति । कुम्भा एव कपाटानां कूटः समूहः कूटा इवोन्नतप्रदेशा वा तेषु सङ्क्रान्तेन सङ्क्रमणेन यत् निघ्नं खड्गस्य परवशं

---

[1] ममैव भोग्य. [2] चाटुवचनानि. [3] कपाटकोटिसंक्रान्तिनिघ्न. [4] शोणरोचिः.

अत्रोपमालंकारेण सकल[1]रिपुबलक्षयः क्षणात्करिष्यत इति वस्तु।

गाढकान्तदशनक्षतव्यथा-
संकटादरिवधूजनस्य यः।
ओष्ठविद्रुमदलान्यमोचयत्
निर्दशन् युधि रुषा निजाधरम् ॥ ६४ ॥

अत्र विरोधालंकारेण अधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता, मम क्षत्याऽप्यन्यस्य [2]क्षतिर्निवर्ततामिति तद्बुद्धिरुत्प्रेक्ष्यत इत्युत्प्रेक्षा च। [3]एषूदाहरणेषु स्वतस्संभवी व्यञ्जकः।

---

घनशोणितं तेन शोणशोचिः। उपमालङ्कारेणेति। विशेषणबलसमुत्थेनेति शेषः। तेन वाक्यवाच्यत्वं लभ्यते।

**गाढेति।** अत्र यो हि निजमप्यधरं दशति स कथं परेषामधरान् मोचयतीति विरोधः, परं विरोधद्योतकाभावात्तस्य वाच्यता चिन्त्या। केचित्तु निजाधरमित्यत्रापिशब्दगर्भितत्वेन विग्रहं कुर्वाणा विरोधस्य वाच्यतामाहुः। परमयं समासः स्यान्न वेति स्वयमूह्यम्। व्याख्यान्तरमप्यस्ति। अत्राधरमोचनोक्तिभङ्ग्या शत्रवो व्यापादिता इति पर्यायोक्तालङ्कारो वाच्यः। विरोधस्तु व्यङ्ग्यः। **मम क्षत्याऽपीति।** अत्रापिशब्दः प्रश्नार्थे युक्तमेतदित्यर्थे वा लेशार्थे वा व्याख्येयः। निवर्ततां इत्यादौ एक इति शब्दः स्वरूपे, द्वितीयस्समाप्तौ, तृतीयः प्रकारे।

---

[1] रिपुक्षयः. [2] क्षतिर्निवर्त्यतामिति. [3] एषु चतुर्षा स्वतस्संभवी

कैलासस्य प्रथमशिखरे वेणुसंमूर्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् ।
स्रस्तापाङ्गास्सरसबिसिनीकाण्डसंजातशङ्काः
दिङ्मातङ्गाश्श्रवणपुलिने हस्तमावर्तयान्ति ॥ ६८ ॥

अत्र वस्तुना येषामप्यर्थाधिगमो नास्ति तेषामप्येवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्तिरिति वस्तु ध्वन्यते ।

केसेसु वलामोडिअ तेण समरम्मि जआसिरी गहिआ ।
जह कंदराहिं विहुरा तस्स दिढं कंठअम्मि संठविआ ॥

{ छाया—केशेषु बलात्कारेण तेन समरे जयश्रीर्गृहीता ।
यथा कंदराभिर्विधुरास्तस्य दृढं कण्ठे स्थापिताः ॥ }

अत्र केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्तीत्युत्प्रेक्षा, एकत्र सङ्ग्रामे विजयदर्शनात्तस्या-

---

कैलासस्येति । प्रथमे प्रधाने । स्रस्तापाङ्गाः वक्रीकृतनेत्रोपान्ताः । एवमादिबुद्धीति । न हि गजाः कीर्तिं बिसिनीत्वेन शङ्कन्ते पशुत्वात्, परं कविना प्रौढोक्त्या त्वत्कीर्तिं ते तथा शङ्कन्त इत्युक्तम् । त्वत्कीर्तिरित्यत्र त्वच्छब्दो न युक्तः, पश्चादामन्त्रणपूर्वं राज्ञोऽस्तूयमानत्वात् । अयं चार्थो यदीयामिति पदेन प्रतिष्ठितः । तत्कीर्तिरिति युक्तः पाठः ।

केसेसु इति । बलामोडी बलात्कारः । विधुराः रिपवः ।

[1]रयः प्रपलाय्य गुहासु तिष्ठन्तीति काव्यहेतुरलंकारः न पलाय्य गतास्तद्वैरिणः, अपि तु ततः पराभवं संभाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिश्च ।

गाढालिङ्गणरहसुज्जअम्मि दइए लहु समोसरइ ।
माणंसिणीणं माणो पीलणभीअव्व हिअआहि ॥६७॥

छाया—गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति ।
मनस्विनीनां मानः पीडनभीत इव हृदयात् ॥

अत्रोत्प्रेक्षया [3]प्रत्यालिङ्गनादि तत्र विजृम्भत इति वस्तु ।

जा ठेरं व हसन्ती कइवअणाम्बुरुहबद्धविणिवेसा ।
दावेइ भुअणमण्डलमण्णं विअ जअइ सा वाणी ॥६८॥

छाया—या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।
दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥

---

काव्यहेतुरिति । काव्यलिङ्गं नामालङ्कारः । अत्र ह्येकत्र रणे तद्विजयदर्शनं रिपूणां गुहावस्थानवाक्यार्थतया हेतुः । तत इति । राज्ञस्सकाशात् । कन्दरा इति । गुहाभिस्त्वङ्गीकृता न तु नष्टाः । अत्र वस्तुनोत्प्रेक्षाकाव्यहेत्वपह्नुतिरूपालंकारत्रयं ध्वन्यत इति योगः । अत्रोत्प्रेक्षयेति । हृदयात्पीडनभीत इवेतिरूपया । अयं भावः—यदि कामिनी प्रत्यालिङ्गनादि न कुरुते तदा कथं पीडनं, तदभावे च न भीतत्वोत्प्रेक्षणं, प्रत्यालिङ्गनादेश्च तस्या मानोऽपसृतः, मानापसरणकार्यत्वात् तस्य । तावदेतौ मत्तत्वान्मिथः स्वं पीडयतः,

---

[1] रयो गुहासु.  [3] प्रत्यालिङ्गनादिकं जृम्भते.

अत्रोत्प्रेक्षया चमत्कारैककारणं नवंनवं [1]जगदजडावस्था निर्मिमीत इति व्यतिरेकः। एषु कविप्रौढोक्तिमात्र[2]निष्पन्नो व्यञ्जकः।

जे लङ्कागिरिमेहलासु खलिआ संभोअखिण्णोरई-
फारुफुल्लफणावलीकवलणे पत्ता दरिद्दत्तणम्।
ते एण्हिं मलआणिला विरहिणीणीसाससंपक्किणो
जादा झत्ति सिसुत्तणेवि बहला तारुण्णपुण्णा विअ॥६९

छाया—ये लङ्कागिरिमेखलासु स्खलिताः सम्भोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम्।
त इदानीं मलयानिला विरहिणीनिश्वाससंपर्किणः
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव॥

अत्र निश्वासैः [3]प्राप्तैश्वर्या वायवः किं किं न कुर्वन्तीति वस्तुना वस्तु व्यज्यते।

सहि विरइऊण माणस्स मज्झ धीरत्तणेण आसासम्।
पिअदंसणविहलङ्खलखणम्मि सहसत्ति तेण ओसरिअम्॥

---

ततोऽहं किमित्यन्तरा क्रिय इति। व्यतिरेक इति। ब्रह्मा हि जडे जलजे स्थितस्सन्नचमत्कारि पुराणं जगन्निर्मीते, वाणी तु कविसचेतनवक्त्राब्जस्थिता पूर्वोक्तविपरीतं तद्दर्शयतीति भावः। किंकिं न कुरुत इति वस्तु वस्तुना वृत्तोक्तेन व्यज्यते।

सहीति। धैर्येण कर्त्रा मानविषयसाश्वासं मे कृत्वा कम्पादिना विशृङ्खलयतीति विशृङ्खले प्रियदर्शनक्षणे तेन विश्वास-

---

[1] जगदजडावस्थाऽपि निर्मिमीते. [2] निष्पन्नशरीरो व्य क:. [3] प्राप्तैश्वर्याः किं किं न कुर्वते.

(छाया—सखि विरचय्य मानस्य मम धीरत्वेनाश्वासम्।
प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम्॥)

अत्र वस्तुना अकृतेऽपि[1] प्रार्थने प्रसन्नेति विभावना, प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यते [2]इत्युत्प्रेक्षा वा।

ओल्लोल्लकरअरअणक्कुएहिं (खु) तुह लोअणेसु मह दिण्णम्।
रत्तंसुअं पसाओ कोवेण पुणो इमे ण अक्कमिआ॥७१॥

(छाया—आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तम्।
रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते॥)

अत्र किमिति लोचने कुपिते वहसि, इत्युत्तरालङ्कारेण न केवलमार्द्रनखक्षतानि गोपायसि यावत्तेषामहं प्रसादपात्रं जातेति वस्तु।

महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती।
अनुदिणमणण्णकम्मा अङ्गं तणुअं वि तणुएइ॥७२॥

(छाया—महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती।
अनुदिनमनन्यकर्मा अङ्गं तनुकमपि तनयति॥)

---

घातिना अपसृतम्। अकृतेऽपीति। प्रसन्नत्वस्य हेतौ प्रार्थनेऽकृतेऽपि तदुत्पत्तिरिति विभावना।

ओल्लोल्लेति। आर्द्रार्द्रैः करजादिक्षतैः सपत्नीदत्तैः। इमे न अक्कमिआ प्राकृतत्वात्पुंस्त्वम्। वहसीत्येवंरूपस्य प्रश्नस्य स्वयं गम्यस्य यद्वाथोक्तं वस्तु तदुत्तरतयोक्तमित्युत्तरालङ्कारः।

---

[1] अकृते प्रार्थने. [2] इत्युत्प्रेक्षा च.

अत्र हेत्वलंकारेण तनोस्तनूकरणेऽपि तव हृदये न वर्तत इति विशेषोक्तिः।एषु कविनिबद्धप्रौढोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः। एवं द्वादश भेदाः।

## शब्दार्थोभयभूरेकः,

यथा—

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा।
तारकातरला श्यामा सानन्दं न करोति कम् ॥७३॥

अत्रोपमा व्यङ्ग्या।

---

विशेषोक्तिरिति। अत्र मानहेतुभूते तनोस्तनूकरणेऽपि सा यत्तव हृदये न वर्तते न माति, तत्कारणे सत्यपि कार्यानुत्पत्तिरिति विशेषोक्तिर्व्यङ्ग्या।

अतन्द्रेति। चन्द्रौ स्वर्णकर्पूरावपि। समुत् सहर्षा। तारका कनीनिकाऽपि। श्यामे रात्रिस्त्रियौ। सानन्दं कं पुरुषं। सा श्यामा कमनिर्वचनीयमानन्दम्। अत्र यदि स्त्री प्रस्तुता रात्रिर्वा तदा द्वितीयार्थो वस्तुरूपो व्यङ्ग्यः, ध्वन्यवाच्ययोश्च मिथस्सङ्गत्योपमानोपमेयभाव उपमाऽपि। द्वयोर्वाच्यत्वे श्लेष एव वाच्यो न किञ्चिद्व्यङ्ग्यम्। अत्र चातन्द्रचन्द्रादिशब्दानामेकनैकार्थानां परावृत्तिसहासहत्वेन क्रमेणार्थशब्दशक्तिप्राधान्यम्, तेनोभयमूलत्वम्। तथाऽत्र यद्यप्यर्थोऽपि व्यञ्जकस्तथापि श्लिष्टशब्दशक्तिरेव व्यङ्ग्यमुन्मीलयति नार्थशक्तिरिति शब्दोत्थध्वनिरेव न द्व्युत्थ इति तत्वम्॥

भेदा अष्टादशास्य तत् ॥ ४१ ॥

[1]अस्येति ध्वनेः ॥

ननु रसादीनां [2]बहुभेदत्वेन कथमष्टादशेत्यत आह—

रसादीनामनन्तत्वात् भेद एको हि गण्यते ।

अनन्तत्वादिति । तथाहि—नव रसाः, तत्र शृङ्गारस्य द्वौ भेदौ, संभोगो [3]विप्रलम्भश्च । संभोगस्यापि [4]परस्परावलोकनालिङ्गनपरिचुम्बनादिकुसुमोच्चयजलकेलिसूर्यास्तमय[5]चंद्रोदयषड्ऋतुवर्णनादयो बहवो बहवो भेदाः । [6]विप्रलम्भस्याभिलाषादय उक्ताः । तयोरपि विभावानुभावव्यभिचारिवैचित्र्यम्, तत्रापि नायकयोरुत्तमाधममध्यम[7]प्रकृतित्वम्, तत्रापि देशकालावस्थादिभेदा इत्येकस्यैव रसस्यानन्त्यम्, का गणना त्वन्येषाम् । असंलक्ष्यक्रमत्वं तु सामान्यमाश्रित्य रसादि[8]ध्वनिभेद एक एव गण्यते ॥

---

भेदा इति । अविवक्षितवाच्यस्यार्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्यौ द्वौ भेदौ, विवक्षितवाच्यस्यालक्ष्यक्रम एकः । तथाऽस्यैव लक्ष्यक्रमशब्दोत्थौ द्वौ, अर्थोत्था द्वादश, द्व्युत्थ एकः, एवमष्टादश । नायकयोरिति । नायकश्च नायिका च तयोस्तथा । अन्येषामिति । हास्यादीनाम् ।

---

1 अस्य ध्वनेः. 2 बहुभेदे कथमष्टादशतेत्यत. 3 विप्रलम्भश्चेति । 4 परस्परदर्शनालिङ्गन. 5 चन्द्रोदयर्तुषट्कवर्णनादयो. 6 विप्रलम्भस्याप्यभि. 7 प्रकृतिकत्वम्. 8 ध्वनिरेकभेद एव.

**वाक्ये द्व्युत्थः,**

द्व्युत्थ इति । शब्दार्थोभयशक्तिमूलः ।

**पदेऽप्यन्ये**

अपि[1]शब्दाद्वाक्येऽपि । एकावयवस्थितेन भूषणेन कामिनीव पदद्योत्येन व्यङ्ग्येन [2]वाक्यव्यङ्ग्याऽपि भारती भासते । [3]तत्र पदप्रकाश्यत्वे क्रमेणोदाहरणानि—

---

द्व्युत्थ इति । द्वाभ्यामुत्थानं यस्य स तथा । सर्वं हि सावधारणं वाक्यं स्यादिति नयेन वाक्य एव द्व्युत्थ इत्यवधार्यम् । **अन्य इति** । सप्तदश । ननु भारती काव्यरूपा वाक्याद्व्यङ्ग्यं यस्या इति व्युत्पत्त्या वाक्यव्यङ्ग्या सती क्रियासमाप्त्या वाक्यपूर्णत्वे सति भाति, यतः काव्यविशेषो विशिष्टार्थप्रतीतिहेतुः सन्दर्भविशेषः, काव्यविशेषता च न पदप्रकाश्यत्वे घटेत, पदानां स्मृतिहेतुत्वेनावाचकत्वादिति भावार्थः, तत्कथं पदद्योत्येन भातीत्याह—**एकावयवेति** । यथा दीप एककोणस्थोऽपि सर्वं गृहं प्रकाशयति तथैवेदमिति । यथा (श्रुति) दुष्टपेलवादिपदानामसभ्यार्थं प्रति न वाचकत्वं किन्तु स्मारकत्वं, तद्वशाच्च चारुरूपं काव्यं (श्रुति) दुष्टमन्वयव्यतिरेकाभ्यां भागेषु व्यवस्थाप्यते,तथा प्रकृतेऽपि पदानां व्यञ्जकत्वमुखेन ध्वनिव्यवहारः । न च ध्वनिव्यवहारे वाचकत्वं प्रयोजकं, व्यञ्जकत्वेन व्यवस्थानादिति भावः ।

---

[1] शब्दाद्वाक्ये. [2] वाक्यद्योत्याऽपि. [3] अत्र पद.

यस्य मित्राणि मित्राणि शत्रवश्शत्रवस्तथा ।
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥७४॥

अत्र द्वितीयमित्रादिशब्दा आश्वस्तत्वनिर्यन्त्रणीयत्वस्नेहपात्रत्वादिभिरर्थान्तरसंक्रमितवाच्याः ।

खलव्ववहारा दीसन्ति दारुणा जहवि तहवि धीराणम् ।
हिअअवअस्सबहुमआ ण हु ववसाआ विमुज्झन्ति ॥७५॥

(छाया—खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथाऽपि धीराणाम् ।
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ॥)

अत्र विमुह्यन्तीति ।

---

यस्येति । अत्र द्वितीयमित्रशब्दोऽनुपयुज्यमानत्वाद्बाधितस्वार्थः स्वाभिधेयभूतार्थगामित्वरूपसम्बन्धाद्विश्वसनीयतां लक्षयन् सर्वस्वरहस्यार्पणाख्यानादि ध्वनयति । इयं शुद्धा सारोपा साध्यवसाना वा लक्षणा, तद्युक्तिश्च पूर्वोक्तमेघनादशब्दवत् । एवं द्वितीयशत्रुशब्दोऽपि नितरां यन्त्रणीयत्वं लक्षयन् निरुच्छ्वासतादि ध्वनयति । एवमनुकम्प्यशब्दोऽपि स्नेहपात्रत्वं लक्षयन् संपत्प्रसादसंपादनादि ध्वनयति । अत्रापि लक्षणा पूर्ववत् । एषोऽर्थान्तरसङ्क्रमितभेदः ।

हियएति । हृदयमेव वयस्यस्तस्य बहुमताः । अत्र विमोहस्य चेतनधर्मत्वात् विमुह्यन्तीति पदं बाधितस्वार्थं चेतनगतास्खलितत्वादिसादृश्यात् व्यवसायान् लक्षयदारब्धकार्यनिर्वहणादि ध्वनयति । इयं गौणी लक्षणा अत्यन्ततिरस्कृतभेदश्च ।

लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।
तदा सुधास्पदमभूदधुना तु [1]ज्वरोपमम् ॥ ७६ ॥

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते । यथावा—

मुग्धे ! मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां [2]दूरे कुरु प्रेयसि ।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैश्शंस हृदि [3]स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति॥७७॥

---

अलक्ष्यक्रमं भेदं वृत्तद्वयेनाह—लावण्यमिति । अत्रानुभवैकगोचराः तदादिस्मारिता विभ्रमरूपा अर्थाः रसं व्यञ्जन्ति । स्मरणोल्लिखितं तल्लावण्यादि सातिशयं रसस्य विभावतां यातीति भावः । तदेति । सम्भोगे अधुना विरहे । ज्वरोपमं सन्तापहेतुत्वात् । ज्वरो महानिति वा पाठः ।

मुग्धे इति । धृतिर्धरणं संवननमिति यावत् । प्रतिबोधिता प्रतिकूलं मानादिकरणं ज्ञापिता । भीतानना ससम्भ्रमं भ्रमितानना । भयकार्यस्य नेत्रभ्रमसङ्कोचशोषाधोभावसम्भ्रमवैवर्ण्यादेर्मुखे दर्शनात्तदेवं भीतमुक्तम् । नीचैश्शंसनं तु मौनम् । मौनं कुर्वित्युक्ते सखी मनसि दूयते अहं किमिति निषिद्धेति, तां प्रति तस्याः प्रीत्यभाव उक्तस्स्यात् । प्रियश्च शङ्कते यदेषा निषिद्धा तदाभ्यां मन्ये मयि किमपि विरुद्धं पर्यालोच्यत इति ।

---

[1] ज्वरो महान्. [2] दूरीकुरु. [3] स्थितोऽतिचतुरः प्राणेश्वरः.

अत्र भीताननेति, एतेन हि नीचैश्शंसनविधानस्य युक्तता गम्यते। भावादीनां पदप्रकाश्यत्वेऽधिकं न वैचित्र्यमिति न तदुदाह्रियते।

रुधिरविसरप्रसाधितक[1]रवालकरालरुचिरभुजपरिघः।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृप भीम॥७८॥

अत्र भीषणीयस्य भीमसेन उपमानम्।

भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः॥७९॥

काचित्संकेतदायिनमेवं मुख्यया वृत्त्या शंसति।

---

**एतेन हीति।** भयस्याकृत्रिमत्वदर्शनेन। एतद्दृष्टान्तद्वये रसस्य पदप्रकाश्यत्वमुक्तम्। एकत्र तदादीति शब्दैक्ये पदत्वमुक्तं, अन्यत्र तु भीताननेति शब्दद्वैयैक्ये पदत्वं, अत एव यथा वेत्युक्तम्। भावादयस्तु वाक्यप्रकाशकत्व एव वैचित्र्यभाज इत्याह—**भावादीनामिति।** द्विधाशब्दोत्थध्वनौ पदप्रकाशत्वमाह—**उपमानमिति।** प्रकृताप्रकृतयोर्भीमशब्दार्थयोरसम्बद्धत्वं मा प्रसाङ्क्षीदिति न्यायेन तयोरुपमानोपमेयभाव इत्युपमा व्यङ्ग्या।

**मुक्तीति।** *मुक्तिरुद्वेगव्यापारादपि। भुक्तिः कान्तोपभोगोऽपि। एकान्तः सङ्केतस्थानं निश्चयश्च। सन् शोभन आगमः सिद्धान्तः सुभगस्यागमनं च। **मुख्ययेति।** प्रकृतेनार्थेन सङ्केतदं काचिदाशंसतीति वस्तु सदागममुखेन व्यज्यते। अत्रार्थयोर्वैसादृश्यान्नोपमा।

---

[1] करालकरवाल. * 'मुक्तिरभेदव्यापारादपि' इति हैमकाव्यानुशासने

सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्ध[1]मत्रागतिः ।
आश्चर्यं तव सौकुमार्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वंद्वममीलनव्यतिकरं शक्नोति ते नासितुम् ॥८०॥

अत्र वस्तुना कृतपरपुरुष[2]परिचया क्लान्ताऽसीति वस्तु अधुनापदद्योत्यं व्यज्यते ।

तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ता[3]विपुलाह्लादक्षीणपुण्य[4]चया तथा ॥८१॥
चिन्तयन्ती [5]जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका ॥८२॥

अत्र जन्मसहस्रैरुप[6]भोक्तव्यानि दुष्कृतसुकृतफलानि वियोग-दुःखचिन्ताह्लादाभ्यामनुभूतानीत्युक्तम् ।एवं चाशेष[7]चयशब्दद्योत्ये

---

अथार्थोत्थं द्वादशधा ध्वनिं पदप्रकाश्यमाह—**सायमिति** । अत्र स्नानविलेपनार्कास्तमन्दागमनैः क्लमहेत्वभाव उक्तः । एवं कारणाभावे क्लमस्तवेति वस्तुना पुरुषसङ्गं कृत्वा स्नाताऽसीति वस्तु अधुनापदेन व्यज्यते, अन्यदाऽप्यागमने क्लमाभावात् ।

**तदप्राप्तीति** । एतौ श्लोकौ विष्णुपुराणे । तस्य विष्णोरप्राप्तिः । **निरुच्छ्वासतयेति** । एकत्र ध्यानेनान्यत्र चिन्तया तद्गतया । मुक्तिः प्राणवियोगोऽपि । अशेषचयशब्देत्यत्र शब्दशब्दे नानेकार्थत्वात् पदमुच्यते । अन्यथा शब्दद्योत्य इत्युक्त्या शब्दमू-

---

[1] मन्दा गतिः. [2] परिचया स्नाताऽसीति. [3] विमलाह्लाद. [4] चया सती. [5] जगद्योनि पर. [6] भोग्यानि. [7] चयपदद्योत्ये.

अतिशयोक्ती ।

क्षणदासावक्षणदा वनमवनं व्यसनमव्यसनम् ।
बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥

अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन विधिरपि त्वामनुवर्तत इति सर्वपदद्योत्यं वस्तु ।

तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलो ।
इअ णववहुआ सोऊण कुणइ वअणं महीसमुहम् ॥८४॥

{ छाया—तव वल्लभस्य प्रभाते आसीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ॥ }

---

लत्वप्राप्त्या अर्थमूलध्वनिप्रस्तावो न सङ्गच्छेत । **अतिशयोक्ती—** असबन्धे सम्बन्धरूपे ॥

**क्षणदेति** । यथा घृतकार्यत्वादायुरपि घृतं तथा क्षणकार्यत्वात्सुखमपि क्षणम् । वनं शून्योद्देशः । व्यसनं सप्ताङ्गानामन्यतमस्य परस्मादुपजापः द्यूतादि वा । ननु यदि रात्रिररात्रिर्वनमवनामित्यादिरूपतया व्याख्या तदा रात्र्यभावो दिनमित्यादि लभ्यते, ततः पराङ्मुखत्वेन न द्विषां किञ्चिद्विरूपं, ततो विरोध एषां पदानां वैपरीत्येन व्याख्येयः । विरोधपरिहारस्तु बाह्यक्षणदा? दिनेपि नष्टत्वात्तेषामवनं रक्षकं वनम् । अवीनामसनं खेटनं व्यसनम् । प्रथमव्याख्याने तु विरोधपरिहारौ सुगमौ । **शब्देति** । अत्रार्थान्तरन्यासः शब्दोत्थविरोधाङ्गभूतः, तत्साहाय्यात् सर्वपदद्योत्यं वस्तु व्यनक्ति ।

**तु हेति** । गोसम्मि प्रभाते । दलो इति पुंस्त्वं प्राकृ-

अत्र [1]रूपकेण [2]त्वयाऽस्य मुहुर्मुहुः परिचुम्बनं तथा कृतं येन म्लानत्वमिति [3]मिलाणादिपदद्योत्यं काव्यलिङ्गम् । एषु च स्वतस्संभवी व्यञ्जकः ।

राईसु चन्दधवलासु ललिअमप्फालिऊण जो चावम् ।
एकच्छत्तं विअ कुणइ भुअणरज्जं विजम्भन्तो ॥८९॥

(छाया— रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमिव करोति त्रिभुवनराज्यं विजृम्भमाणः॥)

अत्र वस्तुना येषां कामिनामसौ [4]राजा स्मरस्तेभ्यो न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोग[5]परैरेव तौर्निशाऽतिवाह्यत इति [6]भुअणरज्जपदद्योत्यं वस्तु प्रकाश्यते ॥

निशितशरधियाऽर्पयत्यनङ्गो
दृशि सुदृशः स्वबलं वयस्यराले ।
दिशि निपतति यत्र सा च तत्र

---

तत्वात् । क्वचिद्दलमिति पाठः । मिलाणादीति । मिलाणकमलदलो इति रूपं यत्पदम् । अयं भावः— मिलाणकमलदलो इति रूपकेण म्लानत्वान्यथानुपपत्तेः मुहुश्चुम्बनं विहितवतीत्यर्थः ।

अत्र वस्तुनेति । गाथोक्तेन । तदादेशेति । जाग्रद्भिर्भोगपरैः निशाऽतिवाह्येति हि स्मरादेशः ।

निशितेति । अराले वक्रे वयसि तारुण्ये इत्यर्थः ।

---

[1] रूपकेण तथा कृतं. [2] त्वया मुहुर्मुहुः. [3] मिलाणपद.
[4] राजा कामस्तेषां. [5] परैरेतैर्निशा. [6] भुवनराज्यपद.

व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥ ८६ ॥

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा [1] अपि प्रभवन्तीति व्यतिकरपदद्योत्यो विरोधः ।

वारिज्जन्तो विपुणो सन्दावकदत्थिएण हिअएण ।
थणहरवअस्सएण विसुद्धजाई ण चलइ से हारो ॥८७॥

{ छाया–वार्यमाणोऽपि पुनस्सन्तापकदर्थितेन हृदयेन ।
स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥ }

अत्र विशुद्ध[2]जातित्वलक्षणहेत्वलंकारेण हारोऽनवरतं कम्पमान एवास्त इति [3] णचलइपदद्योत्यं वस्तु ।

---

व्यतिकरं मिश्रीभावम् । अवस्थाः अभिलाषचिन्तादयः । अयं भावः—अवस्थानां यौगपद्येनोत्पत्तौ मिथो विरोधः ।

वारिज्जंतो इति । विरहे हारस्यासुखायमानत्वाद्वार्यमाणत्वम् । स्तनभर एव वयस्यो यस्य सोऽपि विषमोन्नतत्वाद्यतश्चलयत्येनम् । अत एव मित्रीभूतः स्तनभरः । मित्रं हि स्वमित्रानिष्टं वारयति । परं हारो न चलति न त्रुट्यति किन्तु कम्पमान एवास्ते । हृदयं सन्तप्तं सत् हार त्वं मां तापयसीति तं निवारयति । मम तु स्तनभर एव वयस्यः सन्तापभागित्वादिति स एव मया सार्धं तापमनुभवितुं त्वं किमित्यत्रेति वार्यमाणोऽपि विशुद्धजातित्वाद्धेतोः न चलति,किन्तु किमत्र भावीति कम्पते ।

---

[1] अपि भवन्तीति. [2] जातिलक्षणेन हेत्वलङ्कारेण. [3] न चलतीति-पदव्यङ्ग्यं.

सो मुद्धसामलंगो धम्मिल्लो कलिअललिअणिअदेहो ।
तीए खन्धाहि बलं गहिअ सरो सुरअसंगरे जअइ ॥८८॥

(छाया—स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।
तस्याः स्कन्धाद्बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति ॥)

अत्र रूपकेण [1] मुहुर्मुहुराकर्षणेन तथा केशपाशः स्कन्धयोः प्राप्तो यथा रतिनिवृत्तावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति [2] स्कन्धपदद्योत्या विभावना । एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीरः ।

णवपुण्णिमामिअङ्कस्स सुहअ को तंसि भणसु मह सच्चम् ।
का सोहग्गसमग्गा पओसरअणिव्व तुह अज्ज ॥८९॥

(छाया—नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भण मम सत्यम् ।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥)

अत्र वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वं न तत इति णवेत्यादि–पओसेत्यादिपदद्योत्यं वस्तु व्यज्यते ।

---

अत्र रूपकेणेति । सरो स्मर इवेति रूपकम् । स्मरो हि किलाभिलाषमुत्पादयति ।

णवेति। पूर्णेन्दुरपि क्षणमेवानुरज्यते तथा प्रदोषरजन्यपि । कोतंसि केन सौजन्येन सम्बद्धो भवसीत्यर्थः ।

---

1 मुहुराकर्षणे तथा. 2 स्कन्धपद.

सहि णवणिहुवणसमरम्मि अङ्कवालीसहीए णिबिडाए ।
हारो णिवारिओ च्चिअ उच्छेरन्तो तदो कहं रमिअम् ॥ ९० ॥

(छाया—सखि निधुवनसमरेऽङ्कपालीसख्या निबिडया ।
हारो निवारित एवोच्छ्रियमाणस्ततः कथं रमितम् ॥)

[1]अत्र वस्तुना हारच्छेदादनन्तरमन्यदेव रतमवश्यमभूत्, तत्कथय कीदृगिति व्यतिरेकः [2]कहंपदगम्यः ।

पविसन्ती घरवारं विवलिअवअणा विलोइऊण पहम् ।
खन्धे घेत्तूण घडं हाहा णट्ठोत्ति रुआसि सहि किं ति ॥ ९१

(छाया—प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम् ।
स्कन्धे गृहीत्वा घटं हाहा नष्ट इति रोदिषि सखि किमिति ॥)

अत्र हेत्वलङ्कारेण संकेतनिकेतनं गच्छन्तं दृष्ट्वा यदि तत्र गन्तुमिच्छसि तदा अपरं घटं गृहीत्वा गच्छेति वस्तु किमि-

---

सहीति । अङ्कपाली आश्लेषः, सैव सखी निबिडा घनान्तरङ्गा च । अङ्कपालीसख्या हार उच्छेरन्तः द्वयोस्तृतीयतया स्पर्शविघ्नहेतुतया वाऽधिकीभवन् निवारित एव त्रोटित एव, सखी सुरते मानुषान्तरमुत्सारयति यतः । हारच्छेदादनन्तरमिति । हारच्छेदं यावन्मयाऽप्याश्लेषादि दृष्टं, तदनन्तरं किं जातमिति न जाने । व्यतिरेक इति । उपमाभूतेभ्यो रतान्तरेभ्यस्तस्य रतस्याधिकत्वादिति व्यतिरेकः ।

खंधा इति । स्कन्धान्निदिःप्य । अत्र रोदने नष्टत्वं हेतुः ।

---

[1] अत्र हारच्छेदानन्तरमेव.　　[2] कथंपदगम्यः.

ति[1]पद्द्योत्यम् । यथावा—

विहलंखलं तुमं सहि दिट्ठूण कुडेण तरलतरादिट्ठिम् ।
वारप्फंसमिसेण अप्पा गुरुओत्ति पाडिअ विभिण्णो ॥९२

(छाया—विशृङ्खलां त्वां सखि दृष्ट्वा कुटेन तरलतरदृष्टिम् ।
द्वारस्पर्शमिषेणात्मा गुरुक इति पातयित्वा विभिन्नः ।)

अत्र [2] नदीकूले लतागहने कृतसंकेतमप्राप्तं गृहप्रवेशावसरे [3] पश्चादागतं दृष्ट्वा पुनर्नदीगमनाय [4] द्वारोपघातव्याजेन बुद्धिपूर्वकं व्याकुलया त्वया घटः स्फोटित [5] इति मया चेतितं, तत्किमिति निश्वसिषि, तत्समीहितसिद्धये व्रज, ते श्वश्रू[6]निकटे सर्वं समर्थयिष्य इति द्वारस्पर्शनव्याजेनेत्यपह्नुत्या [7]वस्तु ।

जोह्णाइ महुरसेण अ विइण्णतारुण्णउस्सुअमणा सा ।
वुड्ढा वि णवोढव्विअ परवहुआ अहह हरइ तुह हिअअम् ॥

(छाया—ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा ।
वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम् ॥)

---

विहलंखलमिति । विश्रृङ्खलं खलामुच्छृङ्खलां सात्त्विकभावात् । कुडेन घटेन । तरलतरदृष्टिं अनुरागवशात् । अयं भावः—यो हि गुरुस्स्यात्स किञ्चिदुच्छृङ्खलं चपलप्रकृतिं च दृष्ट्वाऽऽत्मानं ततः पृथक्करोति येन केनापि मिषेणेत्युक्तिलेशः । चेतितं ज्ञातम् । समर्थयिष्य इत्यन्तं वस्तु अपह्नुत्या व्यज्यत इति योगः ।

जोह्णाइ इति । अत्र ज्योत्स्नामधुरसौ वाक्यार्थतयोपनिबद्धौ हेतू, वितीर्णतारुण्यादि साध्यं, एकं तावत्परवधूरन्यच्च वृद्धा साऽपि

---

1 पदव्यङ्ग्यम्. 2 नदीतीरे लता. 3 पश्चादागच्छन्तम्. 4 द्वाराघात. 5 इति तव चेष्टितं मया (ज्ञातं) चिन्तितं. 6 निकटे समर्थयिष्ये. 7 वस्तु व्यज्यते.

अत्र काव्यलिङ्गेन [1]वृद्धां परवधूं त्वमस्मानुज्झित्वाऽभिलषसीति त्वदीयमाचरितं वक्तुं [2]न शक्यमित्याक्षेपः [3]परवहुपदप्रकाश्यः। एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः। वाक्यप्रकाश्ये तु पूर्वमुदाहृतम्। शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाश्यो [4]न भवतीति पञ्चत्रिंशद्भेदाः॥

**प्रबन्धेऽप्यर्थशक्तिभूः॥ ३७॥**

यथा गृध्रगोमायुसंवादादौ, तथा च—

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले।
*(कङ्कालबहुले घोरे सर्वप्राणिभयंकरे॥ ९४॥)
न चेह जीवितः कश्चित्काल[5]धर्ममुपागतः॥
*(प्रियो वा यदि [6]वा द्वेष्यः प्राणिनां गतिरीदृशी॥९५॥)

इति दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम्।

---

त्वयाभिलष्यत इत्यहो कामान्धत्वेनाविवेकित्वमिति। भेदा इति। पूर्वाष्टादशमेलने सप्तदशैते भेदाः पञ्चत्रिंशद्भवन्ति।

अलं स्थित्वेति। अत्रोपयोगित्वादर्धद्वयेनैक एव श्लोक उदाहृतः। भारते तु श्लोकद्वयम्। तत्रालं स्थित्वेत्यस्यैतदुत्तरार्धम्। यथा—

कंकालबहुले घोरे सर्वप्राणिभयङ्करे।

इति। न चेह जीवित इत्यस्य तु—

प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी।

---

[1] परवधूमस्मानुज्झित्वा. [2] न शक्यत इत्याक्षेपः. [3] परवधूपद.
[4] न सम्भवतीति [5] धर्ममुपेयिवान्. [6] वा दुष्टः.
* एतद्व्याख्यानानुरोधात् कुण्डलितमिदं श्लोकार्धद्वयम्.

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥ ९७ ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्या[1]त्कथं बालास्त्यजध्वमविशङ्किताः ॥ ९८ ॥

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्तन[2]निष्ठं च वचनमिति प्रबन्ध एव प्रथते । अन्ये त्वेकादश भेदा ग्रन्थ[3]विस्तरभयान्नोदाहृताः, स्वयं तु [4]लक्षणतोऽनुसर्तव्याः । अपिशब्दात्पदवाक्ययोः ॥

## पदैकदेशरचनावर्णेष्वपि रसादयः ।

---

इति । **स्थित इति** । नाद्याप्यस्तमितः ।

**कनकवर्णाभमिति** । कनकवर्णवदाभातीति, यदि वा कनकवर्णयोर्हेमकुङ्कुमयोरिवाभा यस्येति तत्तथा, न पुनः कनकवर्णस्येवाभा यस्येति, अनुपपद्यमानत्वात् । बालाः मूर्खाः,* त्यक्ष्यध्वमित्यात्मनेपदक्रियातिपत्ती आर्षत्वात् । **निष्ठं चेति** । वचनमिति योगः । **प्रबन्ध एवेति** । भारतोक्तगृध्रगोमायुसंवादनामप्रबन्धप्रतिपाद्येनार्थेन गृध्रगोमाय्वोर्भक्षणाभिप्रायो व्यज्यते । स चाभिप्रायः शान्तरसनिष्ठः ।

**वर्णेष्वपीति** । निमित्तसप्तमीयम् । तेन रसादयः पदैकदेशादिनिमित्तेन व्यङ्ग्या भवन्तीत्यर्थः । यदा विशिष्टेन पदांशादिना केनाप्युपकृता विभावादयो रसास्वादातिशयं कुर्वन्ति, तदा पदांशा-

---

1 त्कथं मूढास्त्यजध्व. 2 निष्ठं चेति प्रबन्धे. 3 विस्तरभिया नो. 4 लक्ष्यतो.

*त्यक्ष्यध्वमिति पाठाभिप्रायेणेदं, अडभावोऽप्यार्षत्वेन संग्राह्यः क्रियातिपत्तिरत्र लङ्. हैमव्याकरणे ह्येवं दृश्यते. सर्वत्र मूले त्यजध्वमित्येव पाठ उपलभ्यते.

तत्र प्रकृत्या यथा—

रअकेळिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स ।
रुद्दस्स तईअणअणं पव्वईपरिचुम्बिअं जअइ ॥ ९८ ॥

(छाया—रतकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥)

अत्र जयतीति [1]न तु शोभत इत्यादि, समानेऽपि हि स्थगनव्यापारे लोकोत्तरे[2]णैव व्यापारेणास्य पिधानमिति [3]तदेवोत्कृष्टम् । यथावा—

देरेव हेतुत्वं, रसास्वादमात्रे तु विभावादीनाम् । तथा वर्णा अपि मृदुपरुषात्मना श्रुतिकालोपलभ्यमानेनार्थानपेक्षश्रोत्रग्राह्येण स्वभावेन रसास्वादे निमित्तमेव । विभावादिसंयोगाद्धि रसनिष्पत्तौ सत्यां तदास्वादे वर्णानां निमित्तमात्रत्वात् । एवं 'पदेऽप्यन्ये' 'प्रबन्धेऽप्यर्थे' इत्यत्र निमित्तसप्तमी । पदैकदेशो वक्ष्यमाणप्रकृतिप्रत्ययाद्यंशभेदात् अनेकधा । दीर्घादीर्घसमासभेदात्त्रिधा रचना ।

रअकेलीति । रतकेलौ हृतं निवसनं येन स चासौ करकिसलयरुद्धनयनयुगलश्च । यद्वा रतकेलौ हृतं निवसनं एताभ्यां कराभ्यां, तौ हि गौर्या निवसनरक्षणाय यामिकौ कृतौ स्तः, ततः प्रहरके विनष्टे ताभ्यां रुद्धं नयनयुगलं यस्य । यद्वा रतकेलौ हृते वसने सति करकिसलयाभ्यां रुद्धं नयनयुगलं यस्येति । तदेवोत्कृष्टमिति व्यज्यते— जयतीत्यत्र जिधात्वंशेन ।

---

1 न शोभते. [2] णैव रूपेणास्यापिधानमिति. 3 तदेवोत्कृष्टम् । तथा.

प्रेयान् सोऽयमपाकृतस्सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत्प्रत्युत पाणि[1]सम्पुटलसन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥९९

अत्र पदानीति [2]न तु द्वाराणीति । तिङ्सुपोर्यथा—

पथिपथि शुकचञ्चू[3]चारुराभाङ्कुराणां
दिशिदिशि पवमानो वीरुधां लासकश्च ।
नरिनरि किरति द्राक् सायकान् पुष्पधन्वा
[4]पुरिपुरि विनिवृत्ता मानिनीमानचर्चा ॥ १०० ॥

अत्र किरतीति किरणस्य साध्यमानत्वं निवृत्तेति निवर्तनस्य सिद्धत्वं तिङा सुपा च । तत्रापि क्तप्रत्ययेनातीतत्वं द्योत्यते । यथात्रा—

---

प्रेयानिति । सशपथमिति अपाकृतः पादानत इति द्वयेऽपि योज्यम् । पाणीति । करपुटधृतमण्डलीकृतनीव्यन्तरे कृत्वा बद्धः, करसम्पुटे लसन् नीव्या निबन्धः संरोधो यत्रेत्यर्थः । प्रत्युतेति । या किलानुनीता न प्रसन्ना सा प्रिये याति सपत्नीसङ्गमशङ्किनी स्वयमेव प्रार्थिकाऽभूदिति व्यज्यते । प्रेम्ण इति । यावत्पदत्रयमपि न याति तावत् धृत इति स्नेहातिशयो व्यङ्ग्यः ।

पथीति । अत्र कार्यकारणपौर्वापर्यविपर्ययरूपाऽतिशयोक्तिः ।

---

[1] संपुटगलन्नीवीनितम्बं धृतो.
[2] न द्वारादीनीति.
[3] चारुरम्भाङ्कुराणां.
[4] पुरिपुरि च निवृत्ता.

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितः
निराहारास्सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैः
तवावस्था चेयं विसृज कठिने मानमधुना ॥१०१॥

अत्र लिखन्निति न तु लिखतीति, तथा आस्त इति न त्वासित इति अपि तु प्रसादपर्यन्तमास्त इति, भूमिमिति न तु भूमाविति न हि [1]बुद्धिपूर्वकमपरं किञ्चिल्लिखतीति तिङ्सब्विभक्तीनां [2]व्यङ्ग्यम् । सम्बन्धस्य यथा—

गामारुहम्मि गामे वसामि णअरट्ठिइं ण आणामि ।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥१०२॥

(छाया—ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि ।
नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥)

---

प्रसादपर्यन्तमिति । लिखतीत्युक्ते प्रसादपर्यन्तमिति न लभ्यते । तेन लिखन्निति युक्तम् । सर्वत्र सुबादीनामाकूतविशेषव्यञ्जकत्वम् । स त्वाकूतो व्यक्तः सन् यथायोगं विभावादिरूपताद्वारेण रसादिकं व्यनक्ति । न त्वासित इति । न लिखित्वा गतोऽद्यापि लिखन्वर्तते । भूमाविति । आधारत्वे हि चित्रलिखनस्यैव प्राधान्यं न तु तस्याः प्रसादस्य, अतो भूमिमित्युक्तम् ।

गामेति । ग्रामरुहा ग्रामीणा । नागरिकाः विदग्धाः ।

---

1 बुद्धिपूर्वकं किञ्चिल्लिखतीति.. 2 व्यञ्जकत्वम्.

अत्र नागरिकाणामिति षष्ठ्याः ।

'रमणीयः क्षत्रियकुमार आसीत्' इति कालस्य । एषा हि [1] भग्नमहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः । वचनस्य यथा—

ताणं गुणग्गहणाणं ताणुक्कण्ठाणं तस्स पेम्मस्स ।
ताणं भणिआणं सुन्दर एरिसिअं जाअमवसाणम् ॥१०३॥

(छाया — तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।
तासां भणितीनां सुन्दरदृशं जातमवसानम् ॥)

अत्र गुणग्रहणादीनां बहुत्वं प्रेम्णश्चैकत्वं द्योत्यते । पुरुषव्यत्ययस्य यथा—

रे रे चञ्चललोचनाञ्चितरुचे चेतः! प्रमुच्य स्थिर-

षष्ठ्या इति । व्यञ्जकत्वमिति योगः । समासे हि सम्बन्धगूढत्वे सति नाकारिकाणामभावो लभ्यते । असमासे तु साक्षात् षष्ठीत्वात् नागारिकाणां सद्भावः । तदयमर्थः—या नागारिकाः सौभाग्यादिना सत्वेन च जीवन्त्यस्तासु प्रसक्तानपि पतीनपहरामीति । आसीदित्यतीतनिर्देशाद्दाशरथेः कथाशेषत्वं व्यज्यते । बहुत्वमिति । अनेकशो गुणग्रहणादि कृतवानित्यर्थः । स्मर्यमाणं हि वस्तु रसमुद्दीपयतीति भावः । एकत्वमिति । अद्वितीयत्वम् । एरिसअमित्यत्र कप्रत्ययोऽतीव निन्द्यं वैराग्यं वक्ति ।

रेरे इति । अत्र चञ्चलयोर्लोचनयोरञ्चिता अपाचिता रुचि-

[1] भग्नमाहेश्वरकार्मुकं

प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ।
[1] किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमां
एषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ ॥१०४॥

अत्र प्रहासः । पूर्वनिपातस्य यथा—

एषां दौर्बल्यमेव दुर्बलतया ते सम्मतास्तैरपि
प्रायः केवलनीति[2]रीतिशरणैः कार्यं किमुर्वीश्वरैः ।
ये क्ष्माशक्र! पुनः पराक्रमनयस्वीकारकान्तक्रमाः
ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥ १०५

अत्र पराक्रमस्य [3]प्राधान्यमवगम्यते । विभक्तिविशेषस्य यथा—

प्रधनाध्वनि धीर धनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम्।
दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम्॥

---

रभिलाषो यस्य । यद्वा चञ्चले लोचने आञ्चिता गमिता रुचिर्येन चेतसा तस्यामन्त्रणम् । किं मन्य इति । त्वमेवं मन्यसे यदहं तया सह क्रीडिष्यामीति अन्तर्मध्ये या आशा तां मुञ्च । अत्र मन्य इत्यत्र मध्यमपुरुषप्राप्तावुत्तमस्य विधानाद्व्यत्ययः, तेन प्रहासो व्यज्यते ।

दौर्बल्यमेवेति । न तु नीतिबलम् । अत्रेति । अल्पस्वरत्वात् नयशब्दस्य पूर्वनिपाते प्राप्तेऽपि विक्रमस्यार्चितत्वेन निपातस्तस्यार्चितत्वं व्यनक्ति ।

प्रधनेति । प्रधनं युद्धम् । दिवसमिति । 'कालाध्वनोरत्यन्तसंयोगे' इत्याधारद्वितीया । दिनान्तः क्षणमपि युद्धशून्यं

---

[1] त्वं मन्ये. [2] रीतिकुशलैः कार्यं. [3] प्राधान्यं गम्यते.

अत्र [1]दिवसेनेत्यपवर्गे तृतीया फल[2]प्राप्तिं द्योतयति ।

भूयोभूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वादृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालती माधवं यत्
[3]गाढोत्कण्ठाललितलुलितैरङ्गकैस्ताम्यतीति ॥ १०७॥

अत्रानुकम्पानुवृत्तेः करूपताद्धितस्य ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभव[4]पथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनः
विकारः कोऽप्यन्तर्जडयति च तापं [5]च कुरुते ॥ १०८॥

---

न तैः स्थितम् । फलप्राप्तिस्तु तवैवाभूदित्याशयः—अत्रेति। अपवर्गः फलप्राप्तौ सत्यां क्रियानिष्पत्तिः । तथाच युद्धफलं जयरूपं तवैव जातमिति भावः। अत एव साधुवादपदमित्युक्तम् ।

भूय इति । सविधे समीपे या नगरी रथ्या तया । नवमिव पुनर्जीवितमिव, ललितललितैः वीप्सयाऽतीव रम्यैः । यदि वा ललितानि चारूणि विलासा येषामिति। क्वचिच्च लुलितेति पाठः। तदा च लुलितानि तन्मयीभूतानि ललितानि विलासा येषां, न कदाचिन्निर्विलासानीत्यर्थः। इतिरनुभवप्रकारे । ताद्धितस्येति । अभिलाषरसस्य सौकुमार्यस्य चात्र व्यञ्जकः तद्धितकप्रत्ययः । पुनर्जन्मनीत्यत्र द्वितीयवारमात्रे पुन·

---

[1] दिवसेनेति ह्यपवर्गे. [2] प्राप्तिं दर्शयति. [3] गाढोत्कण्ठालुलितललितै.
[4] पदं यो. [5] च तनुते.

अत्र प्रशब्दस्योपसर्गस्य ।

कृतं च गर्वाभिमुखं मनस्त्वया
किमन्यदेवं निहिताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमान्
न यावदायात्युदयाद्रिमौलिताम् ॥ १०२ ॥

अत्र तुल्ययोगिताद्योतकस्य 'च' इति निपातस्य ।

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परां
अस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
वन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैस्स्वरैस्सप्तभिः ॥ ११० ॥

अत्र असाविति भुवनेष्विति गुणैरिति सर्वनामप्रातिपदिक-

---

शब्दः । प्रशब्देति । प्रकर्षेण ध्वंसान्निर्मूलकाषङ्कषितो विवेक इति ध्वन्यते । च इतीति । अत्र चकारस्तुल्ययोगितां जल्पन् वीर-रसं विश्रान्तिप्रधानतया व्यनक्ति । पदसम्बद्धा एव चादयः स्युरित्येषां पदैकदेशता ॥

रामोऽसाविति । राघवानन्दे * कुम्भकर्णोक्तावत्र प्रस्तावात् देवः त्वमित्यर्थः । एकबाणाहत्या श्रेणीभूतविशालतालानां यद्विवरं तेनोद्गीर्णैः । सर्वनामेति । सामान्येन यन्नाम तत्प्रातिपदिकम् । यत्तु विशिष्टं सर्वादिगणोक्तं तत्सर्वनाम । वचनानां एकद्वित्र्यादि-रूपाणां, व्यञ्जकत्वमिति योगः । तेनासौ प्रसिद्धोऽद्वितीयः भुवनेषु न त्वेकस्मिन् भुवने, गुणैरनन्तैः न त्वेकेनेति ध्वन्यते ॥

---

* रावणमुद्दिश्य विभीषणोक्तिरियमित्युद्योतादौ दृश्यते.

वचनानां न त्वदिति न मदिति अपित्वस्मादित्यस्य सर्वा-[1]क्षेपिणो व्यञ्जकत्वं भाग्यविपर्ययादित्यन्यथासम्पत्तिमुखेन, न त्वभावमुखेनाभिधानस्य।

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना॥

अत्रेमानिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य तरुणत्व-इति धनुषस्समीप इति मौलौ [2]वसतीति त्वादिभिस्तुल्येऽप्येषां वाचकत्वे अस्ति कश्चित्स्वरूपस्य विशेषो यश्चम-

न त्वदिति। त्वदित्युक्ते हि रावणस्यैव मदित्युक्ते वक्तुरेव भाग्यव्यत्ययो ध्वन्यते। अस्मच्छब्दे तु बहुवचनान्ततयोक्ते तव च मम कुलस्य चेति सर्वेषां आक्षेपः। अन्यथेति। भाग्यानामभावात् इति नोक्तम्, किन्तु विपर्ययादिति, यान्येव भाग्यानि अस्माकं प्रभुत्वायाभूवन् तान्येवान्यथा सम्पन्नानि सन्ति, क्षयहेतुत्वाद्व्यत्ययरूपाणि जातानि। पुण्याभावे हि प्रभुत्वमेव न स्यान्न पुनः प्रत्युत क्षयः स्यात्। अयं भावः—पुण्यान्येवापुण्यतया परिणतान्यस्मत्कुलं क्षयं नेष्यन्तीति व्यज्यते।

तरुणीति। मदनश्च प्रस्तावात्तस्य धनुश्च ते तथा, तयोस्समीपे। अयंभावः—यत्तारुण्यं कलां कलयति तत्तस्य स्पर्धयेव भ्रुवोरग्रभागः कलां पठति। एतेनोपाध्यायवक्रत्वे शिष्यस्यातीव वक्रत्वं ध्वन्यते। यस्याः भूतारुण्यात्मकान्यङ्गान्यपि परस्परस्पर्धया सविभ्रमाणि, सा तदाधारः सकलानां चतुराणां समस्तानां वा लल-

[1] क्षेपिणा भाग्य. [2] वसतीत्यत्र त्वदिभि.

त्कारकारी स एव [1]व्यञ्जकत्वं प्राप्नोति। एवमन्येषामपि बोद्धव्यम्। वर्णरचनानां व्यञ्जकत्वं गुणस्वरूप[2]निरूपण उदाहरिष्यते। अपिशब्दात्प्रबन्धेषु नाटकादिषु। एवं रसादीनां पूर्वगणितभेदाभ्यां सह षड्भेदाः॥

**भेदास्तदेकपञ्चाशत्,**

व्याख्याताः।

**तेषां चान्योन्य[3]योजने ॥ ४२ ॥**

**संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया।**

न केवलं शुद्धा [4]एवैकपञ्चाशद्भेदा भवन्ति यावत्तेषां स्वप्रभेदैरेकपञ्चाशता संशयास्पदत्वेन अनुग्राह्यानुग्राहकतया ए-

नानां कथं न मौलिमधिवसति। चकितेति विशेषणपदम्। एतेन-नेत्रविभ्रम उक्तः। स एवेति। स एव विशेषः। व्यञ्जकत्वं इमनिजादीनां व्यङ्ग्यव्यञ्जकविभावादिद्वारतया पारम्पर्येणेत्यर्थः। **अन्येषामपीति**। पदैकदेशानाम्। **वर्णेति**। आसां साक्षान्माधुर्यादिगुणव्यञ्जकत्वमेव, तद्वारेण तु रसेषूपयोगः। **भेदाभ्यामिति**। पूर्वोक्ताभ्यां वाक्यपदप्रकाश्याभ्याम्। तेषामिति। प्रत्येकमिति शेषः। **स्वप्रभेदैरिति**। स्वस्य प्रभेदैः स्वेन च प्रभेदैश्चेति चार्थः। **अयं भावः**—शुद्धभेदानां मध्यादेकस्य कस्यापीष्टभेदस्य शेषैः पञ्चाशद्भेदैः स्वेन च यदा योगस्तदा मौलिक्यभेदाद्भिन्ना एकपञ्चाशद्भेदाः स्युः। परमेकयोगे कल्पनेयं, न द्विकादियोगे,

1 व्यञ्जकः प्राप्नोति. 2 निर्णय उदाहरिष्यते. 3 योजनम्। 4 एक.

कव्यञ्जकानु[1]प्रवेशेन चेति त्रिविधेन संकरेण परस्पर[2]निरपेक्षरूपयैकप्रकारया संसृष्ट्या चेति चतुर्भिर्गुणने,

**वेदखाब्धिवियच्चन्द्राः (१०४०४)**

शुद्धभेदैः सह,

**शरेषुयुगखेन्दवः (१०४५५) ॥४४॥**

तत्र दिङ्मात्रमुदाह्रियते—

छणपाहुणिआ देअर ! जाआए सुहअ किंपि दे भणिआ ।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई ॥ ११२ ॥

(छाया—क्षणप्राघुणिका देवर ! जायया सुभग किमपि ते भणिता ।
रोदिति गृहपश्चाद्भागवलभीगृहे अनुनीयतां वराकी॥)

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे संक्रमितः

---

क्वचिद्व्यभिचारात् । एवमन्यभेदेष्वपि ज्ञेयम् । तत्सिद्धमेतदेकपञ्चाशन्मूलभेदानां प्रत्येकं स्वव्यतिरिक्ता एकपञ्चाशद्भेदाः स्युः ।

छणेति । पडोहरं पश्चादोकस्तटं तत्र यद्वलभीयुक्तगृहम् । पलहीहरेति पाठे पलही कर्पासस्तस्य भरः कर्पासतरुवनमित्यर्थः। यद्वा वलहिशब्दोऽपि कर्पासार्थः । पुरोहरमिति वा पाठः, तत्र पुरोहरं पछोकडमिति सातवाहनः । विषममित्यन्ये । अन्ये तु पलहियमिति यस्य प्रसिद्धिः तदर्थमाहुः । अत्रेति । अत्र विदितप्राघुणिकासक्तपतिवृत्तान्तपत्नीगिरा रोदनात्प्रस्तावादेवानुनये लब्धे अनुनीयतामित्यनुपयुज्यमानत्वाद्बाधितार्थं असत्यनुनयस्यानौचित्याद्वा

---

[1] प्रवेशेन त्रिविधेन. [2] निरपेक्षस्वरूपयैकरूपया.

किमनुरणनन्यायेनोपभोग एव व्यङ्ग्ये व्यञ्जक इति संदेहः।
[1]तथा—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः
वाताश्शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।

---

बाधितार्थं स्वविषयभूतार्थविषयत्वे योगे सत्युपभोगरूपमर्थान्तरं लक्षयत् तोषोत्पादनादिकं ध्वयति। इयं शुद्धा साध्यवसाना लक्षणा। **किमनुरणनेति**। किमनुनयः स्ववाच्यं वदन्नेव सुभगशब्दाल्लब्धावकाशमुपभोगं व्यनक्ति। अयं पदप्रकाशोऽर्थशक्तिमूलो ध्वनिः। अत्र द्वयोरपि व्यङ्ग्यभेदयोः सम्भवादेकस्य कस्यापि अनिश्चितत्वे संशयास्पदत्वेन संकरः।

**स्निग्धेति**। स्निग्धा जलसम्बन्धात्सरसा कान्तिश्चाकचक्यम्। घना इति भणनात् निबिडत्वमपि व्यङ्ग्यम्। वेल्लन्त्यः कात्स्न्र्ये परभागवशात् प्रहर्षाच्च। एतेन घनैराकाशस्य दुष्प्रेक्ष्यत्वं सम्भोगस्मारकत्वं चोक्तम्। वाता इति बहुवचनेन तेषां सर्वगत्वं अप्रतीकार्यत्वं चोक्तम्। शीकरिण इति। तेषामेव मन्दत्वमदस्मारकत्वं चोक्तम्। तर्हि गुहासु प्रविश्यास्यतामित्याह—पयोदेति। पयोदानां सुहृदो ये, मेघभावे तेषां शोभनचित्तता स्यादित्यर्थः। केकाभिर्गुहामध्येऽपि वर्षास्मरणादित्यर्थः। ताश्च कला इति भणनात् षड्जसंवादात्स्वयमपि दुस्सहा इति सर्वत्रोद्दीपनविभावानां विद्यमानत्वम्। एवमुद्दीपनविभावबोधितविप्रलम्भोऽन्योन्याश्रयत्वाद्रतेर्विभावानां साम्यं मत्वा इत एव

---

[1] 'तथा' इति क्वचिन्नास्ति.

कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव ॥

अत्र लिप्तेति पयोदसुहृदामिति चात्यन्ततिरस्कृतवाच्ययोः संसृ-

---

प्रभृति प्रियां हृदि न्यस्यैव स्वं वृत्तान्तं रामस्तावदाह—कामं सन्त्विति। कामं विभावाः सन्तु, अहं तु कठोरहृदयोऽस्मि। रामशब्दार्थव्यङ्ग्य-विशेषावकाशदानाय कठोरहृदयपदम्। अन्यथा रामपदं दशरथकुलो-त्पत्तिकौसल्यास्नेहपात्रत्वबाल्यचरित्रताटकावधादिधर्मान्तरपरिणमितम-र्थं कथं नु ध्वनयेत्। अस्मि स एवाहं भवामीति। सर्वं सहे न तु सर्वंसहः। कृद्वृत्तौ हि सहने कर्त्रंशस्यैव च मुख्यता स्यात्, न सर्वार्थस्य कर्मणः। ततोऽविमृष्टविधेयांशदो-षस्स्यात्। सर्वं सहे इत्युक्ते तु यद्यत् निपतति तत्तत्सह इति भावः। भविष्यतीति क्रियासामान्यं, तेन किं करिष्यतीत्यर्थः। अथवा भवनमेवासम्भाव्यमिति। उक्तप्रकारेण चित्तन्यस्तां प्रियां विभावानां साधारण्यादिना स्मरणेन वैदेहीति शब्देन कथं भ-विष्यतीति विकल्पपङ्क्त्या च प्रत्यक्षीकृतां हृदयस्फोटोन्मुखीं स-सम्भ्रममाह—ह हा हेति। देवीविभवयुक्तं धैर्यम्, देव्या हि कृताभिषेकत्वेन राजतुल्यत्वादिति भावः। अत्रेति। लिप्तशब्दः कान्तेः कुङ्कुमादिवल्लेपहेतुत्वाभावाद्बाधितार्थः सन्नीषत्तिरोधीयमानत्वा-दिसादृश्यात्कान्तियुक्तमर्थं लक्षयन् कुङ्कुमादिलिप्तवक्त्रादिसारूप्यप्र-

ष्टिः । ताभ्यां सहार्थान्तरसंक्रमितवाच्यस्य अनुग्राह्यानुग्राहक-भावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवा

---

तीतिद्वारेण चारुत्वमारोद्दीपकत्वादि व्यनक्ति । अत्र लिप्तत्वमारोप्यं आरोपविषयश्च नभ इति द्वयोरुक्तत्वाद्गौणी सारोपलक्षणा । तथा सुहृच्छब्दोऽपि घनानामचेतनत्वेन मैत्रीयोगाभावाद्बाधितार्थः सुहृत्सांमुख्यादिधर्मसादृश्यात्पयोदाभिमुखान् मयूरान् लक्षयन् मित्ररूपताप्रतिपत्तिद्वारेण तद्दर्शनानन्यसामान्यप्रमोदमेदुरत्वादि ध्वनयति । पयोदसुहृच्छब्देनारोप्येणारोपविषयाणां शिखिनां निगीर्णत्वादियं साध्यवसाना । उभयत्रापि स्वार्थोपमितवस्तुपरत्वेनात्यन्ततिरस्कृतवाच्ययोर्लिप्तसुहृच्छब्दयोः सक्तस्य व्यङ्ग्यद्वयस्य मिथो निरपेक्षत्वात्स्वपदप्रधानयोः संसृष्टिः । **रामोऽस्मीति** । अत्र प्रस्तावादभिधेयप्रतिपत्तौ रामशब्दोऽनुपयुज्यमानत्वाद्बाधितार्थः स्वाभिधेयभूतार्थगामित्वरूपसम्बन्धाद्राज्यभ्रंशप्रवासपितृसीतावियोगादिदुःखपात्रत्वं लक्षयन्नसामान्यनिर्वेदादि व्यनक्ति । लक्षणा तु मेघनादशब्दवत् । अत्र लिप्तपयोदसुहृच्छब्दव्यङ्ग्यावर्थावनुग्राहकौ, रामशब्दोत्थस्त्वनुग्राह्यः, उद्दीपनवशेनैव निर्वेदादीनां स्फुरणादित्यनुग्राह्यानुग्राहकसङ्करः । **रामपदेति** । यथा रामशब्दो निर्वेदादीन् व्यनक्ति, तथा विप्रलम्भमपीत्युभयसाधारणरामशब्दरूपव्यञ्जकव्यङ्ग्यत्वेन द्वयोर्व्यङ्ग्ययोरेकव्यञ्जकानुप्रवेशेन सं-

च्यरसध्वन्योः संकरः । एवमन्यदप्युदाहार्यम् ॥

इति काव्यप्रकाशे ध्वनिनिर्णयो नाम

चतुर्थ उल्लासः.

---

करः । अन्यदपीति । ध्वनिभेदजातम् ॥

न वेत्ति यस्य गाम्भीर्यं गिरितुङ्गोऽपि लोलटः ।
ततस्य रसपाथोधेः कथं जानातु शङ्कुकः ॥
भोगे रत्यादिभावानां भोगं स्वस्योचितं ब्रुवन् ।
सर्वथा रससर्वस्वममर्मस्पार्क्षीन्न नायकः ॥

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते
काव्यप्रकाशचतुर्थोल्लाससङ्केतः.

## अथ पञ्चम उल्लासः

एवं ध्वनौ निर्णीते गुणीभूत[1]व्यङ्ग्यस्य प्रभेदानाह—

**अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।**
**सन्दिग्धतुल्यप्राधान्ये काक्वाऽऽक्षिप्तमसुन्दरम् ॥**
**व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ[2] भिदास्स्मृताः ।**

कामिनीकुचकलशवत् [3]गूढं चमत्करोति । अगूढं तु स्फुटतया वाच्यायमानमिति [4]गुणीभूतमेव । अगूढं यथा—

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथन[5]भाजनमेष सोऽस्मि
जीवन्न संप्रति भवामि [6]किमावहामि ॥ ११४ ॥

---

### अथ पञ्चमोल्लासः.

अथ मध्यमकाव्यभेदानाह—अगूढमिति । अगूढमतिस्फुटं, अनतिस्फुटं तु ध्वनेर्मार्गः । अस्फुटस्य गुणीभूतता वक्ष्यते । **सन्दिग्धतुल्यप्राधान्य इति ।** वाच्यव्यङ्ग्ययोः प्रत्येकं चमत्कारकारित्वात्सन्दिग्धे तुल्ये च प्राधान्ये सन्दिग्धप्राधान्यतुल्यप्राधान्यरूपं भेदद्वयं स्यात् ।

यस्य मम । **काञ्चीति ।** स्त्रीति भावः । **अत्र जीवन्निति ।** जीवतैव वक्त्रा जीवन्निति भणनाज्जीवन्निति पदमनुपयुज्यमानतया बाधितार्थं सत्प्राणधारणयोगादकिञ्चित्करत्वसदविद्यमानत्वजीवत्कार्याकारित्वा-

---

[1] व्यङ्ग्यप्रभेदानाह. [2] भिदा मताः. [3] गूढमेव चमत्करोति. [4] गुणीभूतव्यङ्ग्यमेव. [5] भाजनमेव सोऽस्मि. [6] कमावहामि.

अत्र जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्य ।

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा
गायन्ति मञ्जु मधुरा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥ ११९ ॥

अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्य ।

अत्रासीत्फणिपाशबन्धनविधिश्शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरै[1]र्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च [2]कण्ठाटवी ॥

---

द्यर्थान्तरसङ्क्रमितवाच्यम् । अन्ये तु जीवन्न भवामीति वाक्यस्य जीवतो वक्तुरुक्तौ सत्यामनुपपद्यमानतयाऽत्यन्ततिरस्कृतवाच्यतामाहुः । अत्र विक्रमरहितत्वस्य व्यङ्ग्यस्य झडिति प्रतीयमानतयाऽतिस्फुट-त्वादगूढता । तेन व्यङ्ग्यस्याप्राधान्यं, गूढस्यैव चमत्कारकारित्वात् । चुम्बनस्येति । चुम्बीति पदं वक्त्रसंयोगस्यानुपपद्यमानतयाऽत्यन्तति-रस्कृतवाच्यं सत् संयोगसाम्याद्बिम्बं लक्षयत् चारुत्वशोभावहत्वा-दिकं स्फुटमेव व्यनक्तीति ध्वनेरगूढता । अन्ये तु चुम्बिशब्दः पाद-स्पर्शसम्भावनां लक्षयतीत्याहुः ।

अत्रासीदिति । द्रोणाद्रौ संरोहिण्योषधयः सन्ति यतः । अत्र केनापीत्युक्ते मयेति व्यङ्ग्यस्य झडिति प्रतीयमानत्वादगूढता ।

---

1 लोकान्तरं लम्भितः. 2 कण्ठावली.

अत्र केनाप्यत्रेत्यर्थशक्ति[1]मूलानुरणनरूपस्य। 'तस्याप्यत्र' इति युक्तपाठः।

अपरस्य रसादेर्वाच्यस्य वा (वाक्यार्थीभूतस्य) अङ्गं रसादि अनुरणनरूपं वा।

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ११७ ॥

अत्र शृङ्गारः करुणस्य।

कैलासालयफाललोचनरुचा निर्वर्तितालक्तक-

---

तस्याप्यत्रेति पाठे तु मयेति व्यङ्ग्यं गूढं स्यात्। **रसादेरिति**। रसादेर्वाक्यार्थभूतस्य प्रधानभूतस्य रसाद्यङ्गम्, वाच्यस्य तु वस्त्वलङ्काररूपस्यालङ्कारवस्तुरूपं व्यङ्ग्यं गुणीभूतमेव, अपराङ्गत्वात्।

**अयमिति**। रतिकाले रशनामूर्ध्वं कर्षतीति रशनोत्कर्षी।

अयं स रशनोत्कर्षी नीवीविस्रंसनः करः।
नाभ्यूरुजघनस्पर्शी पीनस्तनविमर्दनः ॥

इति पाठो युक्तः, सम्भोगक्रमभणनात्, परं शोकार्ततया व्यत्ययो न दुष्टः। **शृङ्गार इति**। रणभुवि भूरिश्रवसः कृत्तहस्तप्रेक्षणेन पूर्वरतवृत्तान्तः स्मर्यमाणः सम्प्रति ध्वस्ततया यतः शोकविभावतां यात्यतः करुणस्याङ्गिनोऽङ्गं विप्रलम्भः।

**कैलासेति**। कैलासालयश्शम्भुः यतः प्रसादनार्थं गौरी-

[1] मूलानुस्वानरूपस्य.

व्यक्तिः पादनखद्युतिर्गिरिभुवस्सा वस्सदा त्रायताम् ।
स्पर्धाबन्ध[1]समृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः [2]कोकनदानुकारसरसा सद्यस्समुत्सार्यते ॥

अत्र भावस्य रसः ।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाऽम्भोधयः
तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवः
तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥

अत्र [3]भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य ।

---

पादयोः पतितः तेन नखद्युतिः सालक्तकव्यक्तिः सालक्तकच्छायेत्यर्थः । नेत्रयोः कान्तिरिति । प्रणते शम्भौ कोपजा नेत्रारुणता गतेत्यर्थः । अत्र कवेर्देवीगतरतिभावस्य शृङ्गारोऽङ्गम् । अत्र पूर्वत्र च रसवदलङ्कारः । यथा पद्मादिना वस्तुनोपमितं मुखादि वस्तु चारुतया भाति, तथा रसादिनाऽपि रसाद्युपस्कृतं भातीति वस्तुन इव रसादेरप्यलङ्कारत्वम् । नन्वत्रोदाहरणद्वयेऽपि क्रमेण करुणरसभावौ व्यङ्ग्यौ, तयोश्च मुख्यतेति कथं गुणीभूतव्यङ्ग्यता । सत्यं, मुख्यावपि न तथा चमत्कुरुतः, यथाऽत्र गौणोऽपि शृङ्गार इति तेनैव व्यपदेशः, एवमन्यत्रापि भाव्यम् । अत्रेति । भूपगतायाः कविरतेर्भूविषया रतिरेवाङ्गम् । अन्योन्यास्थाबन्धरूपरतेरभावान्नात्र शृङ्गारः । ततः प्रेयस्वदलङ्कारः ।

---

[1] समिद्धयेव. [2] कोकनदानुकारिसरसा. [3] भूविषयरत्याख्यौ.

बन्दीकृत्य नृपाद्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः।
आस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे
विध्वस्ता विपदोऽखिलास्तादिति तैः प्रत्यर्थिभिः स्तूयसे ॥

अत्र भावस्य रसाभासभावाभासौ प्रथमद्वितीयार्धद्योत्यौ ।

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥

अत्र भावस्य [1]भावप्रशमः ।

साकं कुरङ्गकदृशा मधुपान[2]लीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो! गृहीतं
केनापि तत्र विषमामकरोदवस्थाम् ॥ १२२ ॥

अत्र [3]त्रासस्योदयः ।

---

बन्दीति । अत्र पश्यतामित्यनादरे षष्ठी, पश्यतः प्रियाननादृत्येत्यर्थः । भावस्येति । रिपुस्त्रीणां रत्यभावे सैनिकानां हठात् प्रवृत्त्या रसाभासः । शत्रूणां च रत्यभावे दैन्याद्यनुचितमित्युत्तरार्धे भावाभासः । तौ च राजविषयरतेङ्गम् । अत्रोर्जस्व्यलङ्कारः ।

अविरलेति । अत्र तवेक्षणेक्षणादिति भिन्नं व्याख्येयमभिन्नं वा । तथा तच्छब्दः पूर्ववस्तुवाचको निर्दिष्टः, तेन यत्पदं नापेक्षते । अत्रापि राजविषयरतेर्मदभावप्रशमोऽङ्गम् । प्रशमसमाहितयोरैकार्थ्यादत्र समाहितालङ्कारः । अत्र त्रासस्येति । भावस्य रतेरङ्गमिति योगः । अत्र भावोदयालङ्कारः ।

---

[1] भावस्य प्रशमः. [2] लीलाः. [3] त्रासोदयः.

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकश्शैलदुहितुः ।
प्रमोदं वो दिश्यात्कपटवटुवेषापनयने
त्वराशैथिल्याभ्यां [1]युगपदभियुक्तः स्मरहरः ॥१२३॥

अत्रावेगधैर्ययोः सन्धिः ।

पश्येत्कश्चिच्चल चपल! रे का त्वराऽहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित्फलकिसलयान्याददानाऽभिधत्ते ॥१२४॥

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता ।

---

असोढेति । तपो मुञ्चत्वेषेति भगवतोऽपेक्षितमित्यक्षमा । विश्रब्धजल्पितश्रवणे रसिकः, स्मरेणोपलक्षितो हरः स्मरहर इत्युचितं, न तु स्मरं हरतीति । अत्र शिवविषयरतेः सन्धिरङ्गम् ।

पश्येदिति । वने काचित्कन्या रतार्थिनं पान्थं प्रत्याह । पश्येत्कश्चिदित्याशङ्का । चञ्चल चल गच्छेत्यसूया । का त्वेरति धृतिः । कुमार्यस्मीति स्मृतिः । *हस्तालम्बं वितरेत्यौत्सुक्यम् । हहेति श्रमः । हेति दैन्यम् । व्यत्क्रम इति बाधः । †क्वासि यासीत्यौत्सुक्यम् । एषां पूर्वपूर्वोपमर्देन बन्धः शबलता नृपविषय-

---

[1] युगपदभिभूतः.

* हस्तालम्बं वितरेति श्रमः, हहहेति दैन्यं, क्वासि यासीत्यौत्सुक्यं, इत्युद्द्योतादौ. अत्र तु वाक्यद्वयेन द्विवारमौत्सुक्यं प्रदर्शितम्. † असीति त्वमित्यर्थे.

एते च रसवदाद्यलङ्काराः। यद्यपि [1]भावोदयभावसन्धिभावशबलत्वानि नालंकारतयोक्तानि तथाऽपि [2]कश्चिद्ब्रूयादित्येवमुक्तम्। यद्यपि स नास्ति कश्चिद्विषयो यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिस्सह संकरस्संसृष्टिर्वा नास्ति, तथाऽपि प्राधान्येन व्यपदेशा भवन्तीति क्वचित्केनचिद्व्यवहारः॥

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।

---

रतेरङ्गम्। एते चेति। एतेनान्यत्र तु वाक्यार्थेऽङ्गिनि यत्राङ्गं रसादिस्तत्र रसवदादयोऽलङ्काराः। रसः शृङ्गारादिः, प्रेयः प्रियतराख्यानं, ऊर्जो बलं, तानि विद्यन्ते येषु निबन्धनेषु तानि रसवदादीनि। कश्चिदिति। प्राश्निकाधुनिकः। एवमिति। अलङ्कारतया। उक्तमिति। अस्माभिरिति शेषः। यद्यपीति। अयं भावः—यद्यपि रसादितात्पर्यालोचनेन मध्यमकाव्येऽपि पुनर्ध्वनावेव विश्रान्तिरिति ध्वनिगुणीभूतध्वन्योः सर्वत्र सङ्करः संसृष्टिर्वा, तथाऽपि यत्र यस्माच्चारुताप्रतिपत्तिस्तत्र तेन व्यपदेशः कार्यः, ततोऽत्र गुणीभूतव्यङ्ग्यमेव प्रधानं न ध्वनिरित्यर्थः। स्वप्रभेदादिभिरिति। आदिशब्दादलङ्कारा ग्राह्याः।

जनस्थान इति। जनस्थानं दण्डकारण्यं, जनानां स्थानं च। कनकमृगे तृष्णा भ्रान्तिः, कनके च मृगतृष्णा लिप्सा। वैदेहीति पदद्वयं, सीता च। लङ्काभर्तुः वदनेषु मुखेषु दशसु इषुघटना

---

[1] भावोदयसन्धिशबलत्वानि. [2] कश्चिद्ब्रूयादित्येवोक्तम्.

कृतालंकाभर्तुर्वदनपरिपाटीषु घटना
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वधिगता ॥१२५॥

अत्र शब्दशक्ति[1]मूलानुरणनोपमो रामेण सहोपमानोपमेयभावो वाच्याङ्गतां नीतः।

आगत्य संप्रति वियोगविसंष्ठुलाङ्गी
अम्भोजिनीं क्वचिदपि क्षपितत्रियामः।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि! पादपतनेन सहस्ररश्मिः ॥१२६॥

---

बाणयोगः। अलमतिशयेन कुत्सितस्य भर्तुर्वदनपङ्क्तिषु वचनश्रेणिषु घटना आदेशकारितेत्यर्थः। कुशलवौ सुतौ यस्यास्सा तथा सीतेत्यर्थः, कुशलवसुनो भावस्तत्ता शुभघनतेत्यर्थः। **अनुरणनोपमः**—अनुस्वानेन तुल्यो व्यङ्ग्य इत्यर्थः। **वाच्याङ्गतामिति**। व्यङ्ग्योपमयैव रामत्वे लब्धे यद्रामत्वं इत्युक्तं *तदपरवाच्यस्य व्यङ्ग्योपमाऽङ्गतां नीतेत्यर्थः।

**आगत्येति**। अत्र विसंष्ठुलाङ्गीव विसंष्ठुलाङ्गी तां तथेति विग्रहः। बहुव्रीहौ तु ङीप्रत्ययाप्राप्तिः। क्वचिदपि द्वीपे क्षपिता त्रियामा येन, दिनं कृतमित्यर्थः। पादपतनेन दीप्तियोगेन, प्रसादयति लक्षणया विकासयतीत्यर्थः। अत्र समासोक्तौ वस्तुरूपनायकवृत्तान्तस्य सामर्थ्यादागतत्वादङ्गत्वम्।

---

[1] मूलोऽनुरणनरूपः.

* रामत्वरूपापरवाच्यस्येत्यर्थः तदिति तस्मादित्यर्थकं वा.

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरवि-कमलिनी[1]वृत्तान्ताध्यारोपेणैव स्थितः। वाच्यसिद्ध्यङ्गं यथा—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमश्शरीरसादम्।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्॥

अत्र हालाहलं [2]व्यङ्ग्यं [3]भुजगरूपस्य वाच्यस्य सिद्धिकृत्।

गच्छाम्यच्युत! दर्शनेन भवतः [4]किं तृप्तिरुत्पद्यते

---

**निरपेक्षेति**। न हि रविपद्मिन्यौ नायकवृत्तान्तमाकाङ्क्षतः। नायकश्च नायिका च तौ नायकौ, तद्वृत्तान्त अर्थादापतितः। **अध्यारोपेणेति**। न ह्यत्र नायकवृत्तान्तो रविपद्मिनीवृत्तान्तवत्प्राधान्यं लभते, कुतः? रविपद्मिनीवृत्तान्तस्य प्रभातप्रस्तावाद्वाच्यस्य सतोऽङ्गतां नीतत्वात् रविपद्मिन्योर्नायकवृत्तान्त आरोपित इति भावः।

**भ्रमिमिति**। भ्रमिः चित्तस्यानवस्थितत्वम्। अरतिर्बाह्यार्थेषु। प्रलयः इन्द्रियाणामल्पा शक्तिः। तेषां चित्तस्य च शक्तिरोधो मूर्छा। सत्येव चेतसीन्द्रियाणामशक्तिस्तमः। विषं प्रस्तावाज्जलम्, तच्च भ्रमिप्रभृतिकार्यविशेषोत्थापनेन कालकूटमिवेति व्याख्या। अन्यथा मेघानां भुजङ्गत्वं न सिध्यति। अयं शब्दशक्तिमूलपदप्रकाशो ध्वनिः। मेघानां कृष्णत्वेन भुजगत्वसिद्ध्या विषस्य जलस्य गरलरूपता सिध्यतीति व्याख्याने तु उत्तमत्वमेव।

**अच्युतेति**। हे अच्युत हरे अक्षरणशील! दर्शनेन संभो-

---

1 वृत्तान्तोऽध्यारोपणेनैव. 2 व्यङ्ग्यं मूर्छातमोरूपस्य. 3 भुजगरूपणस्य. 4 किं प्रीतिरुत्पद्यते.

[1]किंत्वेवं विजनस्थयोर्हतजनस्संभावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसां
आश्लिष्यन् पुलकोत्कराञ्चित[2]तनुर्गोपीं हरिः पातु वः ॥

अत्राच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यस्य । एतच्चैकत्रैकवक्तृगतत्वेनापरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः। अस्फुटं यथा—

अदृष्टे दर्शनोत्कण्ठा दृष्टे [3]विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥ १२९ ॥

अत्रादृष्टो यथा न भवसि वियोगभयं च यथा नोत्पद्यते तथा कुर्या इति क्लिष्टम् । सन्दिग्धप्राधान्यं यथा—

---

गविकलेन । विजनस्थयोः एकान्तस्थयोः । सम्भावयति मन्यते । भवांस्तावदच्युतः उदासीनः तात्किमित्यात्मानं बन्धयावः । **आमन्त्रणं** हे अच्युतेति रूपं हूतिकरणं । **वाच्यस्येति** । सिद्धावङ्गमिति योगः । अत्र वाच्यं स्वोपस्कारात् व्यङ्ग्यात् स्वार्थोपपत्तिं लभमानं वैदग्ध्यं प्रतिपादयत् व्यङ्ग्यमर्थं गौणयति । **एतच्चेति** । व्यङ्ग्यम् । **एकत्रेति** । भ्रमीत्यत्र । **एको वक्ता** कविः । **अपरत्रेति** । गच्छामीत्यत्र, पूर्वार्धे गोपी, उत्तरार्धे तु कविर्वक्ता । **तथा कुर्या इति** । एवंरूपं यद्व्यङ्ग्यं तस्य स्फुटत्वेन न प्रतीतिः, ततो न तथा चमत्करोतीति क्लिष्टम् ।

---

1 किं चैवं. 2 तनुं गोपीं. 3 विश्लेषभीरुता.

हरस्तु किञ्चित्परिवृत्तधैर्यः
चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥ १३० ॥

[1] अत्राधरं परिचुम्बितुमैच्छदिति किं प्रतीयमानं किं वा विलोचनव्यापारणं वाच्यं प्रधानमिति संदेहः । तुल्यप्राधान्यं यथा—

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥ १३१ ॥

अत्र जामदग्न्यस्सर्वेषां क्षत्रियाणामिव [2]रक्षसां क्षणात्क्षयं

---

उमेति । बिम्बफलमधरयतो बिम्बफलाधरौ, तादृशावोष्ठौ यत्र मुखे तत्तथा। त्रयाणां मुखे अधरे ओष्ठे चेति स्थानत्रये व्यापारणं सचमत्कारम् । अत एव विलोचनानीति बहुवचनोक्तिर्युक्तिमेति । यदि वा अधरश्चासौ ओष्ठश्च स तथा, बिम्बफलाकारोऽधरोष्ठो यत्र तत्तथा । सर्वैर्नेत्रैर्मुखावलोकने मुखस्य सौन्दर्यातिशयः प्रतीयते। सन्देह इति । द्वयोरपि चमत्कारकारित्वात् एकस्यापि निर्धारणं कर्तुं न पार्यते ।

ब्राह्मणेति । द्विजावज्ञात्यागो भवतां भूतिः अहं च मित्रमित्येकोपक्रमे कार्यद्वयं सिध्यतीति महाचमत्कारकारीत्यर्थः । इयं

---

[1] अत्र परिचुम्बितु. [2] रक्षसां स क्षणात्क्षयं.

करिष्यतीति व्यङ्ग्यस्य [1]वाच्यस्य च दुर्मनस्त्वस्य समं प्रधान्यम्।
काक्वाक्षिप्तं यथा—

मथ्नामि कौरवशतं समरे न कोपात्
दुश्शासनस्य रुधिरं न पिबाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥ १३२ ॥

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं [2]वाच्यनिषेधसहभावेन स्थितम्।
असुन्दरं यथा—

वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणन्तीए।
घरकम्मवावडाए वहुए सीअन्ति अंगाइम् ॥ १३३ ॥

---

* रावणपुरुषं प्रति भार्गवोक्तिः। वाच्यस्येति। दौर्मनस्यरूपस्य। व्यङ्ग्यमिति। काक्वाक्षिप्तमिति संबन्धः। वाच्येति। वाच्यश्चासौ निषेधश्च तत्सहभावेन। अयं भावः—पूर्वं निषेधस्य प्रतीतिः ततोऽप्राधान्येन व्यङ्ग्यस्येति नास्ति, किन्तु द्वयस्यापि समं प्रतीतिः। न चात्र विपरीतलक्षणा, यत उच्चारणकाल एव न कोपादिति दीप्ततार-गद्गदसाकाङ्क्षकाकुबलान्निषेधस्य निषेध्यमानतयैव युधिष्ठिरेष्टसन्धेरक्ष-मणरूपत्वाभिप्रायेण प्रतीतिरिति मुख्यार्थबाधाद्यभावात्।

वाणीरेति। गृहकर्मव्यापृतायाः अन्यकर्मरताया अपि। वध्वाः सातिशयलज्जापरवशाया अपि। अङ्गानीति बहुवचनेनैकमपि न तादृशमङ्गं यदात्मानं संवरीतुं शक्नोति। सीदन्ति आस्तां गृहकर्म,

---

[1] वाच्यस्य च समं. [2] वाच्यसहभावेन.

* रावणं प्रति परशुरामदूतोक्तिरियमित्युद्द्योतादौ दृश्यते.

{ छाया—वानीरनिकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥ }

अत्र दत्तसंकेतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात्सीदन्त्यङ्गानीति वाच्यं सचमत्कारम् ।

**एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥**

यथायोगमिति ।

व्यज्यन्ते वस्तुमात्रेण यदाऽलंकृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥

इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालंकारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम् ।

**सालंकारैर्ध्वनेस्तैश्च योगस्संसृष्टिसंकरैः ।**

---

स्वमपि नालं धर्तुं, गृहकर्मयोगे च तथा स्पुटमलक्ष्यमाणानीत्यस्माद्वाच्यादेव स्मरपारवश्यप्रतीतिश्चमत्कारः । वाच्यं स्वात्मानमुन्मज्ज्य व्यङ्ग्यं निमज्जयतीत्यर्थः ।

एषां भेदा इति । यावन्तो भेदाः शुद्धध्वनेस्तावन्तो गुणीभूतव्यङ्ग्यस्यापि भवन्तीत्यर्थः । ध्वन्यङ्गतेति । व्यञ्जकत्वेन व्यङ्ग्यत्वेन च द्विधा ध्वन्यङ्गता । तत्र प्रस्तावात् ध्वन्यङ्गता व्यङ्ग्यत्वेन ग्राह्या ध्वनिरूपतेत्यर्थः । तदाश्रयादिति । यतोऽलङ्कारेषु काव्यवृत्तिर्विश्राम्यति । तेषां च गुणीभूततायां काव्यं वाक्यमात्रं भवेत् । नच वाक्ये वस्तुमात्रे काव्यव्यवहारः ।

सालंकारैरिति तैरेवालंकारैः अलंकारयुक्तैश्च तैः । तदुक्तं ध्वनिकृता—

स गुणीभूतव्यङ्ग्यैः सालंकारैस्सह प्रभेदैस्स्वैः ।
संकरसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा ॥ इति ।

---

तैरेवेति । गुणीभूतव्यङ्ग्यैरेव । अयं भावः—अत्र पक्षत्रयी, शुद्धध्वनिः केवलालङ्कारयोग इत्येकः पक्षः, द्वितीयः केवलगुणीभूतव्यङ्ग्ययोगः, तृतीयस्तु अलंकारयुक्तगुणीभूतव्यङ्ग्ययोगश्चेति । तैरिति । गुणीभूतव्यङ्ग्यैः ।

स गुणीभूतव्यङ्ग्यैरिति । सः ध्वनिः स्वैः प्रभेदैः संकरसंसृष्टिभ्यां कृत्वा बहुधा स्यादित्यर्थः । एकस्मिन्नेव वृत्ते ध्वनिर्गुणीभूतव्यङ्ग्यं चालंकारश्च स्यादिति भावः । ध्वनिगुणीभूतव्यङ्ग्ययोः संसृष्टिर्यथा—

षट्तर्कीललनाललामनि गते यस्मिन् मुनिस्वामिनि
स्वर्गं वाग्जननी शुचां परवशा काश्मीरमाशिश्रियत् ।
तत्रापि स्फुरिता रतिर्भगवती जाने हिमाद्रिं गता
तापं तादृशपुत्ररत्नविरहे सोढुं न शक्ताऽन्यथा ॥

*स्वमेतत् । अत्र ललनाललामनीति अविवक्षितवाच्यो ध्वनिः । जाने तादृशेति पदे गुणीभूतव्यङ्ग्ये । जाने इति पदेनोत्प्रेक्ष्यमाणामन्तधर्मव्यञ्जकेनापि वाच्यमेवोत्प्रेक्षणरूपं वाक्यार्थीक्रियते । तादृशेति पदेनासामान्यगुणौघो व्यक्तोऽपि गौणः, स्मृतिरूपस्य वाच्यस्य

---

*आत्मीयमिदं पद्यमित्यर्थः.

अन्योन्ययोगादेवं स्याद्भेदसंख्याऽतिभूयसी ॥

एवमनेन [1]प्रकारेणावान्तरभेदगणनेऽतिप्रभूततरा गणना, तथाहि—शृङ्गारस्यैव [2]भेदप्रभेदगणनायामानन्त्यं का [3]गणना तु सर्वेषाम्। [4]संकलनेन पुनरस्य ध्वनेः त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात्। तथाहि—किञ्चिद्वाच्यतां सहते किञ्चित्त्वन्यथा। तत्र वाच्यतासहमविचित्रं विचित्रं चेति। अविचित्रं वस्तुमात्रम्, विचित्रं त्वलंकाररूपम्। यद्यपि प्राधान्येन तदलं-

---

प्राधान्येन चारुत्वहेतुत्वात्। तयोस्सङ्करो यथा—

'न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः'

इति। अत्र रौद्ररसध्वनिर्वाक्यार्थीभूतः। तस्य व्यङ्ग्यविशिष्टवाच्यवाचिभिः पदैस्सङ्करः विभावादिरूपतया मेऽरय इत्यादिकं रौद्रमेव पुष्णाति। वाच्यस्यैव क्रोधोद्दीपकत्वात् गुणीभूतव्यङ्ग्यता। ध्वनेर्वाच्यालङ्कारसंसृष्टिसङ्करविषयदृष्टान्ताः सुलभत्वान्नोक्ताः। सरसालङ्कारकाव्ये स्वयमूह्याः।

अन्योन्येति। न केवलं ध्वनेः स्वप्रभेदादिभिः संकरसंसृष्टी, यावत्तेषामपि मिथो योगात्ते स्याताम्। किञ्चिदिति। व्यङ्ग्यम्। अयं भावः—वस्त्वलंकाररसादितया त्रिधा व्यङ्ग्यम्। तत्र वस्त्वलङ्काररूपस्य वाच्यतायोग्यताऽस्ति, न तु यदैव व्यङ्ग्यता तदैव वाच्यतेति। अन्यथेति। रसादि कदाचनापि वाच्यतां न सहत इत्यर्थः। वस्तुमात्रमिति। मात्रशब्दादेतदुच्यते यद्विध-

---

[1] प्रकारेण भेदप्रभेद. [2] भेदगणना. [3] गणना सर्वेषां. [4] संकलने पुनरस्य.

कार्यम्, तथाऽपि ब्राह्मणश्रमणन्यायेन तथोच्यते। रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः। स हि रसादिशब्देन शृङ्गारादिशब्देन वाऽभिधीयेत, [1]न चाभिधीयते। तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याप्रतिपत्तेः तदप्रयोगेऽपि विभावादि[2]प्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयत इति निश्चीयते। तेनासौ व्यङ्ग्य एव। मुख्यार्थबाधाद्यभावात् [3]न पुनर्लक्षणीयः।

अर्थान्तरसंक्रमितात्यन्ततिरस्कृत[4]वाच्ययोः वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् प्रतिपादितम्। श-

---

निषेधतदुभयात्मतारूपेण वस्तुनो ध्वनिः संक्षिप्तः, न त्वलङ्काराणां, बहुत्वात्। तथेति। ध्वनिरप्यलङ्कारतया निर्दिश्यत इत्यर्थः। लक्षणस्त्विति। रसादेर्वाच्यतायोग्यताऽपि नेत्यर्थः। केवलं व्यञ्जनव्यापारेणास्वाद्यमानजीवतया भाति, न व्यापारान्तरेणेत्याह—स हीति। तत्प्रयोगेऽपीति। रसादिशृङ्गारादिशब्दप्रयोगेऽपि। तदप्रयोगेऽपीति। रसादिशृङ्गारादिशब्दाप्रयोगेऽपि। प्रतीयत इति। प्रतीतिविषयः। मुख्यार्थेति। न हि विभावादौ मुख्येऽर्थे बाधोऽस्ति, येन लक्षणा स्यात्।

वस्तुमात्रेति। आस्तां रसरूपं व्यङ्ग्यं दूरे तावदित्यर्थः। प्रागिति। 'साहिता तु प्रयोजने' (३८ पु.) इत्यत्र। एतेन लक्षणाऽपि व्यङ्ग्यं विना न स्यादित्यर्थः। ततो यदा लक्षणायां वस्तुरूपमपि व्यङ्ग्यं न लक्ष्यत्वमागतं तदा कथं रसादेर्लक्ष्यता।

---

[1] नाभिधीयते. [2] प्रयोगे प्रतिपत्ते. [3] न लक्षणीयः. [4] वाच्ययोस्तु वस्तुमात्ररूप.

ब्दशक्ति[1]मूले तु अभिधाया नियन्त्रणेनानभिधेयस्य अर्थान्तरस्य तेन सहोपमादेरलंकारस्य च निर्विवादं व्यङ्ग्यत्वम् ।

अर्थशक्तिमूलेऽपि विशेषे संकेतः कर्तुं न युज्यत इति सामान्यरूपाणां पदार्थानामाकाङ्क्षासंनिधियोग्यतावशात्परस्परसंसर्गो यत्रापदार्थोऽपि विशेषरूपो वाक्यार्थः तत्र अभिहितान्वयवादे का वार्ता व्यङ्ग्यस्याभिधेयतायाम् ।

येऽप्याहुः—शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥

---

**अर्थान्तरस्येति** । अप्राकरणिकस्य । **तेनेति** । अर्थान्तरेण सह उपमादेरलङ्कारस्य ।

**न युज्यत इति** । सङ्केतो हि न नियते विशषांशे, आनन्त्याद्व्यभिचाराच्च । **संसर्ग इति** । विशेषणविशेष्यभावरूपोऽन्वयः । **अपदार्थोऽपीति** । अपिशब्दोऽत्र व्यवहितक्रमः, तेन यदा वाक्यार्थोऽप्यपदार्थो नाभिधेयः, तदोक्तानां पदानां उत्तरकालमन्वयमन्योन्यामुक्तत्वरूपं वदतां मते व्यङ्ग्यो ऽर्थोऽपदार्थ एवानभिधेय इत्यर्थः । **विशेषरूप इति** । 'सामान्यानन्यथासिद्धेर्विशेषं गमयन्ति हि' इति न्यायात् ।

**येऽपीति** । आन्विताभिधानवादिमतमेतत् । **शब्देति** । **शब्दः** श्रोत्रेण प्रत्यक्षः, वृद्धघटादिरूपाभिधेयौ तु चक्षुषा । **प्रतिपन्नत्वमिति** । अनेनायमर्थो ज्ञात इति प्रतिपत्तिः । पदार्थानयनादि चेष्टाहेतुकानुमानेन पश्यति परिच्छिनत्तीत्यर्थः ।

---

[1] मूले त्वभिधानियन्त्रेण.

अन्यथानुपपत्त्या [1]तु बोधेच्छक्तिं द्वयात्मिकाम् ।
[2]अर्थापत्त्याऽवबुध्यन्ते संबन्धं त्रिप्रमाणकम् ॥

इति प्रतिपादितदिशा 'देवदत्त! गामानय' इत्याद्युत्तमवृद्धवाक्यप्रयोगात् देशाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति अनेनास्माद्वाक्यादेवं[3]विधोऽर्थः प्रतिपन्न इति तच्चेष्टयाऽनुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणसंबन्धमवधार्य बालस्तत्र व्युत्पद्यते ।

---

द्वयात्मिकामिति । वृद्धज्ञानान्यथानुपपत्त्या शब्दे वाचिकां पदार्थे च वाच्यां शक्तिमिति। क्वचिच्च 'द्वयाश्रिताम्' इति पाठः। द्वयं शब्दार्थस्वभावम् । एवं त्रिप्रमाणं सम्बन्धमर्थापत्त्यैव जानते। साक्षाच्छक्तिविषयतया हि व्यापारादर्थापत्तेः कारणता, पूर्वयोस्त्वितिकर्तव्यतारूपतेति भावः । किञ्चापरं व्याख्यानं—ज्ञानान्यथाऽनुपपत्त्याऽर्थापत्तिप्रमाणेन द्वयाश्रितां शक्तिं पश्यति बालः । इत्थं त्रिप्रमाणं सम्बन्धमवबुध्यन्ते बुधाः प्रतिपादयन्तीति भावः । तच्चेष्टयेति । मध्यमवृद्धचेष्टया । तत्रेति । वाक्यवाक्यार्थविषये । अखण्डेति वाक्यवाक्यार्थविशेषणं लोकरूढ्योक्तं, यावता त्वन्वितवादिनां मते अखण्डौ वाक्यवाक्यार्थौ न स्तः । व्यवहर्तृगतयोः शब्दप्रयोगार्थप्रतीत्योरविभक्तोद्देशवाक्यवाक्यार्थनिष्ठतया पूर्वं हेतुमद्भावावगतौ सत्यामखण्डत्वप्रतीतिस्स्यादित्यर्थः ।

---

[1] तु बुध्येच्छक्तिं [2] अर्थापत्त्या च बुध्यन्ते (अर्थापत्त्यैव बुध्यन्ते).
[3] विधोऽर्थो ज्ञात इति.

परतः 'चैत्र! गामानय, देवदत्त! अश्वमानय, देवदत्त! गां नय' इत्यादिवाक्यप्रयोगे तस्यतस्य शब्दस्य तंतमर्थमवधारयतीति अन्वयव्यतिरेकाभ्यां प्रवृत्तिकारि वाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानामान्वितैः पदार्थैरन्वितानामेव संकेतो गृह्यत इति विशिष्टा एव पदार्था वाक्यार्थः, न तु पदार्थानां वैशिष्ट्यम्। यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि

---

**परत इति।** तदनन्तरं 'चैत्र गामानय' इत्यादिवाक्येषु कदाचित्कस्यापि शब्दस्योद्वापः परावृत्तिरिति यावत्। **व्यतिरेकाभ्यामिति।** पदानां सङ्केतो गृह्यत इति योगः। **निवृत्तिकारीति।** प्रवृत्तिनिवृत्तिरूपो वृद्धव्यवहारः, प्रवृत्तिनिवृत्ती च विशिष्टार्थनिष्ठे, अतो विशिष्ट एवार्थे पदानां सम्बन्धावगतिः। **वाक्यमेवेति।** अनन्वितार्थपदप्रयोगे काऽपि प्रवृत्तिर्न सिध्यति। **पदानामिति।** अन्वितानामिति योगः। **अन्वितैरिति।** पदान्तरैः पदानां अर्थान्तरैरर्थानामन्वय इति भावः। **विशिष्टा एवेति।** विशिष्टा एवान्विताः पदार्थाः पदानामभिधेयाः, न तु पदार्था एव केवलाः। **अयमाशयः**—वाक्यार्थस्तावत् क्रियाकारकयोगात्मा। कारकक्रियाश्च सम्बन्धाभिमुख्येन मिथो विरहासहिष्णुत्वेनान्विता एव स्वशब्दैरुच्यन्त इत्यर्थः। **न त्विति।** सामान्यत्वेनोक्तानां पदार्थानां पश्चाद्वैशिष्ट्यं स्यादिति। **यद्यपीति।** सङ्केतगोचर इति योगः। **अयं भावः**—यदि पदार्थाः पदार्थान्तरविशेषैरन्वितास्सङ्केतविषयाः स्युस्तदा मैत्र

प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्त इति पदार्थान्तरमात्रेणान्वितः पदार्थः संकेतगोचरः, तथाऽपि सामान्यावच्छादितो विशेषरूप [1]एवासौ प्रतिपद्यते व्यतिषक्तानां पदार्थानां तथाभूतत्वादित्यन्विताभिधानवादिनः । तेषामपि मते सामान्याविशेषरूपः पदार्थः संकेतविषय इत्यतिविशेषभूतो

मैत्रीं सूत्रयेत्यादिवाक्य एषां पदानामत्रैव वाक्ये अर्थप्रतिपादकता स्यान्नान्यवाक्यस्थानां, विशेषान्वितानां सङ्केतविषयत्वात्, तथा सति स एवायमिति प्रत्यभिज्ञाप्रत्ययोऽपि न स्यादिति । तानीति । यानि वाक्यान्तरे प्रयुक्तदृष्टानि । सामान्यावच्छादित इति । न्यग्भूतसामान्यः । असाविति । पदार्थः । व्यतिषक्तानामिति । 'वाक्यमेव प्रयोगार्हम्' इति न्यायात् पदार्थान्तरैर्युक्तानाम् । तथाभूतत्वादिति । सामान्यावच्छादितविशेषरूपत्वात् । विशेषरूप इति । सामान्यप्रतीतिनान्तरीयका विशेषाः, 'निर्विशेषं न सामान्यं भवेच्छशविषाणवत्' इति न्यायात् । ततः सामान्यावच्छादितो विशेष एव सङ्केतस्य विषयभूतः, सामान्यं त्वनुक्तमपि ज्ञायत इत्याह—अतीति । विशेषमतिक्रान्तो यः स्वभावः सोऽतिविशेषः तं भूतः प्राप्तोऽतिविशेषभूतः सामान्योऽर्थः । केवलपदार्थरूप इति यावत् । यदि वा विशेषमतिक्रान्तः अतिविशेषः, स चासौ भूतश्च स तथा सामान्योऽर्थः ।

[1] एवेति निश्चीयते.

वाक्यार्थान्तर्गतोऽसंकेतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते तत्र [1]दूरेऽर्थान्तरभूतस्य निश्शेषच्युतेत्यादौ विध्यादेश्चर्चा । [2]अनन्वितोऽर्थोऽभिहितान्वये । पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधाने । अन्वितविशेषस्त्ववाच्य एवेत्युभयनयेऽप्यपदार्थ एव वाक्यार्थः ।

यदप्युच्यते—

'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते'

इति । तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा । शब्दस्य प्रकाशकत्वान्न कारकत्वम् । ज्ञापकत्वं त्वज्ञातस्य कथम्? । [3]ज्ञातत्वं च संकेतेनैव । स चान्वितमात्रे । एवं च निमित्तस्य

---

**यत्रेति** । वाक्ये । यदाऽन्विताभिधानवादे सामान्योऽप्यर्थो न वाच्यस्तदा का वार्ता व्यङ्ग्यस्य वाच्यतायाम् । **अनन्वित इति** । अविशिष्टः सामान्यरूपः पदानामर्थः सङ्केतस्य विषय इति शेषः । **अन्वितेति** । वाक्यार्थस्त्वपदार्थ एवेति योगः । **अन्वितविशेषः**—सर्वाङ्गसम्पूर्णः केवलविशेषरूपः । एतत् वाक्यार्थविशेषणम्, इति पक्षद्वयेऽप्यपदार्थ एव वाक्यार्थः ।

**यदपीति** । अन्विताभिधानवादिभिः प्राभाकरैः । **नैमित्तिकार्थेति** । वाक्यार्थतात्पर्यं नैमित्तिकोऽर्थः । **निमित्तानीति** । प्रस्तावाच्छब्दाः, ततस्तात्पर्यानुसारेण यदा शब्दाः कल्प्यन्ते तदा व्यङ्ग्यं वाच्यमेवेति भावस्तेषाम् । **अन्वितमात्र इति** । सामान्यावच्छादितविशेषरूपे ॥

---

[1] दूरेऽर्थान्तरस्य. [2] अनन्वितार्थो. [3] ज्ञातत्वं संकेतेनैव.

नियतनिमित्तत्वं यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव कथम्? इति [1]नैमित्तिकानुसारेण निमित्तानि कल्प्यन्त इत्यविचारिताभिधानम् ।

ये त्वभिदधति 'सोऽयमिषोरिव [2]दीर्घदीर्घतरो व्यापार इति, यत्परः शब्दः स शब्दार्थ इति च विधिरेवात्र वाच्य इति' तेऽप्यतात्पर्यज्ञास्तात्पर्यवाचोयुक्तेर्देवानांप्रियाः । तथा हि—'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति कारक-

निश्चितमिति । निमित्तेषु सङ्केतो न नैमित्तिकेऽर्थे, तत्कथं नैमित्तिकस्य साक्षात्प्रतीतिः, तदप्रतीतौ कथं पदार्थावगतिर्नियतनिमित्ता स्यादिति ।

इषोरिवेति । यथा शरो वर्मोरसी भित्त्वा जीवितमादत्ते प्रवृत्तिभेदाभावेऽपि तथा वाक्यमप्यभिधयैव वाच्यव्यङ्ग्ये वक्तीति भावः । अभिधा हि यत्पर्यन्ता तत्रैवाभिधायकत्वम्, तत्पर्यन्तता च प्रधानध्वनावेव । एतेन वाच्यव्यङ्ग्ययोरभिधैव व्यापारः । विधिरेवेति । विधिरेव वाच्यो न पुनर्निषेधः, अवान्तरत्वात्, विधेस्तु निर्वाहत्वाद्वाच्यतेति भावः । अत्रेति । निश्शेषच्युतेत्यादौ । अतात्पर्यज्ञा इति । 'यत्परश्शब्दः स शब्दार्थः' इत्येतन्न जानन्तीत्यर्थः । भूतमिति । प्रमाणान्तरेण सिद्धम् । भव्यं भवतीति व्युत्पत्तेः भव्यं साध्यमिति यावत् । कारकेति । यथा चैत्रः काष्ठैः स्थाल्यामन्नं पचतीत्यादावन्नपाकश्चेदन्यतस्सिद्धः, तदा स्थाल्या-

[1] नैमित्तिकार्थानुसारेण. [2] दीर्घो व्यापार.

पदार्थाः क्रियापदार्थेनान्वीयमानाः[1] प्रधानक्रियानिर्वर्तकस्वक्रियाभिसंबन्धात् साध्यायमानतां प्राप्नुवन्ति । ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते । यथा ऋत्विक्प्रचरणे प्रमाणान्तरात्सिद्धे 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यत्र लोहितोष्णीषत्वमात्रं विधेयम् । हवनस्यान्यतस्सिद्धेः 'दध्ना जुहोति' इत्यादौ दध्यादेः [2]कारणत्वमात्रं विधेयम् । क्वचिदुभयविधिः, क्वचित्त्रिविधिरपि । यथा 'रक्तं पटं वय' इत्यादौ एकविधिर्द्विविधिस्त्रिविधिर्वा । ततश्च यदेव विधेयं तत्रैव तात्पर्यमित्युपात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु [3]प्रतीतमात्रे । एवं हि 'पूर्वो धावति' इत्यादाव[4]पराद्यर्थेऽपि क्वचि-

---

धारत्वमेव विधेयम्, तस्यैव साध्यत्वात् । **प्रधानेति** । प्रचरणरूपा क्रिया । **स्वक्रियेति** । लोहितोष्णीषत्वविधानाद्याः क्रियाः । **साध्यायमानतां** साध्यरूपताम् । **यावदप्राप्तमिति** । यावन्मात्रं साध्यं तावन्मात्रं विधेयमिति भावः । **लोहितोष्णीषत्वमात्रमिति** । यत्तस्यैव सर्वैः कारकैः साध्यत्वात् । अस्मिन् दृष्टान्तद्वये वस्त्वेकमेव विधेयमिति मात्रशब्दाल्लभ्यते । **रक्तं पटमिति** । अत्र रक्तत्ववयनपटभवनानां क्रमयौगपद्याभ्यां साध्यत्वे एकाद्वित्र्याद्विविधिः । **उपात्तस्यैवेति** । उपात्तस्यैव शब्दस्य सम्बन्धिन्यर्थेऽभिधेये तात्पर्यं, न तु हेत्वन्तरेण ज्ञातमात्रे व्यङ्ग्येऽप्यर्थे तात्पर्यप्रसङ्गः । **एवमिति** । ज्ञातमात्रे तात्पर्यप्रसङ्गेऽङ्गीक्रियमाणे । पूर्वशब्दस्य

---

1 क्रियाभिनिर्वर्तक. 2 करणत्व. 3 प्रतीतिमात्रे. 4 परार्थेऽपि.

त्तात्पर्यं स्यात् ।

यत्तु '[1]विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्थाः' इत्यत्र एतद्गृहे न भोक्तव्यमित्यत्र तात्पर्यमिति स एव वाक्यार्थः, इति। उच्यते—तत्र चकार एकवाक्यतासूचनार्थः। न चाख्यात[2]वाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेनाङ्गता कल्पनीयेति 'विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा माऽस्य गृहे [3]भुङ्क्थाः' इत्युपात्तशब्दार्थ एव तात्पर्यम्।

सापेक्षत्वादपराद्यर्थोऽपि ज्ञायत इति तत्रापि किं तात्पर्यम्?।

क्वचित्प्रतीतमात्रेऽपि तात्पर्यं स्यादित्याशङ्क्याह—यत्त्विति। भुङ्क्था इत्यत्रेत्यत्र 'अत्र' इति वाक्यद्वये, न भोक्तव्यमित्यत्रेत्यत्र 'अत्र' इत्यर्थे, उच्यत इत्याचार्योत्तरम्। तत्रेति। भवदुक्ते विषं भक्षयेत्यादिवाक्यद्वये। न चैतद्वाक्यद्वयमित्याह—चकार इति। तथाऽऽह जैमिनिः—

'विभागे सति साकाङ्क्षं चेत् भवेत्तत एकवाक्यमर्थैकत्वात्' इति। अत एव—

* न दूये नः पूर्वं नृपतिमनरण्यं यदवधीः

इत्यादौ द्विवाक्यत्वेऽपि साकाङ्क्षत्वेनैकवाक्यतायां वस्नसादयः सिद्धाः। यच्छब्दादिश्च साकाङ्क्षताहेतुः। यदि तु विभागे निराकाङ्क्षं तदा द्वे वाक्ये, अर्थद्वयवशात्। उपात्तेति। न हि मित्रादेः कोऽपि भोजननिषेधनं कुर्वाणो विषमनुमन्यत इति ज्ञात-

[1] विषं भक्षय मा चास्य गृहे भुङ्क्ष्वेत्यत्रैतद्गृहे. [2] वाक्ययोरङ्गाङ्गि.
[3] भुङ्क्ष्वेत्युपात्त. * अनर्घराघवनाटके. 6 अङ्के 58 श्लो.

यदि च शब्दश्रुतेरनन्तरं [1]यावानर्थो लभ्यते तावति शब्दस्याभिधैव व्यापारः, [2]ततः कथं 'ब्राह्मण! पुत्रस्ते जातः' 'ब्राह्मण! कन्या ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम्? कस्माच्च लक्षणा? लक्षणीयेऽप्यर्थे दीर्घ[3]दीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः, किमिति च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वपूर्वबलीयस्त्वम्, इत्य

---

वक्त्रादिस्वरूपो बोद्धा गरग्रसनानुमत्या तद्गृहे भोजनमतिदुष्टं तात्पर्यतो जानातीत्यत्राप्युपात्त एव तात्पर्यम्।

हर्षेति। हर्षादिकं हि पुत्रस्ते जात इत्यादिवाक्यार्थप्रतीत्या जन्यते। न च शब्दस्य प्रकाशकत्वात् जनकत्वं, किन्तु ज्ञापकत्वमिति जननाद्भिन्नं व्यञ्जनम्। अयं भावः—सङ्केतापेक्षी शब्दोऽर्थं वक्ति, न निरपेक्षः। यत्रैव वाच्यस्य सङ्केतस्तत्रैवाभिधा नार्थान्तरे, तत्र सङ्केताभावात्। मीमांसकं प्रत्याह—कस्माच्चेति। श्रुतीति। यस्याभिधेयेनार्थेन सह नैकत्व्यं स बलीयान्। यस्य च व्यवहितत्वं स दुर्बलः। व्यवहिताव्यवहितत्वे च नाभिधागम्ये, किन्तु व्यङ्ग्ये। एतच्च त्वया नेष्यते। तत्कथमेकस्य बलीयस्त्वं, श्रुत्यादीनामभिधाव्यापारस्य समानत्वात्। प्रकृतिप्रत्ययश्रुत्योः स्वार्थाभिधायकत्वेन पदस्य कारकविभक्तीनां च विनियोजकत्वेन लिङ्गादीनां विधिसामर्थ्येन वेति क्रमेणाभिधात्रीविनियोक्त्रीविधात्रीसंज्ञाः तिस्रश्श्रुतयः। यदर्थस्या-

---

[1] यावानर्थोऽवगम्यते. [2] तत्कथं. [3] दीर्घाभिधा.

भिधानं शब्दश्रवणमात्रादेवावगम्यते सा श्रुतिः । अङ्गत्वापादनं प्रधाने श्रुत्यादीनामर्थः । क्रमेणोदाह्रियते—

'[1] ऐन्द्र्या गार्हपत्यमुपतिष्ठते' अत्र गार्हपत्योपस्थाने ऐन्द्र्या ऋचो विनियोगस्तृतीयोक्त इति विनियोक्त्री श्रुतिः ।

'बर्हिर्देवसदनं दामि' अत्र दामीति लवनलिङ्गादेवाश्रयो दर्भोऽनेन मन्त्रेणोत्पाद्य इति प्रतीयते ।

'श्वेतं छागमालभेत' अत्रैकवाक्योपादानात् श्वेतगुणस्य छागावच्छेदकत्वेन क्रियाङ्गभावो गम्यते । यथा वा—

'[2]अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति'

इत्यत्र अरुणादीनां क्रयेण सम्बन्धः श्रौतः, अरुणैकहायन्यादीनां मिथः पुनर्वाक्यीयः ।

दर्शपूर्णमासप्रकरणे '[3]समिधो यजति' 'तनूनपातं यजति' 'इडो यजति' 'बर्हिर्यजति,' 'स्वाहाकारं यजति' इति पञ्च प्रयाजा उक्ताः । ते च दर्शपूर्णमासयोरेव क्रियन्ते, तदङ्गत्वमवगम्यत इत्यर्थः । '[4]अग्नेरहं देवयज्ययाऽन्नादो भूयासम्' 'दब्धिरस्यमब्धो भूयासं तदमुं दभेयम्' 'अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्'। इति मन्त्रत्रयादाग्नेयो यागः उपांशुयागः अग्नीषोमीयो यागश्चेति यागत्रयं क्रमेण स्थितम् । तत्र प्रथमतृतीयमन्त्राभ्यां देवयज्यालक्षणाल्लिङ्गादाद्यन्तौ यागावाक्षिप्येते । द्वितीयेन मन्त्रेण द्वितीयो यागः । यागस्तु उपांशुयागः स्फुरदोष्ठमुद्रस्वरस्थानवशात् ॥

---

[1] तै. सं. 5-5-7. [2] तै. सं. 6-1-6.
[3] तै-सं. 1-6-1. [4] तै-सं. 1-6-2.

उद्गाता अध्वर्युः होतेति उद्गायतीत्यादि समाख्यया अन्वर्थसंज्ञाबलात् सामयजुऋग्वेदेष्वाधिकृत इति निश्चीयते। तेष्वङ्गभाव इत्यर्थः। ऐन्द्र्येत्यत्र ऐन्द्र्या ऋच इन्द्रप्रकाशनसामर्थ्यलक्षणाल्लिङ्गादिन्द्रोपस्थापनविनियोगो गार्हपत्यमिति द्वितीयाश्रुत्या बाध्यते। तेनैन्द्र्याऽप्येतया गार्हपत्यस्यैवोपस्थापनं भवति।

अथवेत्थमपि श्रुत्यादीनां पूर्वपूर्वबलीयस्त्वं, यथा—भोः सैन्धवमानयेत्यत्र समाख्यया नाम्ना सैन्धवशब्दो लवणादिस्वार्थस्सन् स्थानेन रसवक्या? समाख्यां बाधित्वा लवणार्थः कृतः, अतः स्थानं बलीयः। स्थानेऽपि यदाऽश्ववार्ताप्रस्तावः तदा तेन स्थानोचितलवणबाधेन अश्वार्थः कृतः, अतः प्रस्तावो बली। प्रस्तावार्पितमप्यसामान्यं त्यक्त्वा कर्मरूपे विशेषे वर्तत इति प्रस्तावाद्वाक्यं बलीयः। वाक्यार्पितमपि सामान्यं कर्मत्वं त्यक्त्वा चित्तलादिना? स्त्रीपुंस्त्वादिना वा लिङ्गेन विशिष्टेऽश्वे वर्तत इति वाक्याल्लिङ्गं बलीयः। लिङ्गालब्धेऽप्यश्वविशेषे यदाऽऽनयेत्यत्रोदात्तश्रुतिः तदाऽऽनयेति विधेयं, सर्वमप्यन्यदनुवाद्यमिति सर्वेभ्यः श्रुतिराधिका। श्रुतिर्निरन्तरार्थनिष्ठः शब्दव्यापारः।

यद्वा—अयमेवार्थः प्रकारान्तरेण कथ्यते, यथा—उच्चैश्श्रवसं तेजसा भान्तं वेगोपेतं सुभगं श्वेतं कटकयोग्यं मन्दुरायाः सैन्धवमानय। अत्र पूर्वपूर्वबलीयस्त्वं स्फुटम्॥

न्विताभिधान[1]वादेऽपि विधेरपि सिद्धं व्यङ्ग्यत्वम् ।

किं च 'कुरु रुचिम्' इति पदयोर्वैपरीत्ये काव्यान्तर्वर्तिनि कथं दुष्टत्वम्? न ह्यत्रासभ्योऽर्थः पदार्थान्तरैरन्वितः, इत्यनभिधेय एवेत्येवमाद्यपरित्याज्यं स्यात् ।

यदि च [2]वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते तदाऽसाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात् । न चानुपपन्नम्, सर्वस्यैव विभक्ततया प्रतिभासात् । वाच्यवाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयणे तु व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेवौचित्येनोपपद्यत [3]एव विभागव्यवस्था ।

---

**विधेरपीति** । निश्शेषच्युतेत्यत्र यो विधिः सर्वसम्मतस्तस्यापीत्यर्थः । **वैपरीत्य इति** । कृते सतीत्यध्याहार्यम् । रुचिं कुरु इतिरूपं वैपरीत्यम् । **काव्यान्तर्वर्तिनीत्यस्याभिप्रायः**—यत्काव्यमध्यस्थापिते वैपरीत्ये दोषः, अन्यत्र तु का दोषचर्चा । **असभ्योऽर्थ इति** । चिकुरितिरूपः । योन्यन्तर्वर्ती मणिश्चिकुः । **एवमादीति** । रुचिं कुर्वित्यादि । अन्विताभिधायिनां दूषणमेतत् । **विभागकरणमिति** । **अयं भावः**—असाधुत्वादयो लक्षणवैकल्यादयो दोषा दोषा एव, कष्टत्वादयस्तु श्रुतिदुष्टादिरूपाः स्वार्थवाचकत्वे समानेऽपि शृङ्गारादौ दोषाः, रौद्रादौ तु गुणाः, न तु दोषाः ॥

---

[1] वादे विधेरपि. [2] वाच्यवाचकभावव्यतिरकेण. [3] एवेयं वि.

'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः' इत्यादौ [1] पिनाक्यादिपदवैलक्षण्ये किमिति कपाल्यादिपदानां काव्यानुगुणत्वम् ।

अपि च वाच्योऽर्थः सर्वान् प्रतिपत्तॄन् प्रत्येकरूप एवेति नियतोऽसौ । न हि 'गतोऽस्तमर्कः' इत्यादौ वाच्योऽर्थः क्वचिदन्यथा भवति । प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया नानात्वं भजते । तथा च 'गतोऽस्तमर्कः' इत्यतः सपत्नं प्रत्यवस्कन्दनावसर इति, अभिसरणमुपक्रम्यतामिति, प्राप्तप्रायस्ते प्रेयानिति, कर्मकरणान्निवर्तामह इति, सान्ध्यो विधिरुपक्रम्यतामिति, दूरं मा गा इति, सुरभयो गृहं प्रवेश्यन्तामिति, सन्तापोऽधुना न भवतीति, विक्रेयवस्तूनि संह्रियन्तामिति, [2] नागतोऽद्यापि प्रेयानित्यादिरनवधिर्व्यङ्ग्योऽर्थः [3] तत्र तत्र प्रतिभाति ।

वाच्यव्यङ्ग्ययोः निःशेषेत्यादौ निषेधविध्यात्मना,

---

किमितीति । यदि व्यङ्ग्यव्यञ्जकभावो नेष्यत इति शेषः । पुनरप्यन्विताभिधायिनं दूषयति—अपिचेति । तत्रतत्रेति । प्रस्तावववक्तृप्रभृतिविशेषे ।

विध्यात्मनेति । स्वरूपस्य भेदेऽपि यद्येकत्वमिति योगः । निषेधो वाच्यो विधिश्च व्यङ्ग्यः । तथा संशयो वाच्यः, शान्तशृङ्गारिणोरेकतरानिश्चयश्च व्यङ्ग्यः ।

---

[1] पिनाकिपद. [2] नागतोऽद्य प्रेया. [3] तत्र भाति.

मात्सर्यमुत्सार्य विचार्य कार्यं
आर्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणां
उत स्मरस्मेरविलासिनीनाम् ॥ १३४ ॥

इत्यादौ संशय-शान्तशृङ्गार्यन्यतरनिश्चय-रूपेण,

कथमवनिप ! दर्पो यन्निशातासिधारा-
दलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः ।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥ १३५ ॥

इत्यादौ निन्दास्तुतिवपुषा स्वरूपस्य, पूर्वपश्चाद्भावेन प्रतीतेः कालस्य, शब्दाश्रयत्वेन [1]शब्दतदेकदेशतदर्थवर्णसङ्घटनाश्रयत्वेन चाश्रयस्य, [2]शब्दानुशासनज्ञानेन प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन तेन चावगम इति निमित्तस्य,

---

अपगताङ्गा मृता। वल्लभा भार्या। अपि नीता उद्वालिताऽपि। निन्दा वाच्या स्तुतिश्च व्यङ्ग्या। स्वरूपस्येति । वाच्यव्यङ्ग्ययोः स्वरूपस्य। कालस्येति । प्राग्वाच्यं ततो व्यङ्ग्यमिति व्यक्तः पूर्वापरभावः । शब्देति । वाच्यस्य शब्द एव एक आश्रयः। व्यङ्ग्यस्य तु शब्दैकदेशादिकमाश्रयः । एषां व्यञ्जकत्वं प्रागुक्तम् । शब्दशब्देनात्र प्रकृतिः पदं वाक्यं चाभिधीयते । निमित्तस्येति । वाच्यस्य शब्दशास्त्रज्ञानं हेतुः । व्यङ्ग्यस्य तु प्रस्तावादिसहायप्रतिभाशुद्धिसहितं

---

[1] शब्दशब्दैकदेश. [2] शब्दार्थशासन.

**बोद्धृमात्रविदग्धव्यपदेश्ययोः प्रतीतिमात्रचमत्कृत्योश्च करणात्कार्यस्य, 'गतोऽस्तमर्कः' इत्यादौ प्रदर्शितनयेन संख्यायाः,**

**कस्स व ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरम्।**
**सभमरपडमग्घाइणि वारिअवामे सहसु एण्हिम् ॥ १३६**

{ छाया—कस्य वा न भवति रोषो दृष्ट्वा प्रियायास्सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि वारितवामे! सहस्वेदानीम् ॥ }

---

तच्छब्दशास्त्रज्ञानमिति स्पष्टो निमित्तभेदः । **बोद्धृमात्रेति** । वाच्यवेदी बोद्धा, व्यङ्ग्यवेदी तु विदग्धः । तथा वाच्योऽर्थः प्रतीतिमात्रं, व्यङ्ग्यस्तु चमत्कारं करोतीति कार्यभेदः । **संख्याया इति** । एतद्विचारः प्रागुक्तः ।

**कस्स वेति** । कस्य वा अनीर्ष्यालोरपि । **सव्वणं** सव्रणम्। सभ्रमरपद्मस्याघ्रात्रि आघ्राणशीले! । अत एव वारिते वारणायां वामे तदनङ्गीकारिणि! । सहस्वोपालम्भानिति शेषः । 'इदानीं सहस्व' इति वाच्यं सखीविषयम् । 'भृङ्गेणाधरः खण्डितो न त्वन्येन तन्निरपराधैवेयम्' इति व्यङ्ग्यं पतिविषयम् । 'अद्य मया समर्थितं पुनः प्रकटं दशनक्षतादिकं न कार्यम्' इति जारविषयम् । 'प्रियायाः सव्रणाधरावलोके रोषस्स्यादप्रियायास्तु त्यागहेतुः प्रीतिस्तदानन्दो मा क्रियतां युष्माभिरिति अहो सौभाग्यमस्याः' इति सपत्नीविषयम् । 'अत्रार्थेऽधुनैष किंचिद्वक्ष्यति, त्वं च प्रियत्वादन्यायित्वेन कुप्यन्ती

**इत्यादौ सखीतत्कान्तादिगतत्वेन विषयस्य च भेदेऽपि यद्येकत्वं तत्कचिदपि [1]नीलपीतादौ भेदो न स्यात् । उक्तं हि— '[2]अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च' इति । वाचकानामर्थापेक्षा व्यञ्जकानां [3]तु न तदपेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वम् ।**

पादपातादिभिः प्रार्थ्यसे, सहस्व शोभस्व' इति सौभाग्यख्यापनं व्यङ्ग्यं सखीविषयम् । 'अद्येत्थं, नान्यथाऽस्यां शङ्कनीयम्' इति प्रातिवेशिमकविषयम् । 'अनया युक्त्या मयैव संव्रियते अपराधस्स-ख्याः' इति स्वगर्वख्यापनं विदग्धविषयम् । 'अद्येत्थं संवृतं, भूयस्सा-वधानया भवितव्यम्' इति सखीविषयम् । 'असत्योपपतिपार्श्वात् चुम्बनाद्येव * कार्यं न क्षतादिकं' इत्युपदेशरूपं व्यङ्ग्यमसतीविष-यम् । 'येन विना म्रियते तस्य † प्रियस्यागः सोढव्यं, नोद्घाटनीयं' इति पत्युः पाण्डित्ये सति तद्विषयं व्यङ्ग्यम् । **भेदेऽपीति** । **स्वरू-**पकालाश्रयनिमित्तकार्यसंख्याविषयाणां भेदेऽपि यद्येकत्वमिति योगः । **अयमेव हीति** । अयमेव घटपटयोर्भेदो यज्जलाहरणादिशीतत्रा-णादिविरुद्धधर्माध्यासो मृत्पिण्डादितन्त्वादिकारणभेदश्च । **अयमेव**— घटपटयोर्भेदहेतुर्यज्जलाहरणादीति पूर्वोक्तमेव । यद्वा अयमेव भेदो यद्विरुद्धधर्माध्यासः, अयमेव भेदहेतुर्यत्कारणभेदश्चेति क्रमः । **वाच-कानामिति** । अयं भावः—सङ्केतितार्थाभिधायित्वेनार्थापेक्षिणः शब्दाः,

[1] नीलानलिादौ. [2] अयमेव भेदो. [3] तु न तदपेक्षत्वमपीति.

* कार्यंकारयितव्यमित्यर्थण्यन्तात्यत्प्रत्ययः. † प्रिस्येति । जनस्येति शेषः । तथाच 'प्रियेयमिति कृत्वा अस्या अपराधसहस्व' इति व्यङ्ग्यं विदग्धविषयामितिः सिद्धम्.

किञ्च वाणिरकुडङ्गित्यादौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूप एव यत्र विश्राम्यति तत्र गुणीभूतव्यङ्ग्येऽतात्पर्यभूतोऽप्यर्थः स्वशब्दानभिधेयः प्रतीतिपथमवतरन् कस्य व्यापारस्य [1]विषयतामवलम्बतामिति ।

ननु 'रामोऽस्मि सर्वं सहे' इति, 'रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये! नोचितम्' इति 'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यादौ [2]लक्षणीयोऽप्यर्थो नानात्वं भजते, विशेषहेतुश्च भवति, तदवगमश्च

---

व्यञ्जकास्तु मृदुवर्णादयोऽर्थनिरपेक्षाः, तत्कथं वाचकत्वमेव व्यञ्जकत्वम् ।

**वाच्यं स्वरूप एवेति** । इदं मर्म—प्रथमं वाच्यं तावत् स्वं प्रकाश्य व्यङ्ग्यं प्रत्याययति। ततस्तृतीयकक्ष्यायां तदेव प्राधान्येन प्रत्यावृत्य स्वरूप एव विश्राम्यति । अचारुत्वाद्व्ननं नोन्मीलयतीत्यर्थः । **अतात्पर्येति** । व्यङ्ग्यमप्रधानं, तद्वाच्यत्वेन तात्पर्यवाद्यपि न मन्यते, अतत्परत्वाच्छब्दस्येति भिन्नं वाचकत्वाद्व्यञ्जकत्वम् । **अनभिधेय इति** । रसादिरूपः । **कस्येति** । अर्थाद्व्यञ्जनव्यापारस्यैव ।

ननु यथा व्यङ्ग्यः प्रस्तावादिबलादनेकस्तथा लक्ष्योऽपीति तत्र व्यङ्ग्यस्यान्तर्भावो लक्ष्य इत्याह—**ननु रामोऽस्मीति**। अत्र वनवासादिरनन्तो लक्ष्योऽर्थः । **रामेणेति** । अत्र रामपदं साहसैकरसत्वाद्यनन्तलक्ष्यार्थसङ्क्रमितवाच्यम् । **विशेषेति** । यथा व्यङ्ग्यवेदी

---

[1] विषयतामवलम्बताम् । [2] लक्षणीयोऽर्थो.

शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम ? । उच्यते—[1]लक्षणीयस्यार्थस्य नानात्वेऽपि अनेकार्थशब्दाभिधेयवन्नियतत्वमेव । न खलु मुख्येनार्थेन अनियतसंबन्धो लक्षयितुं शक्यते । प्रतीयमानस्तु प्रकरणादिविशेषवशेन नियतसंबन्धोऽनियतसंबन्धः संबद्धसंबद्धश्चेति द्योत्यते। न च

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसए पलोएहि ।
मा पहिअ रत्तिअंधअ सेज्जाए मह णिमज्जिहिसि ॥

(छाया—श्वश्रूरत्र निमज्जति अत्राहं दिवसके प्रलोकय ।
मा पथिक रात्र्यन्ध शय्यायामावयोर्निमङ्क्ष्यसि ॥)

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ मुख्यार्थबाधः, तत्कथमत्र लक्षणा? लक्षणायामपि व्यञ्जनमवश्य[2]माश्रयितव्यमिति प्रतिपादितम् । यथा च समयसव्यपेक्षाऽभिधा तथा

---

विदग्ध इति व्यपदिश्यते तथा लक्ष्यवेदी लक्षक इत्यपि तुल्यम् नामेत्यसूयायाम् । अनेकार्थेति । हरिशब्दार्थवत् । न खल्विति । अनेन तद्योगादिकं नियतत्वमुक्तं, यथा गङ्गाशब्दो मुख्येन स्वार्थेन सम्बद्धं तटादि लक्षयति न तथा वनादि लक्षयितुं शक्नोति । ध्वनिस्तु प्रस्तावादिसामग्रीवशाद्विचित्रो भाति ।

अत्तेति । ह्रस्वं दिवसं दिवसकम् । दिवसशब्दः पुंक्लीबः । ततोऽल्पं दिनमस्ति तस्मात्प्रलोकय । यदि वा *'कालाध्वभाव' इत्याधारे द्वितीयेति । तत्कथमिति । लक्षणां विनाऽपि व्यञ्जकत्वं स्यादित्यर्थः,

---

[1] लक्षणीयार्थस्य. [2] माश्रयणीयमिति.

* कालाध्वभावदेशं वा कर्म चाकर्मणाम्. हे-सू-२-२-२३.

मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा। अत एवाभिधापुच्छभूता सेत्याहुः।

न च लक्षणात्मकमेव ध्वननम्, [1]तदनुगमेन तस्य दर्शनात्। न च तदनुगतमेव, अभिधावलम्बनेनापि तस्य भावात्। न चोभयानुसार्येव, अवाचक[2]वर्णानुसारेणापि तस्य दृष्टेः। न च शब्दानुसार्येव, अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य प्रसिद्धेः, इत्यभिधातात्पर्यलक्षणात्मकव्यापारत्रयातिवर्ती ध्वननादिपर्यायो व्यापारोऽनपह्नवनीय एव।

---

यतोऽत्राभिधामूलत्वम्। अभिधापुच्छेति। अमुख्यया वृत्त्या सङ्केतग्रहणस्यापि तत्र भावादभिधावयवत्वमेव लक्षणायाः, *तदेवाभिधाव्यापारमाश्रिता, लक्षणायास्तद्बाधेनोत्थानात्। ध्वनेस्तु अभिधाव्यापारोत्तीर्णत्वादिति कथं भिन्नविषयत्वेन व्यञ्जनलक्षणयोरैक्यम्।

तदनुगमेनेति। लक्षणानुगमेन ध्वननस्य दर्शनात्। तदनुगतमेवेति। लक्षणानुगतमेव। तस्येति। ध्वननस्य। भावादिति। न हि व्यङ्ग्ये प्रतीयमाने वाच्याद्बुद्धिर्दूरीभवति। न चोभयेति। अभिधालक्षणारूपमुभयम्। अवाचकेति। अर्थानुपयोगेऽपि कोमलादिवर्णानां रसव्यञ्जकत्वदर्शनात्। अशब्देति। अभिधाव्यापारास्पृष्ट इत्यर्थः। अवलोकनादीत्यादिशब्दात् बाष्पावेशकुचकम्पादि। तस्येति। ध्वननस्य। अनपह्नवनीय एवेति। तत्र नाभिधा सङ्केताभावात्। अन्वयप्रतीतावेव क्षीणशक्तिकत्वात् न तात्पर्यम्। अस्खलद्गतित्वान्न लक्षणा।

---

[1] तदनुगमनेन. [2] वर्णानुसारेणापि व्यङ्ग्यस्येष्टेः, * तदेव तस्मादेवेत्यर्थः.

[1]तत्र 'अत्ता एत्थ' इत्यादौ नियतसंबन्धः, 'कस्स ण होइ रोसो' इत्यादावानियतसंबन्धः,

विवरीअरए लच्छी बह्मं दट्टूण णाहिकमलट्ठम् ।
हरिणो दाहिअणअणं रसाउला झत्ति ढक्केइ ॥ १३७॥

( छाया—विपरीतरते लक्ष्मीः ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् । )
( हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥ )

इत्यादौ संबद्धसंबन्धः । अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्मकता व्यज्यते, [2]तन्निमीलनेन सूर्यास्तमयः, तेन पद्मस्य संकोचः, [3]ततो ब्रह्मणः स्थगनम्, तथा सति गोप्याङ्गस्यादर्शनेनानिर्यन्त्रणं निधुवनविलसितमिति ।

'अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ [4]एव वाच्यो वाक्यमेव च वाचकम्' इति येऽप्याहुः तैरप्यविद्यापदपतितैः पदपदार्थकल्पना

तत्रेति । *तेषु । अत्तेति । अत्रैव शेष्वेति नियतसम्बन्धः, नियतेन नियतत्वेन इयत्तया नियन्त्रितः सम्बद्धः । कस्स वेत्यादौ पुनरनियतसम्बद्धः । सम्बद्धसम्बन्ध इति । सम्बद्धस्य व्यङ्ग्यस्य सम्बन्धो व्यङ्ग्योऽर्थः । येऽपीति । भट्टाः शब्दब्रह्मवादिनः । वाक्यार्थ एवार्थ इति । न पदार्थ इत्यर्थः । वाक्यमेवेति । न पदमित्यर्थः । तैरपीति । भट्टैरपि । देशकालावच्छेदेन सर्वव्यवहर्तृनिष्ठतया कल्पितपदार्थाश्रयेण वाच्यवाचककल्पना क्रियत एवेति तन्मतेऽप्यर्थान्तरप्रतीतौ व्यञ्जकत्वं न वाचकत्वम् । एवं च पदार्थवाक्यार्थन्यायो

[1] अत्र. [2] तन्निमीलने सूर्यास्तमयः, [3] तेन ब्रह्मणः. [4] एवार्थो वाच्यो.
* नियतसंबन्धादिष्वित्यर्थः

कर्तव्यैवेति तत्पक्षेऽप्यवश्यमुक्तोदा[1]हरणादौ विध्यादिर्व्यङ्ग्य एव। ननु वाच्यादसंबद्धं तावन्न प्रतीयते, यतः कुतश्चिद्यस्य कस्यचिदर्थस्य [2]प्रतीतेः प्रसङ्गात्। एवं च संबन्धाद्व्यङ्ग्यव्यञ्जकभावोऽ[3]प्रतिबन्धेऽवश्यं न भवतीति व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत्तद्रूपः पर्यवस्यति। तथा हि—

भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ देण।
गोलाणईकच्छकुडंगवासिणा दरिअसीहेण ॥ १३८ ॥

(छाया—भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन।
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥)

न तात्पर्यशक्तिसाधक इति ज्ञापितम्। उक्तोदाहरणेति। निश्शेषच्युतेत्यादौ। वाच्यादिति। व्यञ्जकत्वं शब्दानां गमकत्वम्, तच्च लिङ्गत्वमेव। अतो व्यङ्ग्यप्रतीतिर्लिङ्गिप्रतीतिरेवेति, तथा सति लिङ्गिलिङ्गतैव व्यङ्ग्यव्यञ्जकतेत्यर्थः। सम्बन्धादिति। गम्यगमकतारूपात्। अप्रतीति। अविनाभावाभावे। एतेनान्वयव्यतिरेकात्मकसपक्षसत्त्वविपक्षासत्त्वस्वरूपा व्याप्तिर्दर्शिता। नियतधर्मीति। एतेन पक्षधर्मतोक्ता। पक्षधर्मसपक्षसत्वविपक्षव्यावृत्तयो रूपत्रयी। लिङ्गिनीति। अनुमेये। तद्रूप इति। निर्वाहेऽनुमानमेव व्यङ्ग्योऽर्थ इत्यर्थः। भमेति। अत्र सिंहस्योत्तमत्वेन श्ववधोऽनुचित इति *'दरियरिरकेण'

[1] हरणादिषु विध्यादि. [2] प्रतीतिप्रसङ्गात्. [3] प्रतिबन्धे चावश्यं.

* 'दृप्तऋक्षेण' इति च्छाया.

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरी[1]तीरे सिंहोपलब्धेरभ्रमणमनुमापयति । यद्यद्भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम्, गोदावरीतीरे च सिंहोप[2]लब्धिरिति व्यापकविरुद्धोपलब्धिः । अत्रोच्यते—भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेणान्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः । शुनो [3]बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि । गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः, अपि तु वचनात् । न च वचनस्य प्रामाण्यमस्ति, अर्थेनाप्रतिबन्धात्, इत्यसिद्धश्च । तत्क-

इत्यन्ये पठन्ति । गृह इति । यत्र सा दुश्शीलाऽस्ति, तत्र विधिर्वाच्यो निषेधस्त्वनुमेयः । कच्छकुडङ्गस्य धर्मित्वनिर्देशः । सिंहसद्भावस्य हेतुत्वम् । वासिनेति विशेषणेन धर्मिणि सिंहस्य सद्भावो दर्शितः । भीरुभ्रमणं व्याप्यम्, भयहेतुनिवृत्तिर्व्यापिका, सिंहास्तित्वं व्यापकविरुद्धोपलब्धिनामा हेतुः । अनैकान्तिक इति । व्यभिचारी । बिभ्यदिति । अधमत्वादिति हेतुः । अप्रतिबन्धादिति । अयं भावः—वचनार्थयोस्तादात्म्यतदुत्पत्तिलक्षणौ सम्बन्धौ न घटेते । तथाहि—तयोस्तादात्म्ये मोदकादिवचनोच्चारे मुखादेः पूरणादिप्रसङ्गः । तदुत्पत्तौ हि किं वचनादर्थस्योत्पत्तिः, किं वा अर्थाद्वचनस्य । उभयमपि न घटते, वचनस्य ताल्वादिकेभ्य उत्पत्तेः ।

[1] तीरे च सिंहो. [2] लब्धेरिति. [3] बिभ्यदपि धीरत्वेन.

**थमेवंविधाद्धेतोस्साध्यासिद्धिः ।**

**तथा निश्शेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि [1]कारणान्तरतोऽपि भवन्ति। अतश्चात्रैव स्नानकार्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि।**

**व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम् । नचात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम् ? एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशत इति**

---

अर्थस्य तु मृत्पिण्डादिस्वकारणात् । किञ्च—वचनादर्थोत्पत्तिस्वीकारे राज्यादि मे भूयादित्युक्तौ तत्स्यात् । अर्थाच्च वचनोत्पत्तिस्वीकारे अर्थे पृष्टे शब्दैर्भाव्यमेवेति स्यात् । **एवंविधादिति ।** अनैकान्तिकविरुद्धासिद्धरूपाद्धेतोः साध्यस्य व्यङ्ग्यस्य सिद्धिः।

**स्नानकार्येति ।** स्नानं कारणान्तरं, न परं चन्दनच्यवनादिकं संभोगाद्भवति, किन्तु स्नानरूपात्कारणान्तरादपि स्यादित्यर्थः । **अतश्चेति ।** अत एवेत्यर्थः । **अत्रैवेति ।** अत्रापीत्यर्थः ।

**व्यक्तिवादिनेति ।** ध्वनिवादिना । **एषामिति ।** चन्दनच्यवनादीनाम् । अधमपदसाहित्येनाव्यभिचारीणि चन्दनच्यवनादीनि अनुमापकानि भविष्यन्तीत्याशङ्क्याह—**न चात्रेति । एवंविधादिति ।** निश्शेषेत्यादिप्रोक्तात् । **एवंविध इति ।** उपभोगादिरूपः । **उपपत्त्यनपेक्षत्वेऽपीति ।** अनुमानादिरूपा ह्युपपत्तिः । प्रत्यक्षादिप्रमाणा-

---

[1] कारणान्तरेऽपि.

व्यक्तिवादिनः पुनस्तदद्दूषणम् ॥

इति श्री काव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसंकीर्णभेद-निर्णयो नाम पञ्चम उल्लासः.

---

न्तरप्रतीतोऽर्थोऽनुमानाङ्गं यतो धूमवत् । साहित्ये हि अर्थप्रतीतीनां लोकोत्तरचमत्काररूपप्रीतिविश्रान्तिरेव साध्या, न सत्यासत्यानिरूप-णेति तदुदपपस्यनपेक्षत्वम् । अदूषणं—न दुष्टमित्यर्थः ॥

सङ्केतगमने दत्तां मनस्सुमनसां जनः ।
ध्वनिर्यत्र गुणीभूतः श्रोत्रानन्दी निरूपितः ॥

इत्याचार्यश्रीमाणिक्यचन्द्राविरचिते काव्यप्रकाश-सङ्केते काव्यप्रकाशपञ्चमोल्लासः

# अथ षष्ठ उल्लासः,

**शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् ।**
**गुणप्राधान्यतस्तत्र [1]स्थितिश्शब्दार्थचित्रयोः ॥**

न तु शब्दचित्रेऽर्थस्याचित्रत्वम्, अर्थचित्रे वा शब्दस्य । [2]तथा चोक्तम्—

"रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताननम् ॥

## अथ षष्ठोल्लासः.

अथावरकाव्यभेदावाह—**शब्दार्थेति** । सन्निवेशविशेषेण यथाक्रमं शब्दार्थौ चित्रौ यत्र, शब्दार्थाभ्यां वा चित्रं यत्तत्तथा । **पूर्वमुदाहृतं** प्रोक्तमित्यर्थः, न तूदाहृतं दृष्टान्तीकृतमिति । **गुणेति** । गुणश्च प्रधानं चेति विग्रहे भावप्रत्ययः । क्वचिदुत्तरपदस्यापीति वृद्धिः । यद्वा गुणश्च इत्यलंततया ? गुणीकरणं च प्राधान्यं चेति । **तत्रेति** । शब्दार्थचित्रकाव्ययोः । **अयं भावः**—यत्र शब्दचित्रं प्रधानं तत्राप्यर्थचित्रं गौणमस्त्येव । एवमर्थचित्रेऽप्यूह्यम् । न पुनरेकैकचित्रं क्वापि काव्यं स्यात् ।

**तथा चोक्तमिति** । भामहेनेति शेषः । **तस्येति** । काव्यस्य । **न कान्तमपीति** । यथा सलावण्यमपि मुखं निर्भूषं सन्न भाति, तथा शब्दार्थशरीरमपि काव्यं सगुणमपि निरलङ्कारं न भातीत्यर्थः ।

अपरे तु काव्यस्वरूपासमवेतत्वेन रूपकाद्यर्थालङ्काराणां बहिरङ्गतां मन्वानाः सुप्तिङ्व्युत्पत्तेः काव्यस्वरूपसमवेतत्वेनान्तरङ्गाल-

---

[1] स्थितिश्चित्रार्थशब्दयोः.   [2] तथोक्तम्.

रूपकादिमलं[1]कारं बाह्यमाचक्षते परे।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम्॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः॥"

इति। शब्दचित्रं यथा—

प्रथमतरुणच्छायस्तावत्ततः [2]कनकप्रभः
तदनु विरहोत्ताम्यत्तन्वीकपोल[3]तलद्युतिः।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः॥१३९॥

अर्थचित्रं यथा—

---

ङ्कारतामाहुरित्याह—रूपकादिमिति। गौडमतमेतत्। तदेतदिति। सुप्तिङात्मकम्, सौशब्द्यं शब्दवैचित्र्यम्। शब्दालङ्कारसाधकमेतत्। अर्थव्युत्पत्तिरर्थवैचित्री पुनरर्थालङ्कारसाधिका। नेदृशी न सुप्तिङात्मिकेत्यर्थः। अथवा अर्थव्युत्पत्तिरर्थालङ्काररूपा रूपकाद्यलङ्कृतिरीदृशी अन्तरङ्गा न, किं तर्हि गौणीत्यपि व्याख्या। अथ च अर्थव्युत्पत्तिरपि काव्ये प्रयोज्यत्वेन मतेत्याह—द्वयं तु न इति। भामहः शब्दस्यार्थस्य चालङ्कारानिष्टवान्, परं गुणप्राधान्येन।

प्रथमेति। अत्र क्षणदामुखे प्रदोषे प्रथममरुणच्छायः सन्निन्दुरुदयति ऊर्ध्वं गच्छति, ततः कनकप्रभस्सन्नित्यादि योज्यम्। अत्र शब्दालङ्कारश्छेकानुप्रासः। अरुणादेरिव छायादिर्यस्येति वृत्त्याऽरुणच्छाय इत्यादिषु पुनरुपमाऽर्थलङ्कारः।

---

[1] कारं वाच्यमाचक्षते. [2] कनकद्युतिः. [3] तलप्रभः.

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचास्सदैव सविलासमली[1]कलग्नाः
ये कालतां [2]कुटिलतामिव न त्यजन्ति ॥१४०॥

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया [3]रसपर्यवसानं तथाऽपि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत् काव्यद्वयमुक्तम् । [4]अत्र च शब्दार्थालंकारभेदाद्बहवो भेदाः, ते चालंकारनिर्णये निर्णेष्यन्ते ॥

इति श्रीकाव्यप्रकाशे शब्दार्थचित्रनिरूपणं
नाम षष्ठ उल्लासः.

---

ते दृष्टीति । अत्रालका इव खला इत्युपमालङ्कारः शब्दश्लेषप्रतिभोत्पत्तिहेतुरिति मम्मटः । उपमाप्रतिभोत्पत्तिहेतुरर्थश्लेषः,

'स्वयं च पल्लवाताम्रभास्वत्करविराजिनी'

इतिवदिति तुङ्गटः । अत्रालीकेति परावृत्त्यसहत्वेन शब्दश्लेषसाधकम् । कुटिलतामिवेति समुच्चितोपमया व्याख्येयम् । कालतां कुटिलतां च न त्यजन्तीति भावः, ततोऽर्थसङ्गतिः । **अनुपलम्भादिति** । ईषदुपलम्भादित्यर्थः । **अत्र चेति** । शब्दार्थचित्रकाव्ययोः ।

सङ्केतरीतिरेषैव ज्ञानश्रीभुक्तयेऽद्भुता ।
वर्णनाविषयीचक्रे यत्र वाणीगतध्वनिः ॥

**इत्याचार्य श्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते**
**काव्यप्रकाशषष्ठोल्लाससङ्केतः.**

---

[1] कलग्नाः:
[2] कुटिलतां ननु संत्यजन्ति.
[3] रसः पर्यवस्यति तथाऽपि.
[4] अस्य च.

# अथ सप्तम उल्लासः

काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह—

**मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः।**
**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः॥**

हतिः अपकर्षः। 'शब्दाद्याः' इत्याद्यग्रहणाद्वर्णरचने। विशेषलक्षणमाह—

**दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम्।**
**निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम्॥ ५०॥**

---

## अथ सप्तमोल्लासः.

**मुख्यार्थेति**। एतेन रसापकर्षहेतुत्वं दोषाणां सामान्यलक्षणमुक्तम्। **तदाश्रयादिति**। तस्य रसस्याश्रयभूतत्वात् वाच्योऽप्यर्थोऽपि मुख्यः। अपिशब्दोऽत्र लुप्तो ज्ञेयः। **उभयेति**। रसवाच्यौ। **तेष्वपीति**। नकेवलं रसवाच्ययोः शब्दादिषु स दोषो वाच्यः, शब्दादीनां रसे वाच्ये चोपयोगसद्भावाद्दोषास्स्युरित्यर्थः। **विशेषेति**। दोषाणामिति शेषः। मुख्यतया रसे दोषाः, भक्त्या शब्दार्थयोः। 'मुखे शब्दमुपलभामहे' इति नयेन शब्दप्रतीतिपूर्वाः सर्वा रसार्थादिप्रतीतयः। शब्दश्च पदवाक्यरूप इत्यतः सूत्रक्रममुल्लङ्घ्य प्राक्पददोषानाह—**दुष्टमिति**।

**सन्दिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत्क्लिष्टम् ।**
**अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव॥**

श्रुतिकटु (परुषवर्णरूपं) दुष्टं यथा—

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितस्स तन्वङ्ग्या कार्तार्थ्यं लभते सदा ॥ १४२ ॥

अत्र कार्तार्थ्यमिति ।

च्युतसंस्कृति (व्याकरणलक्षणहीनं) यथा—

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत्पल्लीपतिपुत्रि ! कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥ १४३ ॥

---

अथेति । क्लिष्टाद्यास्त्रयः समासपदेष्वेव दुष्टास्स्युर्नान्य इत्यर्थः ।

अनङ्गेति । अनङ्गमङ्गलगृहस्यापाङ्गस्य भङ्ग्या विच्छित्त्या तरङ्गितैर्युक्तया । कार्तार्थ्यं कृतार्थताम् । व्याकरणेति । न च्छन्दः-प्रभृतिलक्षणहीनं, तस्य विरत्यादिरूपत्वेनापदविषयत्वात् ।

एतदिति । तिन्दुकफलं, तद्धचस्य टिम्बरूपमिति, ख्यातिः तदिव श्यामोदरमापाण्डुरप्रान्तं च । अयं भावः—यथा स्तनतटी-दर्शनात्सरागाः सन्तस्त्वां भजन्तश्शुचतवीर्यतया कुम्भिकुम्भान्न भिन्दन्ति भिल्लाः । अत्र काप्यन्यत्र च 'पदैकदेशोऽपि पदम्' इति

अत्रानुनाथत इति [1]सर्पिषो नाथत [2]इत्यादावाशिष्येव नाथते-रात्मने[3]पदं विहितं 'आशिषि नाथः' इति। अत्र तु याचन-मर्थः। तस्मात् 'अनुनाथति स्तनयुगं' इति पठनीयम्।

अप्रयुक्तं—तथाऽऽम्नातमपि कविभिर्नादृतम्, यथा—

यथाऽयं दारुणाचारः सर्वदैव विभाव्यते।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा॥ १४४॥

अत्र दैवतशब्दो 'दैवतानि पुंसि वा' [4]इति पुंस्याम्नातोऽपि न केनचित्प्रयुज्यते।

असमर्थं—[5]यत्तदर्थं पठ्यते न च तत्रास्य शक्तिः। यथा—

तीर्थान्तरेषु स्नानेन समुपार्जित[6]सत्क्रियः।
सुरस्रोतस्विनीमेष हन्ति संप्रति सादरम्॥ १४५॥

---

न्यायादनुनाथत इति पददोषत्वम्। यत्तु 'अपास्य च्युतसंस्कारमसमर्थम्' इत्यत्र च्युतसंस्कारादिवर्जनं चक्रे तद्वाक्यविषयमेव, न पदांशविषयम्। पदांशविषयता च प्रपञ्चायोक्ता, यावता तु पदविषयतयैव सिध्यति।

दैवत इति। देवताधिष्ठातेति यावत्। दैवतानीत्यत्र बहुत्वं लिङ्गानुशासने पूर्वपदसंलग्नत्वात्।

असमर्थमिति। अर्थान्तराद्व्याघाताभावेऽप्रयुक्तम्। अर्थान्तरेणेष्टार्थस्य व्याघाते स्वस्य चानुपपत्तावसमर्थम्, तथा हन्तीत्यत्र गत्यर्थं वधार्थो व्याहन्ति, स्वयं च न घटते, गङ्गाया वधानुपपत्तेः। निहतार्थे त्वर्थान्तरं घटतेऽपि, पादप्रहारे रुधिरसम्भवात्।

---

1 सर्पिषोऽनुनाथते. 2 इत्यादाविवाशिष्येव. 3 पदं नियमितं.
4 इत्याम्नातोऽपि 5 यदर्थं. 6 सत्क्रियः.

निहतार्थं—यदुभयार्थमप्रसिद्धेऽर्थे प्रयुक्तम् यथा—

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन ।
मुग्धा साध्वसतरला विलोक्य [1]परिरभ्य चुम्बिता सहसा॥

अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेन [2]उज्ज्वलीकृतत्वरूपोऽर्थो व्यवधीयते । अनुचितार्थं यथा—

तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतस्सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनः
रणाश्वमेधे पशुतामुपागताः ॥ १४७ ॥

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम् ।

[3]निरर्थकं, पादपूरणमात्रप्रयोजनं चादिपदम् । यथा—

उत्फुल्लकमलकेसरपरागगौरद्युते! मम हि गौरि! ।
अभिवाञ्छितं प्रसिध्यतु भगवति! युष्मत्प्रसादेन ॥१४८॥

अत्र हिशब्दः ।

---

शोणितेति । शोणिताः वर्णान्तरापादिताः अत एवोज्ज्वलाः कान्तिमन्तः कचा यस्य । अन्योऽप्यर्थः—प्रहाराद्यच्छोणितं तद्युक्ताः कचा यस्य । यद्वा—काश्मीरभाषयोज्ज्वलशब्दोऽरुणार्थः ।

सत्रिभिरिति । याज्ञिकैः ।

युष्मदिति । गौरीमेकत्वेनामन्त्र्य युष्मदिति बहुत्वं असत् ।

---

[1] परिचुम्बिता. [2] उज्ज्वलीकृतरूपो. [3] निरर्थकं पूरणमात्र.

अवाचकं यथा—

अवन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः।
अमर्षशून्येन जनस्य जन्तुना
न जात[1]हार्देन च विद्विषादरः॥ १४९॥

अत्र जन्तुपदमदातर्यर्थे विवक्षितं, [2]तत्र च नाभिधायकम्।
यथा वा—

हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा
[3]तद्विच्छेदरुजाऽन्धकारितमिदं दग्धं दिनं कल्पितम्।
किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत्कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना॥१५०॥

अत्र दिनमिति [4]प्रकाशमयमित्यर्थे अवाचकम्।

---

अवन्ध्येति निहन्तुरिति पदाभ्यां सामर्षोदारत्वे लभ्ये। तेन ह्यसामर्षोऽभयकारी कृपणश्च विपद्यते। एतदेव व्यतिरेकेणाह—अमर्षेति। हार्दं मैत्री।

हा धिगिति। अनेकार्थत्वात्तामसी रात्रिः तामसी तमोमयी व्यावृत्तिः, यस्यां तामस्यां निशि सेन्दुमुखी दृष्टा सा धात्रा तामसी तमोमयी चक्रे, यत्र तु दिने सा वियुक्ता तद्दिनं प्रकाशमयं चक्र इत्यहो धातुः कुशले सत्कर्तव्ये वैमुख्यमित्यर्थः। दिनशब्दस्त्वनेकार्थत्वाभावे प्रकाशमयत्वस्यावाचकः। आवृत्त्याऽत्र दिनशब्दस्यावाचकता, पूर्वत्र तु नैवम्।

---

1 हार्देन न विद्विषादरः. 2 तत्र नाभिधायकम्. 3 तद्विश्लेषरुजा.
4 प्रकाशमयमित्यत्रार्थे.

यच्चोपसर्गसंसर्गादर्थान्तर[1]गतम्। यथा—

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥

अत्र [2]दधदित्यर्थे विदधदिति।

त्रिधेति, व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात्। यथा—

साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते।
तस्य धीशालिनः कोऽन्यः सहेताराळितां भ्रुवम्॥१९२॥

लीलातामरसा[3]हतोऽन्यवनितानिश्शङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः।
मुग्धा कुड्मलिताननेन दधती वायुं स्थिता [4]तस्य सा
भ्रान्त्या धूर्ततयाऽथवा नतिमृते तेनानिशं चुम्बिता॥

---

अर्थान्तरमिति। यदप्यवाचकमित्यन्वयः।

दण्डेति। नृत्ये झगिति पादोर्ध्वकरणं दण्डपादः, दण्डरूपत्वात्। विदधदिति। विशेषेण बिभ्राणः।

अरालितामिति। कुटिलताम्।

लीलेति। अत्र अन्यवनिता सपत्नी। विनाशादिति। अभावात् अदर्शनादित्यर्थः।

---

1 गतं तदप्यवाचकम्। यथा— 2 दधादित्यत्रार्थे. 3 हतोऽन्यदयिता
4 तत्र सा.

मृदुपवनविभिन्नो मत्प्रियाया विनाशात्
घनरुचिरकलापो [1]निस्सपत्नोऽस्य जातः ।
रति[2]विगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे किं हरेदेष बर्ही ॥ १९४ ॥

एषु साधनवायुविनाशशब्दाः व्रीडादिव्यञ्जकाः ।

संदिग्धं यथा—

आलिङ्गितस्तत्रभवान् संपराये जयश्रिया ।
आशीःपरंपरां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥ १९५ ॥

अत्र वन्द्यां किं हठहृतमहिलायां, [3]किं वा नमस्यामिति सन्देहः ।

अप्रतीतं यत्केवलं शास्त्रे प्रसिद्धम् । यथा—

सम्यग्ज्ञानमहा[4]ज्योतिर्दलिताशयताजुषः ।

---

**निस्सपत्न इति** । तदभावाद्धेतोर्घनरुचिरो निस्सपत्नो जातः कलाप इत्यर्थः । **अस्येति** । बर्हिणः । अत्र श्लोके 'घनरुचिर' 'अस्य' इत्यादिस्थानेष्वन्यान्यपि दूषणान्यप्रकृतत्वादनुक्तानि, स्वयमूह्यानि । एवमग्रे पश्चादपि ज्ञेयम् ॥

**वन्द्यामिति** । द्वितीयासप्तम्यन्ततया सन्देहः ।

**अप्रतीतमिति** । अस्य योगशास्त्रादावेव प्रसिद्धिर्न लक्षणादौ । अप्रयुक्तस्य तु सर्वशास्त्रप्रसिद्धावपि कवीनामनावृत्तिः प्राणाः ।

**सम्यगिति** । ज्ञानेन दलितो विघटित आशयो वासना सुखदुःखे यस्य तस्य भावस्तत्ता । वासना हि सुखदुःखे । यद्वा दलितो विकासी आशयो यस्य विशदाशय इत्यर्थः ।

---

[1] निस्सपत्नोऽद्य जातः. [2] विलुलित. [3] किं नमस्यामिति. [4] ज्योतिर्गलिताशय.

विधीयमानमप्येतन्न भवेत्कर्म[1]बन्धकम् ॥ १६६ ॥

अत्राशयशब्दो [2]वासनापर्यायो योगशास्त्रादावेव [3]प्रसिद्धः । [4]ग्राम्यं यत्केवले लोके स्थितं, यथा—

राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥ १६७ ॥

अत्र कटिरिति ।

नेयार्थं, "निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत् ।
क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः" ॥

इति यन्निषिद्धं लाक्षणिकम् । यथा—

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते [5]मुखं तन्वि ! चपेटापातनातिथिम् ॥ १६८ ॥

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते ।

अथ समासगतमेव दुष्टमिति संबन्धः । अन्यत् केवलं समासगतं च ।

क्लिष्टं, [6]यतोऽर्थप्रतिपत्तिर्व्यवहिता । यथा—

---

**एतदिति** । प्रस्तुतं किञ्चिन्न कर्मणो बन्धकम् । यद्वा एतत् कर्म पापस्य न बन्धकमिति ।

**काश्चिदिति** । लक्षणाः लक्षणाशब्दा नैव क्रियन्ते अर्थप्रत्यायने सामर्थ्याभावादिति कुमारिलः । **निर्जितत्वमिति** । पराभवः । **अन्यदिति** । शेषदोषजातं च्युतसंस्कृत्यादि ।

---

[1] बन्धनम्. [2] वासनापरपर्यायो. [3] प्रयुक्तः [4] ग्राम्यं केवले.
[5] मुखं चण्डि चपेटा. [6] यत्रार्थ.

अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल! तव चेष्टितम् ॥ १५९ ॥

अत्रात्रिलोचनसंभूतस्य चन्द्रस्य ज्योतिरुद्गमेन भासिभिः कुमुदैरित्यर्थः ।

अविमृष्टः प्राधान्येनानिर्दिष्टो [1] विधेयांशो यत्र तत्, यथा—

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत्प्रयासः ॥

अत्र मिथ्यामहिमत्वं नानुवाद्यं, अपितु विधेयम् । यथावा—

---

अत्रीति । अत्रैकपदप्रत्याय्योऽप्यर्थः कैरवात्मा अत्रीत्यादिनानापदार्थालोचनाव्यवधानेन क्लिश्यमानो वाचकस्य क्लिष्टतावहः । प्राधान्येनेति । साध्यत्वेन । विधेयांश इति । वाक्यतात्पर्यम् ।

अत्रानुवाद्यविधेयांशावेकानेकपदगतत्वेन सर्वैस्समासैः निवेश्यावित्याह—मूर्ध्नामिति । उद्वृत्तकृत्तेभ्योऽविरलगलेभ्यो गलद्रक्तसंसक्ता निरन्तरा या धारेति योगः । प्रयास इति । पुरीत्राणासामर्थ्यम् । विधेयमिति । उपनतजगज्जयान्मिथ्यामहिमा मूर्ध्नामिति प्रकारेण । इत्थं च नोक्तं, किन्तु समासेन विशेषणतया सिद्धत्वेनोक्तम् ।

---

[1] विधेयोंऽशो

स्रस्तां [1]नितम्बादवरोपयन्ती
पुनःपुनः केसरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण
द्वितीयमौर्वीमिव कार्मुकस्य ॥ १६१ ॥

[2]अत्र द्वितीयत्वमात्रमुत्प्रेक्ष्यम् । 'मौर्वीं द्वितीयां' इति [3] युक्तः पाठः । यथा वा—

वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि ! मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ॥ १६२ ॥

अत्र 'अलक्षिता जनिः' इति वाच्यम् । यथा वा—

आनन्दसिन्धुरतिचापलशालिचित्त-

---

उत्प्रेक्ष्यमिति । मौर्वी चापस्य तावत्सिद्धैव, न तु द्वितीयात्वम् । अतो द्वितीयामिवेति पृथग्विषेणतया वक्तुं युक्तम् । एवं हि द्वितीयात्वस्य प्राधान्यं अन्यथा तु गौणता ।

अलक्षितेति । जन्मनो हि अलक्ष्यत्वं वाच्यत्वेन वक्तुमिष्टम् । समासे सत्यलक्ष्त्वं न प्रधानीस्यात् । जनिरिति । अस्मादपि 'अलक्षितं जनुः' इति पाठे सर्वेषां क्लीबत्वमिति निर्वाहाद्भग्नप्रक्रमत्वमपि त्यक्तं स्यात् ।

---

[1] नितम्बादवलम्बमाना पुनः पुनः केसरपुष्पकाञ्चीम्. [2] अत्र मौर्वीं द्वितीयामिति द्वितीयत्वमात्रमुत्प्रेक्ष्यम्. [3]युक्तम् यथा.

सन्दाननैकसदनं क्षणमप्यमुक्ता ।
या सर्वदैव भवता तदुदन्तचिन्ता
तान्तिं तनोति तव संप्रति धिग्धिगस्मान् ॥ १६३ ॥

अत्र 'न मुक्ता' इति निषेधो विधेयः, यथा—

नवजलधरस्सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न [1]तस्य शरासनम् ।

---

**सन्दाननेति** । संयमनम् । तान्तिमिति । खेदं, विरक्तत्वात् । धिग्धिगिति सखीवचः । **विधेय इति** । या प्राक् त्वया प्रियत्वेन क्षणमपि न मुक्तेति रूपेण विधेयो योऽर्थः स वृत्त्या गुणीभूतः । किञ्चामुक्तेत्यत्र प्रसज्यो नञ्, क्रियया सह सम्बन्धे सति प्रतिषेधप्राधान्यात् । अतो नञ्समासोऽपि न युक्तः । तस्य हि पर्युदास एव विषयः, तत्रैव विशेषणत्वान्नञः स्याद्यन्तेनोत्तरपदेन सम्बन्धोपपत्तेः । न च पर्युदासोऽत्र युक्तः, अर्थस्यासङ्गतेः । मुक्तत्वनिषेधो ह्यत्रेष्टो नामुक्तत्वविधिः । तस्मादस्य नञो विधेयार्थनिष्ठतया प्रधानस्य तथाऽनूद्यमानार्थपरतया तद्व्यस्तवृत्तिना मुक्तशब्देन समं वृत्तिर्नैवेष्टा, यदाह—

नञर्थस्य विधेयत्वे निषेध्यस्य विपर्यये ।
समासो नेष्यतेऽर्थस्य विपर्यासप्रसङ्गतः ।

इति । 'अमानोनाः प्रतिषेधवाचकाः' इत्युक्त्याऽत्र अकार एव नञर्थः पृथग्व्याख्येयः । ततो विधेयत्वे सत्यदुष्टत्वमित्यपि व्याख्या ।

**यथेति** । यथा नवजलेत्यत्र वृत्ते निषेधो विधेयतया

---

[1] न नाम शरासनम्.

अयमपि पटुर्धारासारो न बाणपरंपरा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥ १६४ ॥

इत्यत्र । न त्वमुक्ततानुवादेनान्यदत्र किञ्चिद्विहितम् । यथा—

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥ १६५ ॥

इत्यत्र [1] अत्रस्तत्वाद्यनुवादेनात्मनो गोपनादि ।

विरुद्धमतिकृद्यथा—

सुधाकरकराकारविशारद[2]विचेष्टितः ।
अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥ १६६ ॥

अत्र कार्यं विना मित्रमिति विवक्षितम्, [3]अकार्येषु मित्रमिति तु प्रतीतिः । यथा वा—

चिरकालपरि[4]प्राप्तलोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥ १६७ ॥

अत्र कण्ठग्रहमिति वाच्यम् । यथावा—

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मनः
तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः ।

---

मुख्य ऊचे, तथा नामुक्तेत्यत्र । गोपनादिति । विधेयमित्यर्थः ।

विरुद्धमतीति । अस्य च समासासमाहितशब्दप्रत्ययाने-कार्थशब्दादयः प्रयोजकाः ।

भवानीति । भवस्य पत्नी भवानी, तस्याः पतिरित्युक्ते हरत्यागादन्योऽपि भवेत्, तथा चैत्रपत्नीपतिरित्युक्ते उपपतिर्लभ्यते ।

---

[1] अत्रस्ततानुवादेनात्मगोपनादि. [2] विचेष्टितैः. [3] अकार्ये मित्र.
[4] प्राप्तिलो.

तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः ॥

अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति, 'इन्द्रवरुणभव' इत्यादिना पुंयोगात् ङीष्प्रत्ययेन भवस्य पत्नी भवानी । यथावा —

गोरपि यद्वाहनतां प्राप्तवतस्सोऽपि गिरिसुतासिंहः ।
सविधे निरहंकारः पायाद्वस्सोऽम्बिकारमणः ॥ १६९ ॥

अत्राम्बिकारमण इति विरुद्धां धियमुत्पादयति ।

श्रुतिकटु समासगतं यथा—

सा दूरे च [1]सुधासान्द्रतरङ्गितविलोचना ।
वह्नि[2]निर्ह्लादनार्होऽयं कालश्च समुपागतः ॥ १७० ॥

एवमन्यदपि ज्ञेयम् ।

**अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।**
**वाक्येऽपि दोषास्सन्त्येते पदस्यांशेऽपि केचन ॥**

---

विरुद्धामिति । यतोऽम्बिका माताऽपि । रमणौ प्रियरासभौ ।

वाक्येऽपीति । सविशेषणमाख्यातं वाक्यं, अथवा 'आकाङ्क्षायोग्यतासन्निधिमतां पदार्थानां अन्वये वाक्यम्' इति वाक्यलक्षणम् । तच्च च्युतसंस्कारादौ मिथोविशेष्यभावाकाङ्क्षाद्यभावान्न स्यादिति न तत्र वाक्यदोषता । पददोषता तु स्यादेव । विभक्त्यन्तं पदमिति पदलक्षणस्योपपत्तेः ।

---

[1] सुधासिन्धुस्तरङ्गित. [2] निर्ह्लादनोऽपीह कालश्च.

केचन, न पुनस्सर्वे । क्रमेणोदाहरणम्—

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट
पितॄनताप्र्सीत् सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ
समूलघातं न्यवधीदरींश्च ॥ १७१ ॥

[1]स रातु वो दुश्च्यवनो भावुकानां परंपराम् ।
अनेड[2]मूकताद्यैश्च द्यतु दोषैरसम्मतान् ॥ १७२ ॥

अत्र दुश्च्यवन इन्द्रः, अनेडमूको मूकबधिरः ।

सायकसहायबाहोर्मकरध्वजनियमितक्षमाधिपतेः ।
अब्जरुचिरभास्वरस्ते भातितरामवनिप ! श्लोकः ॥१७३॥

अत्र सायकादयश्शब्दाः खड्गाब्धिभूचन्द्रयशःपर्यायाश्शरा-द्यर्थतया प्रसिद्धाः ।

कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितः
यशो गायन्त्येते [3]दिशिदिशि वनस्थास्तव विभो ! ।
[4]जरज्जयोत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा

---

क्रमेणेति । श्रुतिकट्वादिना ।

अताप्र्सीदित्यन्तर्भूतेनर्थम् । षड्वर्गः कामक्रोधादिः ।

स रात्विति । भावुकानि मङ्गलानि । अत्राप्रयुक्तं, पूर्वत्र तु श्रुतिकटु । शरादीति । शरस्मरक्षान्तिपङ्कजार्थैः खड्गादयो निहतार्थाः ।

कुविन्द इवि । कुः पृथ्वी, तां विन्दति लभते यः स तथा । पटुं पटं वा करोति । वनस्थौ किन्नरधीवरौ । वनमम्भोऽपि ।

---

1 स पातु. 2 मूकताद्यैस्तु द्यतु. 3 दिशिदिशि च नग्नास्तव.
4 शरज्जयोत्स्नाकान्तस्फुट.

तथाऽपि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥ १७४ ॥

अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन्नुपश्लोक्यमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थः ।

प्राभ्रभ्राड्विष्णुधामाप्य विषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥ १७५ ॥

अत्र—प्राभ्रभ्राड्—विष्णुधाम—विषमाश्व—निद्रा—पर्णशब्दाः प्रकृष्टजलद—[1]गगन—सप्ताश्व—संकोच—दलानामवाचकाः ।

[2] भूपतेरुपसर्पन्ती कम्पना वामलोचना ।

---

**तथाऽपीति** । यः किल पटकृत्तत्पत्नी कथं विगताच्छादना स्यात् । कीर्तिपक्षे विगताच्छादनमस्खलितमित्यर्थः । **अर्थान्तरमिति** । कुविन्दपदात्तन्तुवायत्वं, वनस्था इति पदात्कौपीनादिदानशीलत्वं, जरज्जयोत्स्नेत्यादिपदाज्जीर्णत्वं, विगतेति पदान्नग्नत्वमित्यादि ।

**प्राभ्रेति** । * प्राभ्रं प्रकृष्टोऽब्दः तद्वत् भ्राजते यत् खं तत्तथा। प्राभ्रादीनामन्वयेनैतदर्थवाचकत्वेऽप्यवाचकता रूढ्योक्ता ।

**कम्पनेति** । कम्पना सेना, क्व द्विषो मे सन्तीत्थं वामानरीन् लोचते वीक्षते । वामं वा विरुद्धं लोचनं यस्यास्सा तथेति वाच्यम् । स्त्री तु व्यङ्ग्या । अत एव कम्पनैव वामलोचनेति न

---

[1] गगनसूर्यसंकोचपत्राणामवाचकाः. [2] नृपते.

* एतेन प्राभ्रशब्दस्यैव प्रकृष्टाब्दार्थकत्ववर्णनेन उत्तरत्र मूले 'प्राभ्रभ्राड्विष्णुधामविषमाश्वनिद्रापर्णशब्दाः' इत्यस्य स्थाने 'प्राभ्रविष्णुधामविषमाश्वनिद्रापर्णशब्दाः' इति पाठस्सूच्यते । अत एवोत्तरत्रापि 'प्राभ्रादीनामन्वयेन' इति वक्ष्यति । 'प्राभ्रभ्राड्' इति पाठे तु अभ्रे गगने भ्राजते शोभत इत्यभ्रभ्राट् जलदः, प्रकृष्टोऽभ्रभ्राट् यत्रेत्यादिरर्थो बोद्धव्यः.

[1]तत्तत्प्रहरणोत्साहवती मोहनमा[2]दधौ ॥ १७६ ॥

अत्र उपसर्पण[3]-प्रहरण-मोहनशब्दा व्रीडादायित्वादश्लीलाः।

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्तनम् ॥ १७७ ॥

अत्र वान्त–उत्सर्ग–प्रवर्तनशब्दा जुगुप्सादायिनः ।

पितृ[4]वसतिमहं व्रजामि
तां सह [5]परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये
हृदयमशेषितशोकशल्यकम् ॥ १७८ ॥

अत्र [6]पितुर्गृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम् ।

---

रूपकम् । इत्थं ह्यपरोऽर्थो वाच्यत्वान्नाश्लीलः स्यात्, व्यञ्जकत्वे ह्यश्लीलम् । एवमन्यत्राप्यूह्यम् । स्त्रीपक्षे मां कोऽपि द्रक्ष्यतीति कम्पते इति व्युत्पत्तिः । उपसर्पणं रताय गमनमपि । प्रहरणे, प्रहरणं रतगतव्यापारः । मोहने रतमूर्छे ।

**वान्तमिति** । येषामितरस्य कवेरितराणां वा तुच्छानामर्थानां ग्रहे प्रवृत्तिस्स्यात् तेऽन्यैर्वान्तं चर्वितं त्यक्तं च भुञ्जत इत्येकोऽर्थः । अन्यस्त्वश्लीलः । उत्सर्गो यूथम् । प्रवर्तनमपानवायुः ।

**पावकेति** । पावकैः पवित्रैस्सहान्वये योगे सति यत्र मे सुखं स्यात् । अन्यत्र तु पावको वह्निः ।

---

1 तत्तत्प्रहणनोत्साहवती. 2 दधे. 3 प्रहणनमोहन.
4 वसतिमहं प्रयामि. 5 परिवारगणेन. 6 पितृगृहमित्यादौ

सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥ १७९ ॥

अत्र किं [1] सुरकम्पनमार्गणभूतिशब्दाः देवसेनाशरविभूत्यर्थाः? किं मदिराद्यर्थाः? इति संदेहः ।

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।
दृढभूमिः प्रियप्राप्तौ यत्नस्सफलितस्सखे! ॥ १८० ॥

अत्राधिमात्रोपायादयश्शब्दा योग[2]शास्त्रमात्रप्रयुक्तत्वादप्रतीताः ।

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति [3] मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥ १८१ ॥

अत्र गल्लादयश्शब्दा ग्राम्याः ।

वस्त्रवैदूर्यचरणैः क्षतसत्वरजःपरा ।
निष्कम्पा रचिता [4] नेत्रयुद्धं वेदय सांप्रतम् ॥ १८२ ॥

---

सुरेति । रिपूणां रणे घाताय्राकोल्लासपरः । कम्पनं भयेऽपि । मार्गणा अर्थिनोऽपि । भूतिः भस्मापि । रणस्थभूपवर्णनेयम् ।

तस्येति । अत्र मृदुमध्याधिमात्रोपायत्वात्त्रिधा योगी । स चैकैको मृदुमध्यतीव्रसंवेगत्वात्त्रिधा । एवं नव योगिनः । तत्राधिमात्रोपायस्य तीव्रसंवेगस्यासन्ने समाधिलाभफले । सतताभ्यस्तो दृढभूमिः । प्रियं मोक्षोऽपि । चेतोवृत्तिनिरोधसाधनं यत्नः । पक्षे तस्याधिकोपायस्य दृढरागस्य प्रियं स्त्रीमयम् ।

वस्त्रेति । अम्बररत्नं रविः । सत्वरजःपरं तमः, वस्त्रमम्बरम् । वैदूर्यं रत्नं, चरणाः पादाः । युद्धं द्वन्द्वम् । बोधयेति । जागृहीत्यर्थः ।

---

[2] सुरादिशब्दाः. [2] शास्त्रप्रयुक्त. [3] मानवः. [4] नेत्रयुग्मं वेदय.

अत्राम्बररत्न[1]पादैः क्षततमा अचला भूः कृता, नेत्रद्वंद्वं बोधयेति [2] नेयार्थता ।

धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥ १८३ ॥

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति संबन्धे क्लिष्टत्वम् ।

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति [3]राक्षसकुलं जीवत्यहो रावणः ।
धिग्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥१८४॥

---

अपूर्वेति धम्मिल्लविशेषणमिदम् ।

**न्यक्कार इति** । अरय इति बहुत्वेन शत्रुशत्रुमत्ता मेऽनुचितेति सम्बन्धानौचित्यं नाम क्रोधविभावो व्यक्तः । तत्रापीति निपातसमुदायेन तापसस्याविक्रमस्य शत्रुत्वमसंभाव्यमेवेति व्यक्तम् । मत्कर्तृका यदि जीवनक्रिया तदा हननक्रिया तावदनुचिता, तस्यां च स कर्ता, सोऽपि नरकीटः । **अत्रैवेति** । यत्राहं तिष्ठामि । नितरां हन्ति, यथा रक्षःकुलनामापि नश्यति । **रावण इति** । स्वःपुरीविमर्दनादिका रीत्यर्थः । दिग्धिगिति पदात् शक्रं जितवानिति व्युत्पत्तिः वृथेति प्रतीयते । **ग्रामटिकेति** कप्रत्ययेन स्त्रीप्रत्ययवता बहुमानभावो व्यज्यते । विलुण्ठनमित्यत्र विशब्दो निर्दयत्वेन लुण्ठनमाह । वृथाशब्दः स्वविक्रमनिन्दाव्यञ्जकः । भुजैरिति बहुत्वेन तेषां भारकारित्वं व्यक्तम् ।

---

[1] पादैर्हततमा. [2] नेयार्थम्. [3] राक्षसभटान् जीवत्यहो.

अत्रायमेव न्यक्कार इति वाच्यम्, उच्छूनत्वमात्रं चानुवाद्यम् न वृथात्वविशेषितम्। [1]अत्र च शब्दरचना [2]विपरीता कृतेति वाक्यस्यैव दोषो न वाक्यार्थस्य। यथावा—

अपाङ्गसंसर्गितरङ्गितं दृशोः
भ्रुवोररालान्तविलासिवेल्ल[3]नम्।
विसारिरोमाञ्चनकञ्चुकं तनोः
तनोति योऽसौ सुभगे! तवागतः॥ १८५॥

अत्र योऽसावितिपदद्वयमनुवा[4]द्यविधेयार्थतया विवक्षितमनुवाद्यमात्रप्रतीतिकृत्। तथा हि—प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते। क्रमेणोदाहरणम्—

कातर्यं केवला नीतिः शौर्यं [5]श्वापदचेष्टितम्।
अतस्सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः॥ १८६॥

---

**वाच्यमिति**। इत्थमुक्तौ हि न्यक्कारस्य विधेयता स्यात् शब्दशक्तिस्वाभाव्यात्। **न वृथात्वेति**। वृथात्वस्येत्थं विशेषणतयोक्तौ गौणतैव न विधेयतेति भावः।

**पदद्वयमिति**। यच्छब्दोऽनुवाद्यार्थस्यादश्शब्दो विधेयार्थस्य विषयः। **मात्रेति**। मात्रशब्दोऽवधारणे। यथेदं सिध्यति तथा यत्तच्छब्दविचारेण तथाहीत्याद्येवं समासान्तरेष्वप्यन्तग्रन्थपूर्वकेण निर्णयति—तथाहीति।

**सिद्धिमिति**। हेमभूसुहृद्गताम्। **स इति**। पूर्वोक्तो नृपः।

---

1 त्र, श. 2 विपरीतैव. 4 वेल्लितम्. 4 द्यमात्र. 5 चापल.

द्वयं गतं संप्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतः
त्वमस्य लोकस्य च नेत्रकौमुदी ॥ १८७ ॥

उत्कम्पिनी भयपरिस्खलितांशु[1]कान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
[2]धूमान्धितेन दहनेन न वीक्षिताऽसि ॥ १८८ ॥

यच्छब्दस्तूत्तरवाक्यानु[3]गतत्वेनोपात्तः, सामर्थ्यात्पूर्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते । यथा—

साधु चन्द्रमसि पुष्करैः कृतं
मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे
तेन साहसमनुष्ठितं पुनः ॥ १८९ ॥

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना [4]साकाङ्क्षः।

---

सेति प्रसिद्धा ।

ते इति । उद्दीपने दह्यमानप्रियावस्थां ध्यायन् विलपति कोऽपि। ते यथाऽनुभूते । यच्छब्दं विचारयति—यच्छब्दस्त्विति ।

पुष्करैरिति । पद्मैरिन्दूदये साधु कृतं यन्मीलितमिति तदो नापेक्षा । उद्यता उद्गच्छता । तेन इन्दुना । प्रसिद्धमिति । यथा

---

[1] ताम्रलान्ता [2] धूमाञ्चितेन. [3] वाक्यार्थगत. [4] साक्षेपः.

यथा अत्रैव श्लोके आद्यपादयोर्व्यत्यासे । द्वयोरुपादाने [1] तु निराकाङ्क्षत्वं प्रसिद्धम्

अनुपादाने [2] ऽपिसामर्थ्या [3] त्क्वचिद्द्वयमपि गम्यते । यथा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ १९० ॥

अत्र य उत्पस्यते तं प्रतीति । एवंच—तच्छब्दानुपादानेऽत्र साकाङ्क्षत्वम्, न च असाविति तच्छब्दार्थमाह ।

असौ मरुच्चुम्बितचारुकेसरः

---

यः करोति स कर्तव्येत्यत्र ।

ये नामेति । नामेत्यसूयायाम् । इहेति । प्रबन्धे देशे काले वा । किमपि स्वल्पं, उपहासे तु लोकोत्तरम् । एष शास्त्रनिर्माणविषयो यत्नः, कान् प्रति हीत्याह—उत्पत्स्यते त्विति । सदसद्व्यक्तिज्ञो भावी कश्चिदिति सम्भाव्यते ।

इत्थं यत्तदौ विचार्य योऽसाविति प्रस्तुते निर्वाहयति—एवं चेति ।

अत्रेति । योऽसावित्यत्र श्लोके यच्छब्दानन्तरं तच्छब्दो नोक्तः, किन्त्वदश्शब्दः । न चादश्शब्द एव तच्छब्दार्थवाचीत्याह—न चेति ।

---

[1] ने बि. [2] नेपिद्वयमपि क्वचित्सामर्थ्याद्गम्यते. [3] त्कुत्रचित्.

प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितः
वसन्तकालो हनुमानिवागतः ॥ १९१ ॥

अत्र हि न तच्छब्दार्थप्रतीतिः । प्रतीतौ वा,

करवालकरालदोस्सहायः
युधि योऽसौ विजया[1]र्जुनैकमल्लः ।
यदि भूपतिना स तत्र कार्ये
विनियुज्येत ततः कृतं कृतं स्यात् ॥ १९२ ॥

अत्र स इत्यस्यानर्थक्यं [2]स्यात् । [3]अथ,

योऽविकल्पमिदमर्थमण्डलं
पश्यतीश! निखिलं भवद्वपुः ।
[4]आत्मपक्षपरिपूरिते जग—
त्यस्य नित्यसुखिनः कुतोभयम् ॥ १९३ ॥

इतीदंशब्दवत् अदश्शब्दस्तच्छब्दार्थमभिधत्त इति ।

---

असाविति । मरुद्वायुर्मारुतिपिता च, केसरशब्दो वकुलसटार्थः । ताराधिपौ सुग्रीवेन्दू । मण्डले बिम्बराष्ट्रे । रामा नार्यो, रामो भरताग्रजः । आनर्थक्यमिति । पुनरुक्तत्वात् ।

योऽविकल्पमिति । वस्तुजातं निश्शङ्कं त्वदङ्गात्मतया यः पश्यति विचारयतीत्यर्थः । स्वात्मपक्षेति । सुष्ठु आत्मपक्षेण । यदि वा स्वेन आत्मपक्षेणेति च । अस्येति । तस्येत्यर्थः ।

---

1 र्जुनैक. 2 भवेत्. 3 ननु. 4 स्वात्म.

उच्यते—तर्ह्यत्रैव वाक्यान्तरे उपादानमर्हति [1] न तत्रैव । यच्छ-ब्दस्य [2] हि निकटे स्थितस्तच्छब्दः प्रसिद्धिं परामृशति । यथा—

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताऽक्षैस्तदाऽनेन नूनं तदपि हारितम् ॥ १९४ ॥

इत्यत्र तच्छब्दः । ननु कथं,

कल्याणानां त्वमसि[3] महसां भाजनं विश्वमूर्ते !
धुर्यां लक्ष्मीमथ मयि भृशं धे[4]हि देव ! प्रसीद ।
यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय ॥ १९५ ॥

अत्र यद्यदुक्त्या तन्म इत्युक्तम् । उच्यते—यद्यदिति येन

---

तर्हीति । यथाऽत्र वृत्ते वाक्यान्तरे प्रयुक्तः तथाऽन्यत्रापि प्रयोक्तव्यः, न तु यत्रयत्रयच्छब्दस्तत्रैव । नचेति । चः पुनरर्थे ।

यत्तदिति । इत्थं यत्त*द्यत्वमेव न विधेयत्वं । क्वचित्तु वाक्या-न्तरगतत्वेन यच्छब्दनिकटेऽप्युच्यमानोऽदश्शब्दो भिन्नविभक्तितया तच्छब्दार्थप्रतीतिकृत् । यथा —

लीलया जगती जिग्ये येनासौ जयतु स्मरः ।

कल्याणेति । अत्र पूर्वार्धे यत्तदोर्गम्यमानता । तथाहि—यतस्त्वं कल्याणानां पुण्यश्रीणां च विधानेन प्रभुः अतो त्वद्दानरूपं प्रसादं कुरु । उत्तरार्धे तु प्रसादप्रकारोक्तिः । भद्रमिति । पुण्या-नुबन्धकं पुण्यं देहीत्यर्थः । तन्म इति । अत्र द्वितीयस्तच्छब्दो

---

[1] नचत. [2] स्यनि. [3] त्वमिहमहसामीशिषेत्वं विधत्से, पुण्याम् . [4] देहि.

* द्व्यामनुवाद्यत्वम् इति पाठे सम्यक् स्यादिति भाति

केनचिद्रूपेण स्थितं सर्वात्मकं वस्त्वाक्षिप्तं, तथाभूतमेव तच्छब्देन परामृश्यते । [1]यथावा—

किं लोभेन विलङ्घितस्स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथवा मातैव मे[2] मध्यमा ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरुः
माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥१९६॥

---

नोक्त इति भावः । सूर्यस्तुतिरेषा, अतः क्रूरग्रहदृष्टिर्न मङ्गळायेति विरुद्धमतिकृ ूषणं न, भक्तिप्रस्तावात् ।

यत्तच्छब्दौ विचार्याविमृष्टविधेयांशे पुनरुदाहरति—**किं लोभेति** । मध्यमा माता कैकेयीत्यर्थः । **समास इति** । भिन्नविभक्तिनिर्देशे हि तातार्थयोर्विधेयत्वे विवक्षितस्य प्रकर्षः प्रतीयेत । नन्वसमासेऽपि कृते गौणत्वमेव, यतो गौणात् षष्ठी स्यादिति स्थितिः? सत्यं, लक्षणभाषयेदं गौणत्वम् । साहित्यभाषया त्वसमासे विधेयत्वमेव । **अयं भावः**—समासानां विशेषणविशेष्योभयांशसंस्पर्शित्वेऽपि यदा विशेषणांशः स्वाश्रयोत्कर्षाधानमुखेन वाक्यार्थचमत्कारहेतुतया प्राधान्येन विवक्षितो विधेयस्स्यात् अन्यस्त्वनूद्यकल्पतया गौण इव, तदाऽसौ न वृत्तोर्विषयः स्यात् । तस्यां हि स प्रधानेतरभावः तयोर्विनश्येत् । विशेषणमवच्छेदकत्वाद्गौणं, विधेयं च विवक्षितत्वात् प्रधानं, तदेतयोर्मिथोविरोधे एकत्र योगासम्भवात् समास एव न घटत इति न वाच्यम् । विरोधस्योभयवस्तुनिष्ठ-

---

[1] तथा— किलो. [2] बा.

अत्र 'आर्यस्य' इति 'तातस्य' इति[1] च वाच्यम्, नत्व-नयोस्समासे गुणीभावः कार्यः। एवं समासान्तरेष्वप्युदाहार्यम् ॥ विरुद्धमतिकृद्यथा—

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्तयः।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ॥ १९७ ॥

अत्र क्षमादिगुणयुक्ताः सुखमासत इति विवक्षिते हता इति विरुद्धार्थप्र[2]तीतिः ॥ पदैकदेशे यथासंभवं क्रमेणोदारणणानि—

अलमतिचपलत्वात्स्वप्नमायोपमत्वात्
परिणतिविरसत्वात्संगमेनाङ्गनायाः।
इति यदि शतकृत्वस्तत्त्वमालोचयामः
तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥ १९८ ॥

---

त्वाच्छीतोष्णादिवत्। न च वस्तुता द्वयोस्स्यात्। एकस्यैव वास्तवत्वादन्यस्य वैवक्षिकत्वेन व्यत्ययात, सत्येभकल्पनासिंहयोरिव, न च-वस्तुनोर्विरोधः। फलभेदस्तु स्यादेव, तथाहि—एकस्य सर्वगम्यं शाब्दि कैकविषयः पदार्थसम्बन्धमात्रं, अन्यस्य तु सहृदयवेद्यः कवीनामेव-गोचरो वाक्यार्थचमत्कारातिशयः। **एवमिति**। समासान्तरोदाहरणानि विस्तरभयान्नोक्तानि।

**श्रितेति**। सोपशमाः क्षमापतिताश्च। रक्ता भूर्येषां, रक्तस्य वा भुवः स्थानम्। शिवं श्रेयः। शिवा सृगाली। विग्रहौ रणदेहौ। असुखं दुःखं, असवश्च खानि च।

---

[1] इति, वाच्यम्.     [2] विरुद्धार्थम्.

अत्र त्वादिति । यथावा—

तद्गच्छ सिद्ध्यै कुरु देवकार्य
अर्थोऽयमर्था[1]न्तरलभ्य एव ।
अपेक्षते प्रत्ययम[2]ङ्गलब्ध्यै
बीजाङ्कुरः प्रागुदयादिवाम्भः ॥ १९९ ॥

अत्र 'द्ध्यै'[3] 'ब्ध्यै' इति कटु ।

यश्चाप्सरोविभ्रममण्डनानां
संपादयित्रीं शिखरैर्बिभर्ति ।
वलाहकच्छेदविभक्तरागा-
मकालसन्ध्यामिव धातुमत्ताम् ॥ २०० ॥

अत्र मत्ताशब्दः क्षीबार्थे निहतार्थः ।

---

अर्थोत्तर इति । धर्मार्थेति पाठापेक्षयाऽर्थोत्तरः कामः । कष्टमिति । ननु प्रकृतिप्रत्ययसम्बन्धवचनपुरुषव्यत्ययपूर्वनिपाततद्धितविभक्तिविशेषोपसर्गनिपातनामसमासादिरूपपदांशः स्यादिति द्ध्यै ब्ध्यै-इति प्रकृत्येकदेशरूपत्वान्न पदांशः? सत्यं, परमूहकानामेवात्राधिकार इति ज्ञापनार्थमेवमुक्तम् । अत एव ।

'भेदाविमौ च सादृश्यात्सम्बन्धान्तरतस्तथा'

इत्यत्र प्रस्तावे आचार्यमतद्वयं न निषिद्धम् । तन्निषेधः क्रमेण यथा गोशब्दप्रवृत्त्या तत्सहचरितानां गुणानां लक्ष्यमाणत्वं लक्ष्यमाणानां च गोशब्दप्रवृत्तिहेतुत्वमित्यन्योन्याश्रयत्वम् । तस्मात्स्वार्थसहचारिगुणाभेदेनेति गौणलक्षणायाम् । गुणानां निमित्तत्वमेव न पुनर्लक्ष्यत्वं ततः साधारणगुणेति ।

---

[1] अर्थोत्तरलभ्य इति पठं सङ्केतकृन्मनुते. [2] य मुत्तमं त्वाम्.
[3] अत्र सिद्ध्यै लब्धै इति कष्टम्.

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित
प्रोत्सर्पद्विरहानलेन च ततस्सन्तापितानां दृशाम् ।
संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवः
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥ २०१ ॥

अत्र दृशामिति बहुवचनं निरर्थकम्, कुरङ्गेक्षणाया एकस्या एवोपादानात् । नच—

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूत वमाद्भरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाऽद्य विलोक्यते ॥२०२॥

---

आदाविति । दृशां स्मरभल्लीनामिति रूपके सति

एकत्रोत्प्रेक्षितत्वेन यत्रार्था बहवो मताः ।
तत्रेवादिः प्रयोक्तव्यः प्रधानादेव नान्यथा ॥

इति न्यायाद्युक्ता, पानकर्मण उत्प्रेक्षा । अन्यथा तु व्याख्यायां भल्लीपानकर्मविषयमुत्प्रेक्षाद्वयमापद्यते । तत इवशब्दद्वयं प्रसज्यते, अत्र त्वेक एवेवशब्दः । किञ्च भल्ल्युत्प्रेक्षायां तासामसत्यत्वेन पानकर्मक्रियाऽप्यसंगता । अन्यच्च दृशः कामस्य भल्य इवेति न, किन्तु भल्य एवेति रूपकव्याख्या श्रेष्ठा ।

**अलसेति।** अत्र वृत्ते ईक्षणैरिति पदमस्ति, तस्य च व्यापारभे-

इत्यादिवद्व्यापारभेदाद्बहुत्वम् । व्यापाराणामनुपात्तत्वात् । न च व्यापारेऽत्र हृक्शब्दो वर्तते । अत्रैव 'कुरुते' इत्यात्मनेपदमप्यनर्थकम् । प्रधानक्रियाफलस्य कर्त्रसंबन्धे कर्त्रभिप्रायक्रियाफलाभावात् ।

चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रव्यस्तस्सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥२०३॥

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः ।

अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शब्दम् ।
परमार्थतस्सहृदयं वदति पुनः कालकूटघटितमिव ॥२०४

अत्र पेलवशब्दः ।

यः पूयते सुरसरिन्मुखतीर्थसार्थ
स्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥ २०५ ॥

---

दाद्बहुत्वं युज्यते । प्रधानेति । कामिनी हि दृशां निषेकफलं न लभते, विरहावस्थायास्तथैवाद्यापि सद्भावात् । [1]षण्ड इति । क्लीब इत्यर्थः ।

य इति । मुखेति प्रभृत्यर्थम् । कीलनं सम्बन्धः । सौजन्येन मान्या जानिर्जन्म यस्य स तथा ।

---

[1] षण्ड इति शब्दोनास्ति प्रकृते काव्यप्रकाशे, अलसवलितैरिति पद्ये तुरीयपादे कोयं मुग्धे इत्यत्र क्वोयं षण्ढः इति पाठं मन्यत इति भाति—

अत्र पूयशब्दः ।

विनयप्रणयैककेतनं
संततं योऽभवदङ्ग! तादृशः ।
कथमद्य[1] स तद्वदीक्ष्यतां
तदभिप्रेतपदं समागतः ॥२०६॥

अत्र प्रेत[2]शब्दः ।

कस्मिन् कर्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥ २०७ ॥

अत्र किं 'पूर्वं साधुः' उत 'साधुषु चरति' इति संदेहः ।

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥ २०८ ॥

अत्र वचश्शब्देन गीश्शब्दो लक्ष्यते । अत्र न केवलं पूर्वपदं

---

**विनयेति** । अत्र **प्रेतपदमिति** । पदांशः श्मशानार्थः । **उत्तपत इति** । समुल्लसति ।

**साधुष्विति** । अयं प्रकृतोर्थः । **उत्तरपदमिति** । बाणस्थानेऽन्यः कोऽपि शरादिशब्दो न निवेश्य इत्यर्थः । **जलेति** । परिवर्तनं न क्षमत इति योगः । जलभृदित्युक्ते हि मेघस्य प्रतीतिर्नाब्धेः । **यद्यपीति** । अनादृतत्वात्, निहतार्थत्वात्, अवाचकत्वात् सन्दिग्धत्वात्, केवलशास्त्रप्रयुक्तत्वात्, कल्पितार्थत्वाच्च विवक्षितमर्थं वक्तुमशक्तं यत्तदसमर्थमिति । ततोऽप्रयुक्तादयो दोषा अत्रान्तर्भवन्ति । एवमन्येऽपि यथासम्भवमन्तर्भाव्याः ।

---

[1] मेष. [2] शब्दोऽमङ्गिलम्.

यावदुत्तरपदमपि पर्यायपरिवर्तनं न क्षमते। जलध्यादावुत्तरपदमेव, बडवानलादौ [1]पूर्वपदमेव।

यद्यप्यसमर्थस्यैवाप्रयुक्तादयः केचन भेदाः, तथाऽप्यन्यैरलंकार[2]कारैर्विभागेन प्रदर्शिता इति भेदप्रदर्शनेनोदाहर्तव्या इति च विभज्योक्ताः॥

**प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धि हतवृत्तम्। न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम्॥ ५३॥**

**अर्थान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम्। अपदस्थपदसमासं संकीर्णं गर्भितं प्रसिद्धिहतम्॥ ५४॥**

**भग्नप्रक्रममक्रमममतपरार्थं च वाक्यमेव तथा।**

रसानुगुणत्वं वर्णानां वक्ष्यते, तद्विपरीतं[3] प्रतिकूलवर्णम्। यथा-श्रृङ्गारे—

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि! माम्।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर॥ २०९॥

रौद्रे यथा—

देशस्सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः

---

प्रतिकूलेति। वर्णग्रहणस्योपलक्षणत्वात्समासरचने अपि ग्राह्ये। देश इति। यत्र देशे जमदग्निः केशेषु गृहीतः तत्रेत्यर्थः।

---

1 दौ, चोत्तर. 2 रालंकारिकैः. 3 रीतत्वं प्रातिकूल्यं.

क्षत्त्रादेव तथाविधः परिभवस्तातस्य केशग्रहः[1] ।
तान्येवाहितश[2]स्त्रघस्मरगुरूण्यस्त्राणि भास्वन्तिमे
यद्रामेण कृतं तदे[3]व कुरुते द्रोणात्मजः क्रोध[4]नः ॥२१०॥

अत्र हि विकटवर्णत्वं दीर्घसमासत्वं चोचितम् । यथा—

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाविर्भव
त्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात् ।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथिः
येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥२११॥

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः । उपह[5]त उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत् । यथा—

धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्र[6]भाविताः ॥२१२॥

क्षत्रं प्रस्तावात्सहस्रार्जुनः । रामः परशुरामः । पाण्डवैः केशाकृष्टे द्रोणे अश्वत्थाम्नोक्तिरियम् । आहितानां शस्त्राणां घस्मराणि च तानि गुरूणि च तानि तथा । सामान्यमायुधं शस्त्रम् । मन्त्राधिष्ठितमस्त्रम् ।

**प्रागिति** । निशुम्भो भङ्गः । अपविद्धः उच्छालितः । **तथैवेति** । येनाऽनेनेत्यादितया क्रोधाभावोचितमृदुवर्णन्यासदीर्घसमासवर्जनाभ्याम् । प्रतिकूलं वर्णादिन्यासो गुणव्यत्यास एवेत्यन्ये ।

**वीर इति** । एवं हि सन्दर्भसौष्ठवं न स्यात् । विसर्गस्योत्वप्राप्तिलुप्तिभणनात् । पररूपकल्यादि[7]नोपहतत्वे सति बन्धसौष्ठवभा-

1 प्रहात्. 2 हेति. 3 तदद्य 4 कोपनः, (कोधितः) 5 हत ओत्वं.
6 प्रभाविताः. 7 ✕ क ✕ पादिना इति स्यात्.

विसन्धि सन्धेर्वैरूप्यं, विश्लेषः अश्लीलत्वं कष्टत्वं च । तत्रा[1]द्यं यथा—

राजन्! विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः ।
धीदोर्बले अतितते उचिता[2]नुवृत्ती
आतन्वती विजयसंपदमेत्य भातः ॥ २१३ ॥

यथा वा—

तत उदित उदारहारहारि
द्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश उदात्तका[4]न्तकान्तिः
बत मुक्तामणिवच्चकास्त्यनर्घः ॥ २१४ ॥

संहितां न करोमीति स्वेच्छया सकृदपि दोषः । प्रगृह्यादि हेतुकत्वेत्व[5]सकृत् ।

---

वान्नदुष्टत्वम् । सन्धेरिति । संधिः स्वरयोस्समवायः । संहिता कार्येण क्षीरनीरयोरिवैकीभावः । कपाटवत्तयोर्व्यञ्जनानां च नैकट्यमात्ररूपो वा ।

**राजन्निति** । तत इति स्थानद्वयेऽप्यत्र स्वरयोर्नैकट्यमात्ररूपस्सन्धिः । **स्वेच्छेति** । "विवक्षितश्च सन्धिर्भवती" त्युक्त्याश्रयेण 'तानि इन्दोः' इत्यत्र सन्ध्यभावो दुष्ट एव । **प्रगृह्येति** । 'अयादीनां यवलोप 'इति' द्विवचनमनावित्यादिसूत्रैर्यत्र प्रकृतिस्स्यात्तत्प्रगृह्यं पदम् । आदिशब्दाद्विसर्गलोपे यत्र न सन्धिस्तदपि गृह्यते । **असकृदिति** । प्रकृतिस्स्व यवधानम् । 'धीदोर्बले' इत्यादाविव, यदा

---

[1] आद्य. [2] उचितार्थ. [3] संपदमेषु. [4] उदारकान्त. [5] स्वेनत्व.

वेगादुड्डीय गगने चलण्डामरचेष्टितः ।
अयमुत्तपते पत्री ततोऽत्रैव रुचिंकुरु ॥ २१५ ॥

अत्र सन्धावश्लीलता ।

उर्व्यसावत्र तर्वाली मर्वन्ते चार्व्यत्र[1] स्थितिः ।
नात्र[2] र्ज्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥ २१६ ॥

हतं लक्षणानुसरणेऽप्यश्रव्यं, अप्राप्तगुरुभावान्तलघु, रसाननुगुणं च वृत्तं यत्र तद्धतवृत्तम् । क्रमेणादाहरणानि—

अमृतममृतं कस्संदेहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थस्सन् रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥ २१७ ॥

अत्र 'यदिहान्यत्स्वादु स्यात्' इत्यश्रव्यम् । यथा वा—

---

पुनः पुनः क्रियते तदा दोषः, सकृत्तु न दोषः ।

वेगादिति । अत्र चलन्नित्यत्र नस्य डढणेति सूत्रेण णत्वे 'लण्डेति,' रुचिं कुर्वित्यत्र चिंकुरिति । अत्र व्यञ्जनैकरूप्यमात्ररूपस्सन्धिः । उत्तपते । भाति ।

स्वरयोरेकीभावे सन्धिर्यथा—उर्वीति । अत्र मरोरन्ते तरूणामुर्वी रम्यावस्थितिश्च पङ्क्तिरस्ति । ततः ऋजु प्राञ्जलमागच्छेत्यर्थः । हतमिति । हतं वृत्तं यत्रेति योगः । लक्षणं छन्दसामत्रेष्टम् ।

यदिहेति । हरिणीछन्दसि 'वदतु यदिहा' इत्यत्र षष्ठा-

---

[1] चार्यत्र. [2] नात्रर्जुः क्षमते.

जं परिहरिउं तीरइ मणअं पि ण सुन्दरत्तणगुणेण ।
अह णवर जस्स दोसो पडिवक्खेहिं पि पडिवण्णो ॥२१८

{ छाया— यत्परिहर्तुं तीर्यते न मनागपि सुन्दरत्वगुणेन ।
अथ केवलंस्य यस्य दोषः प्रतिपक्षैरपि प्रतिपन्नः ॥ }

अत्र द्वितीयतृतीयगणौ सकारभकारौ ।

विकसितसहकारतारहारि
परिमलगुञ्जितगुञ्जितद्विरेफः ।
नवकिसलयचारुचामरश्रीः
हरति मुनेरपि मानसं वसन्तः ॥ २१९ ॥

अत्र हारिशब्दः । 'हारिप्रमुदितसौरभ' इति पाठो युक्तः ।

---

क्षरविरतौ लक्षणानुसरणेऽप्यश्रव्यत्वं, 'न्यत्स्वादु' इत्यत्र तु दूषणा न्तरामिति भावः ।

जम्परीति । एवं नाम सुन्दरस्स्मरः, यत् क्षणमपि त्यक्तुं न शक्यते इतीदृग्दोषो यस्य विपक्षैरपि मुनिभिरपि प्रतिपन्नो-गुण एवेत्यर्थः । आनन्दवर्धनीयपञ्चबाणलीलाकथागाथेयम् । सकारेति । पथ्यार्यायां सभौ निरन्तरौ न कार्यावित्येके । एतेन छन्दोलक्षणच्युतात्माऽपि दोषो हतवृत्तेऽन्तर्भूतः । अत एव यथावेति, प्रकारान्तरोक्तिः । यतिभ्रष्टमप्यत्रैवान्तर्भाव्यम्, वृत्तस्य यत्यात्मकत्वात् । अन्ये तु सकारभकारौ न क्वापि च्छन्दसि निषिद्धौ, किन्त्वस्मिन्ननिश्रिते छन्दसि अश्रव्यावित्याहुः ।

यथावा—

अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
संभाराः [1]खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥२२०॥

अत्र वस्त्राण्यपीति पाठे लघुरपि गु[2]रुतां भजते ।

हा नृप हा बुध हा कविबन्धो
विप्रसहस्रसमाश्रय देव ! ।
मुग्धविदग्धसभान्तररत्न
क्वासि गतः क्व वयं च तवैते ॥ २२१ ॥

हास्यव्यञ्जकमेतद्वृत्तम् । न्यूनपदं यथा--

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां

---

* कन्येति । कुमारिकामृत् यया यादृश्या वा, अन्यः कोपि पूर्वं न सृष्ट इति यावत् । सम्भाराः करणानि मृदन्तःऽप्याणि । सृष्टौ हि भूमृत्सम्भारा हेतवः स्युः । लघुरपीति । ण्यकारस्य महाप्राणस्य सन्निधौ लघुरपि पाश्चात्यो यथा गुरुः स्यात्तथा महाप्राणस्य सन्निधावग्रिमोऽपि क्वचिल्लघुर्गुरुतां यातीत्यप्याम्नायः ।

सभान्तरेति । मुग्धविदग्धानां मुग्धविधग्धं वा सभान्तरं सभाविशेषो न तु सभामध्यं, अचमत्कारित्वात् । हास्येति । दोधकादिकं छन्दो हास्यरसव्यञ्जकत्वात् करुणादौ नोचितमिति भावः ।

---

[1] किल. [2] रुत्वं. * कन्याम्‌रिति पाठः काव्यानुशासने, तदनुसारेण यमपि.

वने व्याधैस्सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥ २२२ ॥

अत्र अस्माभिरिति, खिन्ने इत्यस्मात्पूर्वं इत्थमिति, च ।

अधिकं यथा—

स्फटिकाकृतिनिर्मलः प्रकामं
प्रतिसंक्रान्तनिशातशास्त्रतत्वः ।
अविरुद्धसमन्वितोक्तियुक्तः[1]
प्रतिमल्लास्तमयोदयस्स कोऽपि ॥ २२३ ॥

अत्राकृतिशब्दः । यथावा—

इदमनुचितमक्रमश्च पुंसां
यदिह जरास्वपि मा[2]न्मथा विकाराः ।

---

अस्माभिरिति । अस्माभिरित्थमिति च कृते न न्यूनत्वम् । अत्र न्यूनैः पदैर्विना काव्यार्थ एव न घटते । अनभिहितवाच्ये तु विरुद्धार्थस्येष्टार्थसङ्गतिविघातस्य वा प्रतीतिरित्यनयोर्भेदः ।

अधिकमिति ।

दळत्कन्दळभाग्भूमिः सनवाम्बुदमम्बरम् ।
वाप्यः फुल्लाम्बुजयुजो याता दृष्टिविषं मम ॥

अत्र भाजिस्सहशब्दो युजिश्चाधिकः ।

बहुव्रीहिणैवार्थावगतिसिद्धौ मत्वर्थीयाधिक्यं यथा—

---

[1] युक्तिः [2] मान्मथो विकारः.

यदपि च न कृतं नितम्बिनीनां
स्तनपतनावधि जीवितं रतं वा ॥ २२४ ॥

अत्र 'कृतं' इति । कृतं प्रत्युत [1]प्रक्रमभङ्गमावहति । तथा च 'यदपि च न कुरङ्गलोचनानां' इति पाठे निराकाङ्क्षैव प्रतीतिः। कथितपदं यथा—

अधिकरतलतल्पं कल्पितस्वापलीला–
परिमिलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥ २२५ ॥

अत्र [2]लीलेति ।

---

'कोकप्रीतिचकोरपारणपटुज्योतिष्मती'

इत्यादि । तथा–

" सौवर्णपट्टरुचिरास्तदीयकरिणः शिताः ।
तटित्वतीमनु? चक्रुः प्रावृषेण्यघनावलीम् "

इत्यत्र तद्धिताधिक्यं, षष्ठीसमासेनैव तदर्थावगतेरित्यादि स्वयमूह्यम् ।

**यदपीति** । योषितां कुचपातेऽपि यन्न मृत्युरताभावौ तदप्यनुचितमक्रमश्चेत्येतावतैव स्वार्थे, सिद्धे किं कृतग्रहणेनेति भावः । प्रत्युतेति । पूर्वार्धे कृतपदाभावात् प्रक्रमभङ्ग इत्यर्थः ।

**कथितमिति** । एकस्यैव पदस्य द्विःप्रयोगः कथितत्वम् ।

---

[1] त, क्र. [2] लीलालीलेति.

पतत्प्रकर्षं यथा—

कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकरः
कः [1]कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥ २२६ ॥

समाप्तपुनरात्तं यथा—

ॐकारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवः
झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः ।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कंकण-
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥ २२७

द्वितीयार्धगतैकवाचकशेष[2] प्रथमार्धं यथा—

मसृणचरणपातं गम्यतां भूस्सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः ।

---

कः क इति । अत्र क्रमात् क्रमादनुप्रासो घनयितव्यः, सपत्निबद्धः । घुरि भाण्डवाद्यविशेषः । घुर्घुरायिता चासौ सा च, तद्वद्घोरः ।

तनोत्विति । अत्र समाप्ते वाक्ये नववय इत्यादि पुच्छप्रायं पुनरुपात्तम् । पूर्वोत्तरार्धयोर्व्यत्यासे तु न दोषः ।

मसृणेति । यद्भूः सदर्भा तन्मसृणचरणपातं गम्यतां, यच्च घर्मः कठोरः तन्मूर्ध्नि वस्त्रान्तं कुरु, इति शिक्षिता, अश्रुपूर्णैः नेत्रैर्वीक्षिता चेत्यन्वयः । अत्र पूर्वार्धसक्तं तच्छब्दरूपं शब्दशेषमुत्तरार्धे न्यस्तम् । व्यत्ययोऽपि दृश्यते, यथा—

---

[1] कं कं कः.     [2] शेषं प्र.

तदिति जनकपुत्री लोचनै[1]रश्रुपूर्णैः
पथि पथिकवधूभिर्वीक्षिता[2] शिक्षिता च ॥२२८॥

अभवन् मतः इष्टः योगो यत्र[3] तत् । यथा—

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभिः
लीलापानभुवश्च नन्दन[4]तरुच्छायासु यैः कल्पिताः ।
येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किं तैस्त्वत्परितोषकारि विहितं किञ्चित्प्रवादोचितम् ॥

अत्र 'गुणानां च परार्थत्वादसबन्धस्समत्वात्स्यात्' इत्युक्त नयेन यच्छब्दनिर्देश्यानामर्थानां परस्परमसमन्वयेन[5] यैरित्यत्र विशेष्यस्याप्रतीतिरिति । 'क्षपाचारिभिः' इति पाठे युज्यते समन्वयः । यथावा—

---

किं करोमि क्व गच्छामि कस्य वाऽऽख्यामि नेत्रयोः ।
अनयोर्वल्लभा लोके निवृत्ता न यदीश्वरः ॥

**गुणानामिति** । विशेषणानां यदर्थानां विशेष्यानुयायित्वेन समत्वे सत्यन्योन्यं न सम्बन्ध इति बहुभिर्यद्‌र्थैर्नैक एवार्थो निर्दिश्यत इति यैरित्यत्र विशेष्यस्याप्रतीतिः । क्षपाचारिणामिति च पदं येषामित्यस्य विशेष्यत्वेनोक्तमिति कथं तत्र विशेष्यत्वेन स्यात् । क्षपाचारिभिरिति तु पाठे त्रयोऽपि यच्छब्दार्थाः समशीर्षिकया धावित्वा तैः क्षपाचारिभिरिति विशेष्येण प्रतिस्वमाञ्जस्येनैव योगं यान्तीत्यर्थः । अङ्गाङ्गिनोरेव यत्तदर्थयोः सम्बन्धो न त्वङ्गानां यदर्थानामन्योन्यं इति भावः ।

---

[1] रश्रुपू. [2] शिक्षिता वीक्षिता. [3] यत्र । यथा. [4] वन (चंदनवन) [5] ये, यैः.

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजतः ।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वां
अतश्शेषं यत्स्याज्जितमिह तदानीं गुणितया ॥ २३० ॥

अत्र यदित्यत्र तदिति, तदानीमित्यत्र 'यदेति' वचनं नास्ति 'चेत्स्यात्' इति युक्तः पाठः' यथावा—

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येनयेन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराश्शरैरिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥ २३१

अत्राकर्णनक्रियाकर्मत्वे कोदण्डं शरानित्यादि, वाक्यार्थस्य कर्मत्वे कोदण्डश्शरा इति प्राप्तम् । न च यच्छब्दार्थस्तद्विशेषणं

---

यत् स्यादिति । अतः शेषं यत्तद्यदा स्यात् जितमिह तदानीमिति कृते कविमतोऽन्वयः स्यात् । योगमात्रं त्वग्रेऽप्यस्ति । यदा यच्छब्दो यदार्थो व्याख्यायते, परं नैष मतो योगः । अत एव न न्यूनपददोषः । तत्र हि पदाभावे योगमात्रमपि न स्यात् । तथाहि—वल्कलधरैरिति विशेषणं विशेष्यं विना कथं स्यादित्यादिस्वयमूह्यम् । अथ व्याधैरित्यस्य विशेषणमिदं तर्हि नितरामनुपपत्तिः । अन्ये तु न्यूनपदमिदमाहुः यतः काव्यान्तः पदेषु सत्स्वेवाभवन्मतयोगत्वमिष्टम् । वाक्यार्थेति । यथा स्वर्गे देवाः सन्ति,

वा कोदण्डादि । न च केन केनेत्यादि प्रश्नः । यथावा—

चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रव्यस्तस्सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥ २३२ ॥

इत्यादौ भार्गवस्य निन्दायां तात्पर्यम् । कृतवतेति सा परशौ प्रतीयते । 'कृतवतः' इति, तु, पाठे मतयोगो भवति । यथावा—

चत्वारो वयमृत्विजस्स भगवान् कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं हतो दुन्दुभिः ॥२३३

अत्राध्वरशब्दस्समासे गुणीभूत इति न तदर्थस्सर्वैस्संयुज्यते।

---

सर्वोऽपि जानाति । नचेति । येन येनेति यच्छब्दौ न कोदण्डाद्यर्थौ येनैतद्द्वारेण कोदण्डपदादेतद्विभक्तिः स्यात् । तदर्थत्वे वा शरैरिति बहुत्वं कथं स्यात् । नापि येनयेनेत्यादेः विशेषणं कोदण्डादि । प्रश्न इति । येन कोदण्डेनेत्यादौ तृतीयस्यात् ।

चत्वार इति । नरपतिः युधिष्ठिरः । अत्राध्वरशब्दात्साक्षात्सप्तमी धर्तुं युक्ता, येनाध्वरशब्दार्थः सर्वैः ऋत्विगादिभिः सम्बध्यते ।

यथावा—

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥

अत्र दण्डपादगता निजतनुः प्रतीयते । भवान्यास्संबन्धिनी तु विवक्षिता ।

अवश्यवक्तव्यमनुक्तं यत्र । यथा —

अप्राकृतस्य चरितातिशयैश्च दृष्टैः
अत्यद्भुतैरपहृतस्य तथाऽपि नास्था ।
कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
माहात्म्यसारसमुदायमयः पदार्थः ॥ २३८ ॥

अत्र ' अपहृतोऽस्मि ' इत्यपहृतत्वस्य विधिर्वाच्यः, तथाऽपीत्यस्य द्वितीयवाक्यगतत्वेनैवोपपत्तेः ।

यथावा—

एषोऽहमद्रितनयामुखपद्मजन्मा
प्राप्तस्सुरासुरमनोरथदूरवर्ती ।

---

अवश्येति । अनुक्तमनभिहितमवश्यवक्तव्यं यत्रेति भावः ।

अप्राकृतेति । रामदर्शने जामदग्न्योक्तिरियम् । अत्रापहृतोऽस्मीत्युक्ते, तथाऽपि नास्थेति, द्वितीयवाक्यत्वेनार्थोपपत्तिः । अन्यथा त्वन्यार्थता तथाऽपि हृतस्य मम चरितैर्नास्थेतिरूपा स्यात् ।

एष इति । हरगौर्योरुषाख्या सुता केनापि वृत्तान्तेन

स्वप्नेऽनिरुद्धघटनाधिगता[1]भिरूप-
लक्ष्मीफलामसुरराजसुतां विधाय ॥ २३६ ॥

अत्र मनोरथानामपि दूरवर्तीत्यप्यर्थो वाच्यः ।

यथावा—

[2]त्वयि निबद्धरतेः प्रियवादिनः
प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि
त्यजसि मानिनि! दासजनं यतः ॥ २३७ ॥

अत्र अपराधस्य लवमपीति वाच्यम् ॥

अस्थानस्थपदं यथा—

प्रियेण संग्रथ्य विपक्षसंनिधौ
[3]उपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न [4]वस्तुषु ॥ २३८ ॥

अत्र काचिन्न विजहाविति वाच्यम् । यथावा—

बाणासुरपुत्रीति ख्याता । तां च स्मरसुतेन अनिरुद्धाख्येन स्वप्ने परिणाय्य [5]कोऽपि स्वं प्रशंसन्निदमाह—घटनेति । घटनयाऽधिगतमभिरूपलक्ष्म्याः फलं ययेति वृत्तिः । अप्यर्थ इति । अपि शब्दभावाभावयोरुत्कर्षापकर्षाभ्यां दूरवर्तित्वं स्यादित्यर्थः ।

अपराधस्येति । अप्यभावे राशिमिति प्रतीयते ।

न काचिदिति । किन्तु सर्वाऽपीत्यर्थः । न विजहावित्युक्ते त्वेकैव काचित्प्रतीयते ।

[1] गतानिरूप. [2] प्रथमाद्वतीयपादयोः वैपरीत्येन पाठः क्वचित्. [3] निवेशितां.
[4] वस्तुनि. [5] चित्रलेखाप्रति अनिरुद्धस्योक्तिरिति सुधासागरे, कंदर्पस्योक्तिरित्युद्द्योते.

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कशितिकन्धरेन्दुशकलेनान्तः कपोलस्थलम् ।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मित[1]ह्रीतया
प्रोन्मृष्टः करप[2]ल्लवेन कुटिलाताम्रच्छविः पातु वः ॥२३९॥

अत्र नखलक्ष्मेत्यतः पूर्वं कुटिलाताम्रेति वाच्यम् ।

अस्थानस्थसमासं यथा—

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोशनिस्सरदलिश्रेणीकृपाणं शशी ॥२४०॥

अत्र क्रुद्धस्योक्तौ समासो न कृतः, कवेरुक्तौ तु कृतः । संकीर्णं, यत्र वाक्यान्तर[3]स्य पदानि वाक्यान्तरमनुप्रविशन्ति । यथा—

---

लग्न इति । जटालम्बेनेति शशिशकलविशेषणम् । पूर्वमिति । कुटिलाताम्रत्वे हि प्रागुक्ते नखलक्ष्मशङ्का स्यात् । कौटिल्यादिधर्मो यतस्तस्या हेतुः । अस्थानस्थपददोषे काव्यमध्ये पदेषु सत्स्वेवास्थानस्थायित्वेन विरुद्धार्थस्येष्टार्थसंगतिविघातस्य वा प्रतीतिः प्राणः । तेनार्धान्तरैकवाचकादिदोषाणां केषाञ्चिद्विवेकः स्यात् ।

अद्यापीति । अत्र पूर्वार्धे क्रुद्धस्योक्तिरग्रे तु कवेः । प्रतिकूलवर्णदोषः पूर्वार्धे । अग्रे तु न दोषः नापि गुण इत्येके ।

---

[1] तव्रीडया. [2] पङ्कजेन. [3] रपदानि वाक्या.

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम् ।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥ २४१ ॥

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि, इमं कण्ठे गृहाण, मनसस्तमोरूपं कोपं मुञ्चेति । एकवाक्यता[1]यां तु क्लिष्टमिति भेदः ।

गर्भितं यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति । यथा—

परापकारनिरतैर्दुर्जनैस्सह संगतिः ।
वदामि भवतस्तत्वं न विधेया कदाचन ॥ २४२ ॥

अत्र तृतीयपादो वाक्यान्तरमध्ये प्रविष्टः । यथावा—

लग्नं रागावृताङ्ग्या [2]सुदृढमिह ययैवासियष्ट्याऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यश्श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः॥

अत्र विदितं तेऽस्त्वित्येतत् । कृतं प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्धमतिकृत् ।

---

क्लिष्टमिदमित्याशङ्क्याह—एकेति ।

वाक्यान्तरामिति । पूर्वत्र दोषे वाक्ये वाक्यान्तरपदप्रवेशोऽत्र तु वाक्यान्तरप्रवेशः ।

परेति । अत्रार्धयोर्व्यत्यासे न दोषः ।

विरुद्धेति । हे जनक अब्धे! तवैतत् ज्ञातमास्तामित्युक्ते ततोऽन्यत्र साऽप्यपसरतीति लभ्यते ।

---

[1] तयातु. [2] सुचिरमिह.

'मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति ।
स्तनितमणितादि सुरते मेघादिषु च गर्जितप्रमुखम्' ॥

इति प्रसिद्धिमतिक्रान्तम्—यथा—

महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रति[1]रुतानुकारी मुहुः ।
रवश्श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥ २४४ ॥

अत्र रवो मण्डूकादिषु प्रसिद्धो न तूक्त[2]विशेषे सिंहनादे । भग्नः प्रक्रमः प्रस्तावो यत्र, यथा—

नाथे निशाया नियतेर्नियोगात्
अस्तं गते हन्त निशाऽपि याता ।
कुलाङ्गनानां हि दशानुरूपं
नातः परं भद्रतरं [3]समस्ति ॥ २४५ ॥

अत्र 'गता' इति प्रक्रान्ते 'याता' इति प्रकृतेः । 'गता निशाऽपि' इति तु युक्तम् । ननु 'नैकं पदं द्विः

---

भग्न इति । एष हि यथाप्रक्रममेकरसप्रसृताया बोद्धृप्रतीतेः रोधेनैव स्खलनखेददायी रसभङ्गाय जायते ।

प्रकृतिप्रत्ययादेर्भागं क्रमेणाह—**नाथ इत्यादि । गता निशाऽपीति** । एवं विधस्य प्रक्रमाभेदाख्यस्य शब्दौचित्यस्य विध्यनुवादभावप्रकारत्वोपगमात्, यथा—"ताला जाअन्ति" इति ।

---

[1] प्रतिरवानुकारी. [2] विशेषणे:. [3] चकास्ति.

प्रयोज्यं प्रायेण' इत्यन्यत्र, 'कथितपदं दुष्टम्' इति चेहैवोक्त[1]म्, तत्कथमेकस्य द्विःप्रयोगः? । उच्यते—उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो विषय एकपदद्विःप्रयोगनिषेधस्य; तद्वति[2] विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः । तथाहि—

उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥ २४६ ॥

अत्र रक्त एवास्तमेतीति यदि क्रियेत तदा[3] पदान्तरप्रतिपादितस्स एवार्थोऽर्थान्तरतये[4]व प्रतिभासमानः प्रतीतिं स्थगयति । (*अत्र तादृगेवेति पाठे[5] वा न दोषः) । सर्वनाम्नःप्रयोगात् ।

यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति [6]सिद्धिः ॥ २४७ ॥

अत्र प्रत्ययस्य । 'सुखमीहितुं वा' इति [7]युक्तः पाठः ।

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ २४८ ॥

अत्र सर्वनाम्नः । 'अनेन विसृष्टाः' इति तु वाच्यम् ।

---

अन्यत्रेति । वामनादौ । तद्वतीति । उद्देश्यप्रतिनिर्देश्यवति । अयथोद्देशं प्रतिनिर्देशस्तु दोषस्यास्य विषयः ।

ताम्र एवेति । अत्र तादृगेवेति पाठे वा न दोषः । प्रत्ययस्येति । भग्नप्रक्रमत्वमिति सर्वत्र योज्यम् । युक्तइति । एवं चातुल्यकक्षतया विकल्पार्थवृत्तेः वाशब्दस्य न विषयोऽयमित्यपि परिहृतम् ।

---

[1] क्तेः. [2] तुविषये, [3] तत्पदा, [4] यैव, [5] ठेन, [6] लक्ष्मीः, [7] इति तु युक्तम्.
* अयंग्रन्थः प्रायोधिकः, टीकायामपि दर्शनात्.

महीभृतः पुत्रवतोऽपि दृष्टिः
तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते
द्विरेफमाला सविशेषसङ्गा ॥ २४९ ॥

अत्र पर्यायस्य । 'महीभृतोऽपत्यवतोऽपि' इति युक्तम् ।

अत्र सत्यपि पुत्रे कन्यारूपेऽ[1]प्यपत्ये सस्नेहोऽभूदिति केचित्समर्थयन्ते ।

विपदोऽभिभवन्त्यविक्रमं
रहयत्यापदुपेतमायतिः ।
[2]नियता लघुता निरायतेः
अगरीयान्न पदं नृपश्रियः ॥ २५० ॥

अत्रोपसर्गस्य पर्यायस्य च । *'तदभिभवः कुरुते निरायतिम् । लघुतां भजते निरायतिर्लघुतावान्न पदं नृपश्रियः' इति युक्तम् ।

काचित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मीः
अश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्वाः ।

---

महीति । अत्रादौ पुत्रवतोऽपीत्युक्तौ अपत्य इत्ययुक्तम् । चूत इति । चूतपुष्पे ।

उपसर्गस्येति । आदौ पदैः विरुपसर्गः पश्चादाङिति प्रक्रमभङ्गः । पर्यायस्येति । आदौ लघुतेत्युक्तं पश्चादगरीयानिति, अतः पर्यायभङ्गः ।

---

[1] पत्ये स्ने, [2] लघुता नियता निरा,

* अत्र समानार्थकनिर्दोषवाक्यप्रदर्शने तात्पर्यं नतु तादूप्येण तद्वृत्तघटकत्वे. नातश्छंदोभंगदोषः.

भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्यश्शशंसुः ॥२५१

अत्र वचनस्य । 'काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्द-वक्त्रेन्दुशोभा निश्श्रीकाः' इति, कम्पमाना इत्यत्र 'कम्पमापुः' इति च पठनीयम् ।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥२५२

अत्र कारकस्य । 'विश्रब्धा रचयन्तु सूकरवरा मुस्ताक्ष-तिम्' इत्यदुष्टम् ।

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधौ
अवितथमदाध्माते रोषान्मुनावभिधावति ।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च ॥ २५३ ॥

अत्र क्रमस्य । पादोपसंग्रहणायेति हि पूर्वं वाच्यम् ।

---

मृगकुलमिति । मृगाणां कुटुम्बं, न तु समूहः, कदम्बकेत्यत्रा-र्थासङ्गतेः ।

पूर्वमिति । अकलितेत्यादेः, पूर्वोक्तत्वानुसारेण । कर्तृव्यत्यासो नाम गुण एव, प्रक्रमभङ्गदोषभ्रमस्तु? * भ्रम एव । तत्र "यदि परं देवो न जानाति तम्' इत्यत्र देवशब्दस्त्वमित्यर्थस्य व्यत्यासेनोक्तः । तथाच 'चापाचार्यः' इत्यत्र हि कृतमातृकण्ठच्छेदेन त्वया बद्ध-

* दोष इतितु, इति युज्यते इति भाति.

एवमन्यदप्यनुसर्तव्यम् ।

अविद्यमानः क्रमो यत्र । यथा—

द्वयं गतं संप्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतः
त्वमस्य लोकस्य च नेत्रकौमुदी ॥ २९४ ॥

अत्र त्वंशब्दानन्तरं चकारो युक्तः । यथावा —

---

स्पर्धोऽहं लज्ज इति वाच्ये चारुत्वाय युष्मदस्मदर्थयोः कर्तृत्वं परश्वथखड्गविषयत्वेनोक्तम् । एवमन्यदप्यूह्यम् ।

त्वंशब्दादिति। समुच्चयद्योती हि चकारः समुच्चीयमानार्थादनन्तरमेव वाच्य इति क्रमः । एवं पुनश्शब्दोऽपि व्यतिरिच्यमानार्थानन्तर्येणैव प्रयोज्योऽन्यथा त्वक्रमत्वं वाच्यम् । यथा "तेन साहसमनुष्ठितं पुनः" अत्र पुनःशब्दस्तेनेत्यनन्तरं वक्तुं योग्यः । 'द्वयं गतम्' इत्यत्र श्लोके केचिन्न्यूनपददूषणमाहुः । तथाहि—यदि कपालिपदं विशेष्यं, तदा गर्हितत्वप्रतीतयेऽपरं कपालिपदं वाच्यम् । विशेषणं चेत्तदा तदाश्रयप्रातिपत्त्ये तेनैव तत्पर्यायेण सर्वनाम्ना वा विशेष्यं वाच्यम् । येन तस्येष्टार्थस्य सिद्धावार्थो हेतुभावः स्यात् । तत्र तेनैवोपादाने यथा—कपालीति, न वोढुमुचितः । पर्यायेण यथा—'शक्रस्य वज्रपाणेः कः प्रतिमल्लः' अत्र शक्रस्येति पर्यायशब्दार्थस्य वज्रपाणित्वं प्रतिमल्लत्वाभावे आर्थो हेतुः । अन्यथा शक्रेति वृथा

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ! दोषाकरश्रीः

स्यात् । सर्वनाम्ना यथा—'द्दशा दग्धं मनसिजम्' इत्यादि । अत्रापि 'ता' इति सर्वनामोपात्तस्यार्थस्य वामलोचनात्वं कामदाह जीवनयोर्मिथोविरुद्धयोरप्यभिन्नहेतुकत्वोपपत्तावार्थो हेतुः । अन्यथा वामलोचनात्वस्य पुनरुपादानप्रसङ्गः । न चाहेतुरावृत्तिः कपालिपदस्य परार्थप्रतिपत्तये कल्पयितुं शक्यत इति न्यूनपदत्वम् । न, यदि हि शब्दस्याभिधैव वृत्तिः स्यात्तदैवमपि स्यात्, किन्तु व्यञ्जनावृत्तिरप्यस्ति । ततोऽपदार्थोऽपि घटते । अत एव शम्भुवाचकसहस्रसम्भवेऽपि कपालीति तद्वाचकतयोक्तम् । इत्थं च जुगुप्सनीयत्वं लभ्यते । 'सम्प्रति' द्वयं चेत्यतीव चारु, यत्किल प्रागेका सैवास्थानपातेन शोच्याऽभूत्, इदानीं तु त्वया तस्यास्तथाविधदुरध्यवसायसाहाय्यमिवारब्धम्, इत्युपहस्यते । काकतालीयन्यायेन कपाल्यपि यदि स्यादस्तु न पुनः केनापि प्रकर्षेणार्थ्येत इति प्रार्थनाऽप्ययुक्ता । कपाल्यर्थे तपस्यादिव्याजेनाचेम *(?) नादिकमपि मण्डितमित्यर्थः । 'सा च त्वं' चेति द्वयोरपि लावण्यादिसाम्यप्रतीतये प्रयुक्तम् । 'कलावतः कान्तिमती' ति च मतुः प्रशंसाप्रतीतिकृत् । स्वं यथावा—

हित्वा श्रीः पुण्डरीकाक्षं यदेनं सुभगं श्रिता ।
इतीवार्यं विरूपाक्षो गौरीं वपुषि बद्धवान् ॥

**शक्तिरिति** । निस्त्रिंशो खड्गनिर्दयौ । दोषाकरश्चन्द्रो

*अचेतनादिकमपि इति वा स्यात्.

वक्त्रे पार्श्वे [1]तथैषा प्रतिवसति महाकु[2]ट्टनी खड्गयष्टिः ।
आज्ञेयं सर्वगाते [3]विलसति च [4]पुनः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपा[5]च्छशिकरसितया यस्य कीर्त्या प्रयातम्॥

अत्र 'इत्थं प्रोच्येव' इति न्याय्यम् । तथा 'लग्नं रागावृताङ्ग्या' इत्यादौ 'इति श्रीनियोगात्' इति वाच्यम् ।

अमतः प्रकृतविरुद्धः परार्थो यत्र । यथा—

---

दोषाणामाकरश्च । कुट्टिनी महावेश्या महाकुट्टाकी च । सर्वगाति । किमपि गम्यागम्यं न विचारयतीत्यर्थः । वृद्धयेति । एतेन निर्दोषतोक्ता । श्रीनियोगादितीति । तदुक्तम्—

* "उक्तिस्वरूपावच्छेदफलो यत्रेतिरिष्यते ।
न तत्र तस्मात्प्राक्किञ्चिदुक्तेरन्यत्पदं वदेत् ॥ १ ॥
उपाधिभावात्स्वां शक्तिं स पूर्वत्रादधाति हि ।
न च स्वरूपावच्छेदः पदस्यान्यस्य सम्मतः ॥ २ ॥
इतिनैवेतरेषामप्यव्ययानां गतिस्समा ।
ज्ञेयेत्थमेवमादीनां तज्जातीयार्थयोगिनाम् ॥ ३ ॥
यतस्ते चादय इव श्रूयन्ते यदनन्तरम् ।
तदर्थमेवावच्छिन्द्युरासमञ्जस्यमन्यथा" ॥ ४ ॥ इति ।

केचित्त्वक्रममर्थान्तरैकवाचकं च दोषमस्थानस्थपदेऽन्तर्भावयन्ति, अनभिहितवाच्यं तु न्यूनपदे ।

---

[1] तवैषा, [2] कुट्टिनी, [3] प्रसरतिपुरतः, [4] पुरः, [5] पात्सितकर.

* इत्थं, इति, एवं, इत्यादीनां अव्ययानां स्वाव्यवहितपूर्वोपस्थितानुपूर्वी तदर्थान्यतर परत्वात् तयोरव्यवधानेन निर्देशोन्याय्यः अन्यथा तु असामंजस्यम् इति ५द्यचतुष्टयाशयः.

रामम‌न्मथशरेण ताडिता
दुस्सहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता
जीवितेशवसतिं जगाम सा ॥ २५६ ॥

अत्र प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः ।

अर्थदो[1]षानाह—

**अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥ संदिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च । अनवीकृतः सनियमानियमविशेषाविशेषपरि[2]वृत्ताः॥५६ साकाङ्क्षोऽपद[3]युक्तः सहचरभिन्नः प्रकाशितविरुद्धः । विध्यनुवादायुक्तस्त्यक्तपुनस्स्वीकृतोऽश्लीलः ॥ ५७ ॥**

दुष्ट इति संबध्यते । क्रमेणोदाहरणानि—

---

रामेति । निशाचरी असत्यपि । गन्धेति (?) निन्दास्तुत्योर्थे रुधिरचन्दनं कुङ्कमेऽपि । जीवितेशौ मृत्युप्रियौ । अत्र प्रकृतः करुणः।

अर्थ इति । प्रसिद्धिविद्याभ्यां विरुद्धः स तथा । सनियमानियमयोर्विशेषाविशेषयोः परिवृत्तेन वर्तन्ते ते तथा । विध्यनुवादाभ्यां अयुक्तोऽनुपपन्नः ।

दुष्ट इतीति । दुष्टं पदमित्यतः पूर्वस्माल्लिङ्गव्यत्ययेन सम्बध्यते ।

---

[1] दोषमाह. [2] वृत्तः. [3] मुक्तः.

अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमला[1]करहासकृद्रविर्जयति ॥ २९७॥

अत्रातिविततत्वादयोऽनुपादानेऽपिप्रतिपाद्यमानमर्थं न बाधन्त इत्यपुष्टाः, न त्वसंगताः पुनरुक्ता वा ।

सदा मध्ये यासामियममृतनि[2]स्स्यन्दसु[3]रसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरि[4]चिताः केन महतां
महाकाव्यव्योम्नि स्फुरित[5]मधुरा यान्तु रुचयः ॥ २९८॥

---

अतीति । अत्र गगनप्रसरणमुक्तविश्रमः कमलाकरहासकृदित्येतावताऽपि स्वार्थसिद्धिः । शेषं त्वचमत्कार्येव नाधिकं अधिकपददोषे हि प्रकृतापेक्षया सार्थकत्वे सत्यधिकानां पदानामर्थस्तात्पर्यतया स्वान्तर्भूतः पाश्चात्यैः पदैः प्रतिपाद्यते, अत्र तु नैवमिति भावः । यदा विशेषेण ततमिति तदा अतिशब्दो निरर्थकः पुनरुक्तार्थो वा ज्ञेयः । नत्विति । पराशयेनेदमुक्तम् । रुद्रटो हीदमेव काव्यमसङ्गताख्यदोषमूचे । तं प्रत्युच्यते, किमत्रासङ्गतम् ? अर्थस्य विशेष्यविशेषणरूपस्यात्र सम्भवान्नासङ्गतिः कापि । पुनरुक्ता वा इति तु स्वेष्टदोषाशयेनोक्तं, न ह्यत्र किमपि पुनरुक्तमिति ।

सदेति । विस्पन्दो निस्स्यन्दः । सरस्वती गङ्गा । अत्र महाकाव्यव्योम्नीत्युक्ते । परिमलौ गन्धचमत्कारौ । रुचयः प्रतिभाः कान्तयश्च । इतरेति । अभिनेयकाव्यवत् । अत्रोपमानोपमेयभावे

---

[1] लावलिहास. निष्यन्द. [3] सरसा. (सरसंसरस्व) [4] चयाः. रुचिरा.

अत्र यासां कविरुचीनां मध्ये [a]सुकुमारविचित्रमध्यमात्मकात्रिमार्गा भारती चमत्कारं वहति ताः गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत्प्रसन्ना भवन्तु, यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति, ताः [1]मेघपरिचिताः कथं प्रसन्ना [2]भवन्तीति संक्षे[3]पार्थे इति कष्टम् ।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुरास्सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकस्स एव महोत्सवः ॥ २५९ ॥

अत्रेन्दुकलादयो यं प्रति पस्पशप्रायाः स एव चन्द्रकलात्वमुत्कर्षार्थमारोपयतीति व्याहतत्वम् ।

[4]कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकम्
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिनां
अयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ २६० ॥

[5]अत्रार्जुनार्जुनेति भवद्भिरिति चोक्ते सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः । यथावा—

---

कष्टत्वमर्थस्येत्यर्थः ।

स एवेति । य एव योषितामनुरक्तः सन् ज्योत्स्नादेः पस्पशतां असारतामूचे स एव चन्द्रिकेति रूपकेण तस्या एवोत्कर्षं भावितवान् । यथावा—'कदर्य ! देहि दानं, ' निश्शत्रो ! जहि शत्रून्, इत्यादि । उक्त इति । वेणीसंहारे अश्वत्थाम्नेति शेषः ।

---

[1] घन. [2] भवन्त्विति. [3] संक्षेपार्थः । जगति. [4] कृतमनुमतमित्यादि–अत्रार्जु. अर्जु.

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम्।
कर्णालं संभ्रमेण व्रज कृप! समरं मुञ्च हार्दिक्य! शङ्कां
ताते चापद्वितीये वहति रणधुरां को भयस्यावकाशः ॥

अत्र चतुर्थ[1]पादवाक्यार्थः पुनरुक्तः ।

भूपालरत्न! निर्दैन्यप्रदानप्रथितोत्सव ।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥ २६२ ॥

अत्र मातङ्गस्य प्राङ्निर्देशो [2]युक्तः ।

---

अस्त्रेति । अस्त्राण्येव ज्वालाः तद्युक्तो यः प्रतिसैन्याब्धिस्तस्यान्तः । ममेति अश्वत्थामोक्तिः । कृपहार्दिक्यौ भूपौ । समरं सदनं वा । पूर्वत्र भिन्नवाक्यत्वमत्र त्वेकवाक्यत्वमिति, यथा चेत्युक्तम् । यथावा 'अश्वीयपङ्क्तयः' 'जनतास्समीयुः' स्थानद्वयेऽप्यत्र क्रमेणाश्वीयेति समूहार्थायाः प्रकृतेः पङ्क्तेश्च, जनता इत्यत्र ताद्धितार्थस्य बहुत्वस्यार्थस्य च पौनरुक्त्यं ।

विशेषणाद्विशेषानवगतौ विशेष्योक्तिः पुनरुक्ता

यथा—इन्दुमौळिश्शिवो जीयादित्यत्र शिवोक्तिः । विशेषावगतौ तु न पौनरुक्त्यं,

यथा—'शक्रस्य वज्रपाणेः पुमानपि हरामि श्रियम्' इत्यत्र शक्रशब्दस्य ।

अथ यथाऽत्र पुमानपीत्यस्माद्विशेष्यं विनाऽप्यर्थद्वयप्रतीतिस्तथाऽत्राप्यस्तु । न । हरामीति निर्देशेनास्मदर्थरूपं विशेष्यमत्रास्त्येव ।

प्रधानस्यार्थस्य पूर्वं निर्देशः क्रमः, तस्य दुष्टत्वे दुष्क्रमत्वं-यथा—भूपालेति । न्याय्य इति । यदा

---

[1] चतुर्थे पादेवा. [2] न्याय्यः.

स्वपिति यावदयं निकटे जनः
स्वपिमि तावदहं किमपैति ते ।
[1]तदयि! सांप्रतमाहर कूर्परं
त्वरितमूरुमुदञ्चय कुञ्चितम् ॥ २६३ ॥

एषोऽविदग्धः ।

[2]मात्सर्यमुत्सार्य विचार्य कार्यं
आर्याःसमर्यादमुदाहरन्तु ।
सेव्या नितम्बाः [3]किमु भूधराणां
[4]उतस्मरस्मेरविलासिनीनाम् ॥ २६४ ॥

अत्र प्रकरणाद्यभावे संदेहः, शान्तशृङ्गार्यन्यतराभिधाने तु निश्चयः ।

गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं येन त्वमसि सुतशोकान्न तु भयात्

---

तूदारसत्वो गुर्वादिः बलाद्ग्राह्यमाणः क्रमं दोषयति—तदा न दोषः । क्रमानुष्ठानाभावो वा दुष्क्रमत्वं, यथा—

क्षौरं विधाप्य स्नानादि भोजनादि विधायच ॥
कश्चिच्चचाल दैवज्ञं *प्रष्टुं तिथिवारकान् ।

आतिशयोक्तौ कार्यकारणयोः दुष्क्रमत्वेऽपि न दोषः । 'श्वेतश्यामद्युतीयातां कृष्णरुद्रौ ' इत्यादिषु तु यथासंख्यं पदरचनावैपरीत्यात् प्रक्रमभङ्गः ।

स्वपितीति । निद्राति । स्वपिमीति । कामाय । आहर—गृहाण ।

---

[1] तदयि संहर कूर्परमायतम्, [2] मात्सर्यमुत्सार्येत्यादि, अत्र, [3] खलु,
[4] किमुस्मर, * संप्रष्टुमितिस्यात्.

विमोक्ष्ये शस्त्र ! त्वामहमपि [1]यतः स्वस्ति भवते ॥२६५॥

[2]अत्र द्वितीयशस्त्रमोचने हेतुर्नोपात्तः ।

इदं ते केनोक्तं कथय कमलातङ्कवदने !
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद्दुस्साधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥ २६६ ॥

अत्र कामस्य चक्रं लोकेऽ[3]प्रसिद्धम् । यथावा—

उपपरिसरं गोदावर्याः परित्यजताध्वगाः !
सरणिमपरो मार्गस्तावद्भवद्भि[4]रिहेक्ष्यताम् ।
इह हि विहितो रक्ताशोकः कयाऽपि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥ २६७ ॥

अत्र पादघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धो न पुनरङ्कुरोद्गमः ।

---

नोचितमपीति । ब्राह्मणत्वात् । सुतेति । अवधेऽपि 'हतोऽश्वत्थामा कुञ्जर' इति युधिष्ठिरोक्तं श्रुत्वा द्रोणाचार्यस्य शोकोऽभूत् । मुक्ते च शस्त्रे हतः । तत्सुत इदमाह । 'यत' इति तत इत्यत्रार्थे । हेतुरिति । पितुः शस्त्रमोक्षे सुतशोको हेतुः सुतस्य तु न कोपीत्यर्थः । हेतुतया परस्याकाङ्क्षायां निर्हेतुत्वं, अहेतुतया तु सकाङ्क्षत्वमिति ।

इदमिति । कमलस्यातङ्कमि (?) नन्तत्वेनातङ्ककारि वदनं यस्यास्सा तथा । एतस्मिन्निति । स्वर्णवलयात्मनि पदार्थे ।

उपेति । अत्र परित्यजतेत्यत्र त्यजन्त्वधुनाऽध्वगाः इति [2]पाठे भवद्भिरित्यत्र प्रक्रमभङ्गो न स्यात् । प्रसिद्ध इति । नैवाङ्कुरोद्गमः ।

---

[1] तत. [2] अशस्त्रमोचनेहे (मोचनेहे,) [3] तद्दुस्साध्याक्र. [3] लोकेऽसिद्ध. [4] द्भिरवेक्ष्यतां, (द्भिरिहेऽ्यतां.)

सुसितवसनालंकारायां कदाचन कौमुदी
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
[1]प्रियगृहमगान्मुक्ता[2]शङ्का क्व नासि शुभप्रदः ॥ २६८ ॥

अत्रामूर्ताऽपि कीर्तिर्ज्योत्स्नावत्प्रकाशरूपा कथितेति लोकाविरुद्धमपि कविप्रसिद्धेर्न दुष्टम् ।

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥२६९॥

ग्रहोपरा[3]गादिकं विना रात्रौ स्नानं धर्मशा[4]स्त्रेण विरुद्धम् ।

[5]अनन्यसदृशं यस्य बलं बाह्वोस्समीक्ष्यते ।
षाड्गुण्यानुसृतिस्तस्य सत्यं [6]सा निष्प्रयोजना ॥ २७० ॥

एतदर्थशास्त्रेण ।

विधाय दूरे केयूरम[7]नङ्गाङ्गणमङ्गना ।
बभार कान्तेन कृतां करजोल्लेखमालिखां ॥ २७१ ॥

अत्र केयूरपदे नखक्षतं न विहितमिति एतत्कामशास्त्रेण ।

---

महसीति । महश्शब्द उत्सवार्थोऽपि । स्वैरमिति । उपपतिपार्श्वे । क्व नासीत्यत्र क्वनास्तीति [3]पाठो युक्तः ।

प्रसिद्धिविरुद्धमुक्त्वा धर्मशास्त्रादिविद्याविरुद्धमाह—सदेति

केयूरेति । कामशास्त्रे केयूरस्थाने नखक्षतं नोक्तमित्यर्थः ।

---

1 पति. 2 शङ्कम् क, 3 रागं वि, 4 स्त्रे वि,
5 अनन्यसदृशं बाह्वोर्बलं यस्य विलोक्यते, 6 स्यान्निष्प्रयोजना,
7 नङ्गाङ्क । (ङ्गाङ्गद.)

अष्टाङ्गयोगपरिशीलनकीलनेन
दुस्साधसिद्धिसविधं विदधद्विदूरे ।
आसादयन्नभिमतामधुना विवेक
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः ॥ २७२ ॥

अत्र विवेकख्य[1]तिः, ततस्संप्रज्ञातसमाधिः, पश्चादसंप्रज्ञातः ततो मुक्तिः, न तु विवेकख्यातौ । एतद्योगशास्त्रेण । एवं विद्यान्तरैरपि विरूद्धमुदाहार्यम् ।

प्राप्ताश्श्रियस्सकलकामदुघास्ततः किं
[2]दत्तं पदं शिरसि विद्विषतां ततः किम् ।
[3]संतर्पिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ ५७२॥

अष्टाङ्गेति । यमनियमासनप्राणायामप्रत्याहारधारणध्यानसमाधयोऽङ्गानि, परिशीलनमभ्यासः, कीलनं स्थिरीकरणं, योगस्य परिशीलनेन कीलनमित्यर्थः । दुस्साधसिद्धः सविधयति यत्, ता एव वाऽणिमादयः सविधा यस्य तत् । विदूरे दूरस्याभावो विदूरम् तस्मिन्निति व्युत्पत्त्या निकटे कुर्वन् ख्यातिं च लभमानः कोऽपि समाधिधनानां चूडामणिर्मुक्तः । संप्रज्ञाते सविकल्पे ।

प्राप्ता इति । प्रस्तावैक्यसम्बद्धत्वे सत्यपि निरपेक्षतयाऽवश्यवाच्यतया पर्यायान्तरभावाच्च एककाव्यमध्ये भिन्नवाक्यगतत्वेन शब्दार्थयोः पौनरुक्त्येऽसौ दोषः, विपर्यये तु कथितपदपुनरुक्ता-

---

[1] तिः, संप्रज्ञातः पश्चादसंप्रज्ञातः ततो विमुक्तिः नतु विवेकख्यातौ.
[2] द्वितीयतृतीयचरणयोः व्यत्यासेन पाठोप्यस्ति. [3] संमानिताः.

अत्र ततः [1]किमिति न नवीकृतम् । तत्तु यथा—

यदि दहत्यनलोऽत्र किमद्भुतम्
यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः
प्रकृतिरेव सतामविषादिता ॥ २७४ ॥

यत्रानुल्लिखि[2]तार्थमेव निखिलं निर्माणमेतद्विधेः
उत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्संपदः
तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥२७५॥

---

ख्यौ शब्दार्थयोर्दोषौ ।

ननु—कथितपदे शब्दपौनरुक्त्यादर्थपौनरुक्त्यं बलादप्यायात-मित्यनयोरयमेव वक्तुं युज्यते। नैवं—आपातमात्रेण प्रतीतिग्राह्ये शब्द-स्यार्थस्य वा पौनरुक्त्ये कथितपदपुनरुक्तदोषौ यतः स्याताम् ।

यदीति । अत्र किमद्भुतं सदैव प्रकृतिरेवेत्यादीनां ततः किमित्यर्थत्वं तात्पर्यतया न पर्यायान्तरतया ज्ञेयम् । अतो न पुनरुक्तदोषप्रसङ्गः । निर्वेदपरस्थेयमुक्तिस्ततः प्रत्युत शान्तरसपोष इति नायं दोषः इत्येके ।

यत्रेति । यत्र जगदिदमनुल्लिखिताक्षमनभिव्यक्ताकारं, यस्या-कारो जगताऽपि नोल्लिख्य निर्णीतः । यद्वा—अनुल्लिखितान्ययमी-द्दगित्यनिर्णयपराण्यक्षाणि यस्येति तत्तथा । उत्कर्षाय प्रतियोगिनः

---

[1] किमित्यनवी, [2] ताख्यमे । यत्रानुल्लिखिताक्ष (ताक्षरं) इति पाठद्वयं सङ्केते दृश्यते.

अत्र 'च्छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता' इति सनियमत्वं वाच्यम् ।

वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव [1]मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽ[2]स्मिन् कथमवनिपते ! तेऽम्बुपानाभिलाषः ॥ २७६ ॥

अत्र 'शोणएव' इति नियमो न वाच्यः ।

श्यामां श्यामलिमानमानयत भोस्सान्द्रैर्मषीकूर्चकैः
मन्त्रं तन्त्र[3]मथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दशदिशस्तद्वक्त्रमुद्राङ्किताः ॥ २७७ ॥

अ[4]त्र ज्यौत्स्नीमिति श्यामाविशेषो वाच्यः ।

---

कल्पनं चिन्ता । आभासेनैव मणीकृता अन्याश्मानो येन स चासौ सुमणिश्च स तथा । अत्र एव शब्दाभावे सानियमत्वं परिवृत्तम् । छायामात्रेत्युक्तौ तु मात्रशब्दान्नियमो लभ्यते ।

न वाच्य इति । अवधारणे हि कृते हृद एवाधरो न रक्त इति प्रतीतिः, तस्मादनियमो वाच्यः ।

श्यामामिति । तस्या वक्त्रमुद्राङ्किताः काष्ठाः पाश्चात्योद्दीपनविभावैरालोकयोग्याः कृताः । श्यामेत्युक्ते सामान्या निशा लभ्यते न राकासामान्यमिति ।

---

[1] मुञ्चन्ति देव, [2] स्मिन्नवराति कथंतेऽम्बु. [3] मपि प्र, [4] त्र ज्यौत्स्नी.

कल्लोलवेल्लितदृषत्परुषप्रहारैः
रत्नान्यमूनि मकरा[1]लय! माऽवमस्थाः।
किं कौस्तुभे[2]न विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥ २७८ ॥

अत्र 'एतेन किं न विहितो भवतस्स नाम'[3] इति सामान्यं वाच्यम्।

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया।
उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥२७९॥

अत्र स्त्रीरत्नमुपेक्षितुमित्या[4]काङ्क्षति। न हि परस्येत्यनेन सम्बन्धो [5]योग्यः।

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनस्सर्वत्र सर्वे गुणाः ॥२८०॥

अत्र 'स्याच्चेदेष न रावणः' इत्य[6]न्तमेव समाप्यम्।

---

न कौस्तुभेनेति। विशेषः।

न हीति। परस्य रामस्य स्त्रीरत्नमिति योगो न तथा प्रतीत्यभावात्। एषा रावणमातामहमाल्यवदुक्तिः।

समाप्यामिति। अयं भावः—रावण इत्येतत् जगदाक्रन्दकारित्वाद्यर्थान्तरं वदज्ज्ञानकस्य धर्मवीरं प्रत्यनुभावतामिति। ऐश्वर्यं

---

[1] राकरमा (राश्रय) [2] न भवतो विहितोन, [3] ति, वाच्यं सामान्यं,
[4] ति, कां. [5] योग्यः व्यवहितत्वात्. [6] त एव.

श्रुतेन बुद्धिर्व्यसनेन मूर्खता
मदेन नारी सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिस्समाधिना
नयेन चालंक्रियते नरेन्द्रता ॥ २८१ ॥

अत्र श्रुतादिभिरुत्कृष्टैस्सह[1] चरितैः र्व्यसनमूर्खतयोर्निकृष्टयोः, भिन्न[2]त्वम् । 'विनयेन धीरता' इति पाठो युक्तः ।

लग्नं रागावृता[3]ङ्ग्या सुदृढमिह ययैवासियष्ट्याऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यश्श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः॥ २८२॥

इत्यत्र 'विदितं तेस्तु' इत्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते ।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशां

पाण्डित्यं परमेशभक्तिर्देशाविशेषोऽभिजन इत्येतत्सर्वं लोकवाक्यबाधेनाधर्मपरस्य निष्फलमिति तावतोऽर्थस्य तिरस्कारकत्वेनैव रावणचेष्टितं निर्वाहणीयम् । यत्त्वन्यदुपात्तं क्व नु पुनरिति तद्यदि ससन्देहत्वेन योज्येत अथाक्षेपत्वेनाद्यापि नेदृग्वरो लभ्यते इत्यत्रार्थान्तरन्यासत्वेन तथापिऽप्रकृतस्य धर्मवीरस्य न कथंचिन्निर्वाहः ततोऽस्थानमुक्तः । दोषो भिन्नत्वमिति योगः ।

प्रयत्नेति । दुर्योधनं प्रति अश्वत्थामाऽऽह, कृतद्रोणाचार्यपदेन मया सर्वेषु हतेषु अरिषु त्वं निश्चिन्तः शयितः सन् स्तुतिभिरेव यदि

[1] चौर्य्यै [2] त्वम् लग्नं, [3] ताङ्गयत्यत्र,

अकेशवमपाण्डवं भुवनमद्य निस्सोमकम् ।
इयं परिसमाप्यते रणकथाऽद्य दोश्शालिनां
अ[1]पैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥ २८३ ॥

अत्र शयितः प्रयत्नेन बोध्यसे इति [2]विधेयम् । 'सुखेन शयितश्चिरादुषसि बोध्यसे मागधैः' इति युक्तम् । यथावा—

वाताहारतया जगद्विषधरैराश्वास्य निश्शेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकैः
दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥२८४

अत्र वाताहारादित्रयं व्युत्क्रमेण वाच्यम् ।

अरे रामाहस्ताभरण भसलश्रेणिहरण
स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन ।
सरोहंसोत्तंस प्रचलदल नीलोत्पल ! सखे
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥ २८५ ॥

---

परं बोध्यसे । अत्र शेषे इति न विधेयं किन्तु बोध्यस इति । तथा शयित इत्यनुवादे वाच्ये शेषे इति विधिरुक्तः । तथा प्रयत्नेन परिबोध्यसे इति विधौ वाच्ये परिबोधित इति उक्तमित्यनुवादायुक्तत्वमपि ।

ईहत इति । दाम्भिकेष्विति शेषः । व्युत्क्रमेणेति । न हि वाताहारत्वादधिको दम्भोऽम्भःकरणव्रतं, नापि ततोऽधिकं दम्भनत्वं मृगाजिनवसनमिति । व्युत्क्रमोक्तिस्तु प्रकृतस्य दम्भप्रकर्षप्रभावतिरस्कृतगुणानुशोचनमयनिर्वेदस्याङ्गं स्यादेवेति विध्ययुक्तत्वम् ।

---

[1] पैति, [2] विधेयं यथावा.

अ[1]त्र 'विरहिप्राणदमन' इति नानुवाद्यम् ।

'लग्नं रागावृताङ्ग्या' इत्यादि ॥ २८६ ॥

अत्र 'विदितं तेऽस्तु' इत्युपसंहृतोऽपि 'तेन इत्यादिना पुनरुपात्तः ।

[2]उद्यतस्य परं हन्तुं स्तब्धस्य विवरैषिणः ।

य[3]थाऽस्य जायते पातो न तथा पुनरुन्नतिः ॥ २८७ ॥

अत्र पुंव्यञ्जनस्यापि प्रतीतिः ।

यत्रैको दोषः प्रदर्शितः तत्र दोषान्तराण्यपि सन्ति, तथाऽपि [4]तेषां तत्राप्रकृतत्वात्प्रकाशनं न कृतम् ।

**कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।**

**संनिधानादिबोधार्थं**

अवतंसादीनि कर्णाद्याभरणादीन्येवोच्यन्ते । तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये । यथा—

अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् ।

तथैव शोभतेऽत्यर्थमस्याश्श्रवणकुण्डलम् ॥ २८८ ॥

अपूर्वमधुरामोदप्रमोदितदिशस्ततः ।

आययुर्भृङ्गमुखराः शिरश्शेखरशालिनः ॥ २८९ ॥

---

नानुवाद्यमिति । अत्रकिमित्यस्मत्प्राणान् दमयसीति विधौ वाच्ये प्राणदमनेत्यनुवादोऽयुक्तः ।

पुंव्यञ्जनस्येति । इहान्वयव्यतिरेकाभ्यामर्थ एवाश्लीलः, पश्चात्तु पदवाक्ये अश्लीले इति भावः ।

पौनरुक्त्यापवादमाह । **कर्णेति** ।

---

[1] त्रहि, [2] हन्तुमेव प्रवृत्तस्य स्तब्ध, [3] यथाशु
[4] तेषां तेषां.

अत्र कर्णश्रवणाशिरश्शब्दाः सन्निधानप्रती[1]त्यर्थाः ।

विदीर्णाभिमुखारातिकराले [2]सङ्गरान्तरे ।
धनुर्ज्याकिणचिह्नेन [3]दोष्णा [4]विस्फुरितं तव ॥ २९० ॥

अत्र धनुश्शब्द आरूढत्वावगतये । अन्यत्र तु—

ज्याबन्धनिष्पन्दभुजेन यस्य
विनिश्वसद्वक्त्रपरम्परेण ।
कारागृहे निर्जितवासवेन
लङ्केश्वरेणोषितमाप्रसादात् ॥ २९१ ॥

[5]इत्यत्र केवलो ज्याशब्दः ।

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥ २९२ ॥

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः ।

---

शालिन इति । नरा इति शेषः ।

अत्र कर्णेति । विलासनिर्वाहार्थं प्रतिनियतस्वप्रदेशसन्निहितैर्भूषणैः प्रयोजनमिति तदर्थं प्रयुक्ता इत्यर्थः ।

अत्र धनुरिति । अन्यथा ज्याकिणचिह्नेन दोष्णेत्युक्ते नित्यनिबिडाकाष्टिकृतकिणत्वं दोष्णोर्न प्रतीयेत दीर्घज्यावेष्टनेनापि किणचिह्नोत्पत्तेः ।

अन्यत्रेति । आरूढत्वावगत्यभावे ।

मुक्ताशब्द इति । उत्प्रेक्ष्यमाणस्य स्तनकर्तृकस्य हासस्यातीव शुभ्रत्वप्रतिपत्तये साधकतमस्य हारस्य केवलमुक्तालता

---

1 त्यर्थं-विदीर्णाभि. 2 संयुगान्तरे. 3 दोषा वि. 4 विस्फूर्जितं. 5 इति केवलो.

सौन्दर्यसपत्ताारुण्यं यस्यास्ते ते च विभ्रमाः ।
षट्पदान् पुष्पमालेव [1]कान् नाकर्षति सा सखे ! ॥ ३९३ ॥

अत्रोत्कृष्ट[2]पुष्पविषये पुष्पशब्दः । निरुपपदो हि मालाशब्दः पुष्पस्रजमेवाभिधत्ते ।

**स्थितेष्वेतत्समर्थनम् ॥ ५८ ॥**

न खलु कर्णावतंसादिवत् जघनकाञ्चीत्यादि क्रियते ।
जगाद मधुरां वाचं विशदाक्षरशालिनीम् ॥ ३९४ ॥

इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ 'गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित्प्रयोगः कार्यः' इति न [3]युक्तम् । युक्तत्वे वा—

वेष्टितत्वप्रतीत्यर्थमुक्त इत्यर्थः ।

**पुष्पेति** । विदग्धविलोभनक्षमकामिन्युपमानभावेन मालाया उपादानादद्भुतपुष्पग्रथितत्वमवगमयतीत्यर्थः । **पुष्पस्रजमिति** । सामान्यपुष्पस्रजम् । 'त्यज करिकलभ ! प्रेमबन्धं करिण्याः' अत्र करिशब्दात्ताद्रूप्यावगतिः ।

**स्थितेष्विति** । प्रयुक्तेषु । **काञ्च्यादीति** । आदिशब्दादुष्ट्रकरभादि । सङ्केतव्यवहाराभ्यां हि शब्दार्थनिश्चयः क्रियते न यथाकथंचित् क्रियते,* मधुरमिति रूपे ।

**गतार्थस्येति** । गदनस्य वाग्रूपत्वात् वाचमिति विशेष्यं गतार्थमित्यर्थः ।

---

[1] कं ना. [2] पुष्पधिये. [3] युक्तम्.

* क्रियाविशेषणानि, इति प्रतीतमादाय, मधुरं इति रूपेत्यर्थः इति विवरणाय प्रवृत्तं स्यात्.

चरणत्रपरित्राणरहिताभ्याम[1]पि द्रुतम् ।
पादाभ्यां दूरमध्वानं [2]व्रजन्नेष न खिद्यते ॥ २९५ ॥

इत्याद्युदाहार्यम् ।

## ख्यातेऽर्थे निर्हेतोरदुष्टता

यथा—

चन्द्रं गता पद्मगुणान् न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥ २९६ ॥

अत्र रात्रौ पद्मस्य संकोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं, लोकप्रसिद्धमिति न भुङ्क्ते इति हेतुं नापेक्षते ॥

## अनुकरणे तु सर्वेषाम् ।

सर्वेषां श्रुतिकटुप्रभृतीनां दोषा[3]णाम् । यथा—

---

पादाभ्यामिति । व्रजन्नित्युक्ते पादाभ्यामिति लब्धमेव, परं यदुच्यते तच्चरणत्रेति विशेषणासिद्धये । विशेषणासिद्धिश्चात्र विशेष्यं विनाऽन्यथा न स्यादिति वाच्यमेव विशेष्यं । **इत्यादीति ।** युक्तत्वेति । यदा—अभ्युपगमेन व्याख्यायते तदेत्याद्येवोदाहार्यं न पुनर्जगादेत्यादि । क्रियाविशेषणत्वेनैव अत्र साध्यासिद्धेः । यदात्वसूयया व्याख्यायते तदा *(तर्हि) इत्याद्यप्युदाहार्यं न केवलं जगाद मधुगामितीती भावः ।

---

[1] पिस्फुटम्. [2] व्रजन्नपि. [3] णां न दुष्टत्वं यथा.

* अत्र तर्हि इति अनुपयुक्तम्, प्रमादपतितं भाति.

मृगचक्षुषम[1]द्राक्षमित्यादि कथयत्ययम् ।
पश्यैष च गावित्याह सुत्रामाणं यजेति च ॥ २९७ ॥

**वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित्क्वचिन्नोभौ ॥ ५९ ॥**

वक्तृ-प्रतिपाद्य-[2]व्यङ्ग्य-वाच्य-प्रकरणादीनां महिम्ना दोषोऽपि क्वचिद्गुणः, क्वचिन्न दोषो न गुणः । तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये[3] च, रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः । क्रमेणोदाहरणानि—

दीधीङ्वेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनम् ।
क्विप्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते ॥ २९८ ॥
यदा त्वामहमद्रा[4]क्षं पदविद्याविशारदम् ।
उपाध्यायं [5]तदाऽस्मार्षं समस्प्राक्षं च सम्पदम् ॥ २९९ ॥
अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लस-
द्व्यालोलस्तन[6]भारभैरववपुर्दर्पोद्धतं धावति ॥ ३०० ॥

---

मृगेति । अद्राक्षीत्, गवित्याह, सुत्रामाणं इत्यादौ श्रुतिकटुच्युतसंस्कृत्यप्रयुक्तदोषाः । इत्याहेति सर्वत्र योज्यम् ।

क्वचिन्नेति । क्वचिन्न दोषो न वा गुण इत्यर्थः ।

*क्षिदिति । कानुबन्धो ङानुबन्धश्च । ते इति । गुणवृद्धी ।

अन्त्रेति । नलकैः क्रूरं क्वणतां कङ्कणप्रायाणां प्रेङ्खितानां

---

1 द्राक्षीदित्यादि. 2 व्यङ्ग्यप्रक. 3 वैवारौद्रे. 4 क्षंशब्दाविद्या. 5 ततोऽस्मार्षन्. 6 भारभङ्गरवपुर्बन्धोद्धतम्.

* क्विप्रत्ययनिभः इति काव्यानुशासनेपाठ, तदनुसारेण क्विदिति, इति गृहीतंस्यात्.

वाच्यवशाद्यथा—

मातङ्गाः ! किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः !
सारङ्गा ! महिषा ! मदं [1]व्रजत किं शून्येषु शूरा न के ।
कोपाटोपसमु[2]द्भटोत्कटसटाकोटेरिभारेः[3] पुरः
सिन्धुध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥ ३०१

अत्र सिंहे वाच्ये परुषाश्शब्दाः । प्रकरणवशाद्यथा—

रक्ताशोक ! कृशोदरी क्व नु गता त्यक्त्वाऽनुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं [4]वातावधूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छदः
तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥ ३०२ ॥

अत्र [5]शिरोधूननेन कुपितस्य वचसि । क्वचिन्नीरसे न गुणो न दोषः । यथा—

शीर्णघ्राणाङ्घ्रिपा[6]णीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटय[7]त्येक उल्लाघयन् यः ।
घर्मांशोस्तस्य[8] वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्तेः
दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयश्शीघ्रमंहोविघातम् ॥ ३०३

---

चलितानां भूरिभूषणानां रवैः । प्राग्भारः । अत्र रौद्रो रसो व्यङ्ग्यः । वचसीति । कष्टत्वं गुण इति योगः ।

शीर्णेति । अपघनैरङ्गैरित्यत्रोपलक्षणे तृतीया । घटयति—नवान् करोतीत्यर्थः । उल्लाघयन्नीरुजीकुर्वन् । घृणानिघ्ना कृपासक्ता निर्विघ्ना वृत्तिर्यस्य तस्य तथा ।

---

[1] व्रजथ. [2] द्भवोत्क. [3] रेश्शनैः सिद्ध. [4] वाताभिभूतम्. [5] शिरो विधू. [6] णीन् घृणि. [7]. तेष. उ. [8] स्यवाक्वाद्विगुण.

अप्रयुक्तनिहतार्थौ [1]श्लेषादावदुष्टौ । यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतः
[2]यश्चोद्वृत्तभुजङ्गहारवलयोगङ्गां च योऽधारयत् ।
यस्याहुश्शशिमच्छिरो हर इति स्तुत्यं च नामामराः
[3]पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥२०४॥

अत्र माधवपक्षे शशिमदन्धक[4]क्षयशब्दावप्रयुक्तनिहतार्थौ । अश्लीलं क्वचिद्गुणः, यथा सुरतारम्भगोष्ठ्याम्—

'ताम्बूलदानविधिना विसृजेद्वयस्यां
द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु ॥'

इति कामशास्त्रस्थितौ—

करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन् ध्वजः पुंसस्साधनान्तर्विराजते ॥ ३०५ ॥

---

येनेति । अनश्शकटम् । अभवेनासंसारिणा । बलिं दैत्यं जितवान्यः कायः स पूर्वं सुधाहृतौ स्त्रीचक्रे। भुजङ्गहा—कालियाहिघाती । रवलयः शब्दब्रह्मलयः । अगं शैलं गां च क्षमाम् । शशिनं मन्थति यो राहुस्तस्य शिरोहरः। अन्धका वृष्णयः। क्षयो निवासः। सर्वदः सर्वदाता। उमाधवपक्षे—बलिजतो हरेः कायः पुरेष्वस्त्रीचक्रे । शशियुक्तं शिरः, हर इति नाम च यस्याहुः । अन्धको दैत्यः ।

करीति । "तर्जन्यनामिके श्लिष्टे मध्यमापृष्ठतस्तयोः ।
करिहस्त इति प्रोक्तः कामशास्त्रविशारदैः" ॥

संबाधस्सङ्कटयोन्योः, ध्वजः पताकावच्चिह्नं पुंलिङ्गं च साधनं योनिरपि ।

---

[1] श्लेषादौ न दुष्टौ. [2] योऽगङ्गां च दधेऽन्धकक्षयकरो [3] सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां. [4] क्षयकरशब्दा.

शमकथासु—

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥ ३०६ ॥

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयास्सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुतास्सभृत्याः ॥ ३०७ ॥

अत्र भाव्यमङ्गलसूचकम् ।

संदिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थ[1]प्रतीति[2]कृत्त्वेन व्याजस्तुतिपर्यवसायित्वे गुणः । यथा—

पृथुकार्तस्वरपात्रं भूषितनिश्शेषपरिजनं देव! ।
विलसत्करेणुगहनं संप्रति सममावयोस्सदनम् ॥ ३०८ ॥

प्रतिपाद्यप्रतिपादक[3]योर्ज्ञत्वे सत्य[4]प्रतीतं गुणः । यथा—

रक्तेति । रक्तं सानुरागं, रक्तेन च रुधिरेण प्रसाधिता आर्जिता मण्डिता च भूर्यैः । विग्रहो वैरं वपुश्च । स्वस्थाः स्वर्गस्थाः कुशलिनश्च ।

पृथुकेति । पृथुकानां बालानां आर्तस्वरा एतेषां पात्रं, पृथोः कार्तस्वरस्य हेम्नः पात्राणि यत्र । भुवि उषितो भूषितोऽलङ्कृतश्च । विलसत्कैः रेणुभिः विलसद्भिः करेणुभिश्च । अत्र राजकविपक्षयो-

[1] प्रतिपत्तिं कृत्वैव व्या. [2] कृद्व्याज. [3] योस्तज्ज्ञत्वे. [4] प्रतीतोगुण.

आत्मारामा विहितरतयो निर्विकल्पे समाधौ
[1]ज्ञानोद्रेकाद्विघटि[2]ततमोग्रन्थयस्सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥ ३०९ ॥

स्वयं वा परामर्शे यथा—

षडधिकदशनाडीचक्रमध्यास्थितात्मा
हृदि विनिहितरूपस्सिद्धिदस्तद्विदां यः ।
अविचलितमनोभिस्साधकैर्मृग्यमाणः
स जयति परिणद्धश्शक्तिभिश्शक्तिनाथः ॥ ३१० ॥

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः । यथा—

फुल्लुक्करं कमल[3]कूरणिहं वहन्ति
जे सिन्धुवारविडवा मह वल्लहा दे।
जे गालिदस्स महिसीदहिणो सरिच्छा
दे किं च मुद्धविअइल्लपसूणपुञ्जा ॥ ३११ ॥

छाया— पुष्पोत्करं कमलकूरनिभं वहन्ति
ये सिन्धुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नस्सदृक्षाः
ते किंच मुग्धविचाकिल्लप्रसूनपुञ्जाः ॥

---

नियतार्थप्रतीतौ व्याजस्तुतिपर्यवसायित्वाद्गुणत्वम् ।

निर्विकल्प इति। भेदसंसर्गाभ्यां ज्ञानं विकल्पः ।

षडिति । इडापिङ्गलासुषुम्नागान्धारीहस्तिजिह्वापूषासुयशोऽलम्बुसाकुहूप्रभृतिवाताश्रितषोडशनाडीचक्रस्य मध्ये स्थित आत्मा यस्य । हृदीति। हृच्चक्रे। रूपं ज्योतिरादिरूप अकारः । सिद्धिर्भुक्तिमुक्तिरूपा ज्ञानेच्छाक्रियाद्याः शक्तयः, तासां न्यग्भावोद्भावनप्रभुः ।

---

1 ज्ञानोत्सेका. 2 तमनोग्र. 3 कूरसमंवहन्ति.

[1]न्यूनपदं क्वचिद्गुणः । यथा—

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
[2]सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माऽति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम्॥

क्वचिन्न गुणो न दोषः । यथा— ३१२॥

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि [3]पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं [4]नयनयोर्यातेति कोऽयं विधिः॥३१३

अत्र पिहितेत्यतोऽनन्तरं 'नैतद्यतः' इत्येतैर्न्यूनैः पदैर्विशेषबुद्धेरकरणान्न गुणः । उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधत इति न दोषः ॥

[5]अधिकपदं क्वचिद्गुणः । यथा—

यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।

---

मामेति । मामेत्यादिनिषेधपदेषु कदर्थयेत्यादिः काऽपि क्रिया नास्तीति न्यूनत्वं ।

उत्तरेति । पूर्वां तिष्ठेदित्यादिकां प्रतिपत्तिं बाधित्वा दीर्घं न सेत्यादिरुत्तरा 'नैतद्यतः' इति विनाऽपि प्रतिपत्तिः स्यादित्यर्थः ।

---

1 न्यूनं पदं. 2 सान्द्रानन्दर, 3 पुनः स्नेहार्द्र. 4 योजाति.
5 अधिकं प.

तत्साधवो न न विदन्ति विदन्ति किं तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥ ३१४ ॥

अत्र विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम् । यथावा—

वद वद जितस्स शत्रुर्न हतो [1]जल्पंश्च तव तवास्मीति ।
चित्रं चित्रमरोदीद्धा हेति परं मृते पुत्रे ॥ ३१५ ॥

इत्येवमादौ हर्ष[2]भयादियुक्ते वक्तरि ।

[3]कथितपदं क्वचिद्गुणो लाटानुप्रासे, अर्थान्तरसंक्रमितवाच्ये, विहितस्यानुवाद्यत्वे च । क्रमेणोदाहरणानि—

सितकरकररुचिरविभा विभाकराकार धरणिधर ! कीर्तिः।
पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य॥३१६॥

ताला जाअन्ति गुणा जाला ते सहिअएहिँ घेप्पन्ति ।
रइकिरणानुग्गहिआहिं होन्ति कमलाइँ कमलाइँ ॥३१७॥

(छाया—तदा जायन्ते गुणा यदा सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥)

---

अन्ययोगेति । सन्त एव जानन्तीति भावः ।

हर्षेति । आदिशब्दात् हाहेति शोकः ।

पौरुषेति । पौरुषलक्ष्मीरेव तव लक्ष्मीरिति व्याख्याने लाटानुप्रासः । पौरुषमेव कमलं यस्याः कमलाया इति व्याख्याने तु तात्पर्यमात्रभेदाभावाद्यमकत्वमेव ।

तालेति । ताला तदा जाला यदा । अत्रापरः कमलाशब्दो

---

[1] ज ल्पंस्तु त. [2] भयशोकादि. [3] थितं पदं गुणो लाटा.

जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ।
[1]गुणप्रकर्षेण जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः ॥ ३१८ ॥

पतत्प्रकर्षमपि क्वचिद्गुणः, यथा—उदाहृते 'प्रागप्राप्त' इत्यादौ।

समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः, यत्र न [2]विशेषणमात्रदानार्थं पुनर्ग्रहणं, अपि तु वाक्यान्तरमेव क्रियते, यथा—अत्रैव 'प्रागप्राप्त' इत्यादौ ।

अपदस्थसमासं क्वचिद्गुणः, यथा—उदाहृते 'रक्ताशोक । इत्यादौ।

गर्भितं तथैव । यथा—

हुमि अवहत्थिअरेहो णिरङ्कुसो अह विवेअरहिओ वि ।

---

विकसितत्वादिगुणार्थान्तरवाची ।

प्रागिति । अत्र हि चतुर्थपादे जामदग्न्यस्य शम्भौ भक्तिरेवोक्ता सा च पतत्प्रकर्षेणैव वक्तुं योग्या ।

अत्रैवेति । अयं भावः—भवत्वशिथिल इत्यादिना समाप्तेऽपि परशुवर्णने येनानेनेति वाक्यान्तरेण पुनस्तस्यैव वर्णनमारब्धं न दुष्टं, *वाक्यानन्तर्गतत्वेनोक्तत्वात् । विशेषणत्वेनोक्तौ तु दुष्टत्वमेव। यथा—नववयोलास्याय वेणुस्वन इत्यादौ ।

रक्तेति । अत्र विरहिवाक्ये दीर्घसमासता नोचिता । परं शिरःकम्पावलोकात् कुपित इव विरहीति कुपितोक्तौ न दोषाय । तथैवेति । क्वचिद्गुण इत्यर्थः।

हुमीति । विषमबाणलीलाकथागाथेयम् । स्मरं प्रति कारु-

---

[1] गुणाधिके पुंसि ज. [2] णदा. * वाक्यान्तरत्वेनोक्तत्वात् इति तु स्वरसम्.

सिविणेवि तुमम्मि पुणो पत्तिहि भत्तिं ण पम्मुसरामि॥३१९

छाया—भवाम्यपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि ।
स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरामि ॥

अत्र प्रतीहीति मध्ये दृढप्रत्ययोत्पादनाय । एवमन्यदपि [1]लक्ष्याल्लक्ष्यम् ॥

**व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।**
**कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥६०॥**
**प्रतिकूलविभावादिग्रहो दीप्तिः पुनःपुनः ।**
**अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः ॥६१**
**अङ्गिनोऽननुसंधानं प्रकृतीनां विपर्ययः ।**
**अनङ्गस्याभिधानं च [2]रसे दोषास्स्युरीदृशाः ॥६२**

स्वशब्दोपादानं व्यभिचारिणो यथा—

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिश्शिवायास्तु वः ॥३२०॥

अत्र व्रीडा[3]दीनाम् ।

---

ण्योक्तिरेषा । रेखा मर्यादा ।

कष्टेति । अनुभावोक्तौ विभावस्य कष्टेन व्यक्तिः । विभावोक्तौ चानुभावस्य । व्रीडादीनामिति । स्वशब्दोपादानमिति योगः ।

---

1 क्ष्यात्प्रेक्ष्यं (लक्ष्यं, व्यभि). 2 रस दो. 3 दीनां वाच्यत्व.

'व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।
मीलद्भ्रूस्सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे'

[1]इत्यादि तु युक्तम् ।

रसस्य स्वशब्देन श्रृङ्गारादिशब्देन वा [2]वाच्यत्वम् । क्रमेणोदाहरणम्—

तामनङ्गजयमङ्गलश्रियं
किञ्चिदुच्चभुजमूललोकिताम् ।

---

रसस्य सामान्यविशेषभावात् द्वैरूप्यमित्याह ।

स्वशब्देनेति । स्वशब्दो रस इति रूपः ।

वाच्यत्वमिति । वाच्यत्वं हि रसादेः स्वशब्दनिवेदितत्वेन वा, स्याद्विभावादिप्रतिपादनमुखेन वा पूर्वस्मिन् पक्षे स्वशब्दनिवेदितत्वाभावे मिभावादिप्रतीतौ रसादेरप्रतीतिप्रसङ्गः । न च केवलशृङ्गारादिशब्दान्विते विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिः, यथा—'शृङ्गारहास्यकरुणाः' इत्यादौ । तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादेर्न त्वभिधेयत्वं कथञ्चिदिति स्वशब्दवाच्यता दोष इत्यर्थः । एवं द्वितीय एव पक्षो न्याय्यः । एतेन शृङ्गाराद्याः शब्दाः शृङ्गारादेर्वाचकाः इत्युद्भटोक्तं निरस्तम् ।

तामिति । भुजमूलं कक्षौ तत्र जनैर्या लोक्यते तां तथा ।

---

[1] दियु. [2] त्वं ताम.

नेत्रयोः कृतव्रतोऽस्य गोचरे
कोऽप्यजायत रसो निरन्तरः ॥ ३२१ ॥
आलोक्य कोमलकपोलतलाभिषिक्त-
व्यक्तानुरागसुलभामभिरा[1]मरूपाम् ।
पश्यैष बाल्यमतिवृत्य विवर्तमानः
शृङ्गारसीमनि तरङ्गितमातनोति ॥ ३२२ ॥

स्थायिनो यथा—

सम्प्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
[2]ठणत्कारैश्श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥ ३२३ ॥

अत्रोत्साहस्य ।

कर्पूरधूलिधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥ ३२४ ॥

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा *अनुभावा[3]-पर्यवसायिनः स्थिता इति कष्टकल्पना ।

अभिषिक्तो न्यस्तः । व्यक्त इति । पुलकादिनेति शेषः ।

सम्प्रहार इति । प्रहरणैः शस्त्रैर्ये घातास्तेषां ठणत्कारैरित्यर्थः । यत्रापि स्वशब्दनिवेदितत्वं विभावादिप्रतिपादितत्वमप्यस्ति तत्रापि विभावादिमुखेनैव रसादिप्रतीतिः, स्वशब्देन सा केवलमनूद्यते ।

लीलेति । लीलया शिरस्यंशुकस्य निवेशविशेषेण या क्लृप्तिस्तया । रूपा इति । शशिकान्तिदिक्स्त्रीरूपाः । अनुभा-

[1]म. मतिं. [2]झणत्कारैः. [3]अनुभावा पर्यवसायिनः इति सङ्केतानुसारी पाठः
* आस्वादापर्यवसायिन इति प्रदीपे दृश्यते तदनुसारेणतु अनुभावापर्यवसायिन इति पाठः । अनुभावपर्यवसायिन इत्यपिपाठः क्लेशेनानुभावप्रत्यायका इति तदर्थः.

परिहरति रतिं मतिं लुनीते
[1]स्खलति भृशं परिवर्तते च भूयः।
इति बत विषमा दशाऽस्य देहं
परिभवति प्रसभं किमत्र कुर्मः ॥ ३२६ ॥

अत्र रतिपरिहारादीनामनु[2]भावानां करुणादावपि संभवात्कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः।

प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये! शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥ ३२७ ॥

अत्र शृङ्गारे प्रतिकूलस्य शान्तस्य अनित्यताप्रकाशनरूपो विभावः तत्प्रकाशितो निर्वेदश्च व्यभिचार्युपात्तः।

---

वेति। शृङ्गारी चेद्युवा सम्भवन्ति तथाविधानुभावाः, शान्तश्चेन्न सम्भवन्ति, तं प्रति विभावानामकिञ्चित्करत्वादिति शृङ्गारित्वसन्देहे सन्तोऽपि विभावाः लीलादिष्वनुभावेषु नपर्यवस्यन्ति। नापि 'वियदलिमलिनांबु' इत्यादिवदत्र विभावस्यासाधारणतयाऽन्यतमाक्षेपहेतुः किमपि पदमस्ति।

प्रतिकूलस्येति। कालो मृगचलः प्रयातः प्रयात एव न पुनरेतीत्यादि वैराग्यकथाभिः प्रियाप्रसादनं निर्विण्णस्यैव कस्यापीति शृङ्गारप्रतिकूलत्वं शान्तस्य। विभाव इति। एतेन विभावप्रातिकूल्यम्। निर्वेदश्चेति। निर्वेदोऽप्यत्र स्वदत इति व्यभिचा-

---

[1] स्खलतितरांपरिवर्तते स भू. [2] भावादीनां.

णिहुअरमणम्मि लोअणवहम्मि पडिए गुरूण मज्झम्मि ।
सअलपरिहारहिअआ वणगमणं एव्व महइ वहू ॥ ३२८

अत्र सकलपरिहारवनगमने शान्तानुभावौ । इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेन्न दोषः ।

दीप्तिः पुनःपुनः यथा—कुमारसंभवे, रतिप्रलापे ।

अकाण्डे प्रथनं यथा—वेणी[1]संहारे द्वितीयेऽङ्के, अनेकवीरसंक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम् ।

अकाण्डे छेदो यथा–वीरचरिते द्वितीयेऽङ्के, राघवभार्गवयोर्धाराधिरूढे वीररसे 'कङ्कणमोचनाय गच्छामि इति राघवस्योक्तौ ।

अङ्गस्य अप्रधानस्य अतिविस्तरेण वर्णनं, यथा—हयग्रीववधे हयग्रीवस्य ।

---

रिप्रातिकूल्यम् । शान्तं प्रति निर्वेदस्य व्यभिचारित्वं परमतेन । स्वमते तु विचार्यम् । एवं शृङ्गारबीभत्सयोः वीरभयानकयोः शान्तरौद्रयोरपि विभावादिप्रातिकूल्यं ज्ञेयम् ।

णिहुयेति । निभृतरमण उपपतिः । वनगमनं सङ्केतगृहम् ।

दीप्तिरिति । उपभुक्तो हि रसः स्वासामग्रीलब्धयोगः पुनःपुनः परामर्शेन मालतीमालेव म्लायति । धाराप्राप्ते हि रसे तदाविष्टानां * तत्परवशानामुक्तिरल्पीयस्येव निर्यातीत्यर्थः । संक्षय इति । भीष्मादिवीरलक्षाणाम् ।

हयग्रीवेति । विपक्षोत्कर्षेण मूलनायकस्य विष्णोर्महोत्कर्ष इति साध्विदमिति, (?) तस्मादित्थं वाच्यम् तथा हि कादम्बर्यां 'रूपविलासे' त्यादिना महाविप्रलम्भबीजमुपक्षिप्य तदनुपयोगिनामटवीशबरेशाश्रममुनिपुरीनृपादीनां

---

[1] सं वरणे. * तत्परवशाः महाकवयो विवक्षिताः ।

अङ्गिनोऽननुसंधानं, यथा—रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः ।

प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च, वीररौद्रशृङ्गारशान्तरसप्रधाना धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ताः, [1]उत्तममध्यमाधमाश्च । तत्र रतिहासशोकाद्भुतान्यदिव्योत्तमप्रकृति-

---

हर्षाख्यायिकायां वा—'जयति ज्वलादित्यादिना' हर्षोत्कर्षवाद्विजयबीजे अनुपयोगिबाणान्वयस्य वर्णनं, तदित्थं महाकवयोऽप्यन्यद्बीजमुपक्षिप्य तदसङ्गतशृङ्गाराङ्गभूततत्तदृतूपवनविहारपुष्पापचयजलकेल्यादीनां प्रस्तुतरसातिरस्कारिणीं वर्णनां कुर्वन्तो दृश्यन्त इतित एवात्र तत्वज्ञाः ।

विस्मृतिरिति । अनुसन्धानं हि सहृदयतायाः सर्वस्वं ।

प्रकृतय इति । स्वभावाः । धीरोदात्तेति । धर्मयुद्धवीरप्रधानो धीरोदात्तः । धीरोद्धतादित्रयेऽपि क्रमेण रौद्रशृङ्गारशान्तरसप्राधान्येऽप्यवश्यंभावित्वादुत्साहस्य वीररसप्राधान्यमपिज्ञेयम् । ततो वीररौद्राभ्यां वीरशृङ्गाराभ्यां दानधर्मवीरशान्ताभ्यां प्रधानाः धीरोद्धतादयः स्युः । दिव्यादिप्रकृतित्रिकस्य प्रत्येकमुत्तममध्यमाधमभेदत्वेन त्रिधात्वे सति नवधात्वम् । नवभेदानामपि प्रत्येकं धीरोदात्तादित्वेन चतुर्धात्वे षट्त्रिंशद्भेदत्वम् । अदिव्योत्तमेति । अदिव्या मानुषी सा चासावुत्तमप्रकृतिश्चेति सा तथा । अभिनेयानभिनेययोः काव्ययोर्यथो-

---

[1] उत्तमाधममध्यमाश्च.

वद्दिव्येष्वपि। किंतु रतिस्संभोगशृङ्गाररूपा उत्तमदेवताविषया न वर्णनीया। तद्वर्णनं हि पित्रोस्संभोगवर्णनमिवात्यन्तमनुचितम्।

क्रोधं [1]प्रभो! संहरसंहरेति
यावद्गिरः खे मरुतां चरन्ति।
तावत्स वह्निर्भवनेत्रजन्मा
भस्मावशेषं मदनं चकार ॥ ३२९ ॥

[2]इत्युक्तवत् भ्रुकुट्यादि[3]विकारवर्जितः क्रोधस्सद्यःफलदः स्वर्गपातालगगनसमुद्रोल्लङ्घनाद्युत्साहश्च दिव्येष्वेव। [4]अदिव्येषु तु यावदवदानं प्रसिद्धमुचितं वा तावदेवोपनिबद्धव्यम्, अधिकं तु निबध्यमानमतथ्यप्रतिभासेन 'नायकवद्वर्तितव्यं न

त्तमप्रकृतिराजादेरुत्तमस्त्रीभिः सह ग्राम्यं सम्भोगविप्रलम्भवर्णनं तथैव दिव्येषु। सम्भोगश्च न सुरतात्मैवैको यावदन्योऽपि मिथोदर्शनादिको ग्राह्यः। एवं हास्यादावप्यौचित्यं वाच्यम्। दिव्येषु रतेर्वर्ण्यत्वेन सामान्येनोक्तौ उत्तमदेवताविषयत्वेनापि सा स्यादित्याशङ्क्याह। **किन्त्विति।** **अनुचितमिति।** आस्वादकानां हि यत्र चमत्काराविघातस्तदेव रससर्वस्वं, आस्वादायत्तत्वात्, पित्रोस्सम्भोग इवैतद्वर्णने लज्जातङ्कादिना अचमत्कार इत्यर्थः। यथा कुमारसम्भवेऽष्टमसर्गे।

**क्रोधइति।** भ्रुकुट्यादिविकारवांस्त्वदिव्येष्वेव।

**अवदानमिति।** सातिशयं कर्म। **अधिकमिति।** अयं भावः। स्वःपातालगमनाब्धिलङ्घनादिकमादिव्यस्य वर्ण्यमानमसम्भा-

[1] विभो! [2] इत्युक्तिवत्. [3] विकार विवर्जितः सद्यः फलदः कोपः। स्व० पा। [4] आदिव्येषु च या।

**प्रतिनायकवत्' इत्युपदेशे न पर्यवस्येत् । दिव्यादिव्येषूभयथाऽपि । एवमुक्तस्यौचित्यस्य दिव्यादीनामिव धीरोदात्तादीनामप्यन्यथा वर्णनं विपर्ययः । तत्रभवन् भगवन्नित्युत्तमेन नाधमेन, मुनिप्रभृतौ न राजादौ,[1] भट्टारकेति नोत्तमन राजादौ प्रकृतिविपर्ययापत्तेर्वाच्यम् । एवं देशकालवयोजात्यादीनां वेष[2]व्यवहारादिकमुचितमेवोपनिबद्धव्यम् ।**

---

व्यतयाऽलीकामिति चिन्तयन्तो विनेया उपदेशस्य चतुर्वर्गोपायस्याप्यलीकतां कल्पयन्ति सर्वमिदं शास्त्रोक्तमसम्बद्धमितीति । (भावः) । **उभयथापीति** । रामपाण्डवादौ दिव्यादिव्यसम्बद्धं वाच्यमित्यर्थः । **न मुनिप्रभृताविति** । वाच्यमिति योगः । प्रकृति विपर्ययापत्तेरिति हेतुः । देशे तु विश्वं, विश्वैकदेशाश्च देशः । एकं द्वे त्रीणि सप्त चतुर्दशैकविंशतिर्वा विश्वानि स्युः । स्वर्गमर्त्यपाताळमहर्जनस्तपः सत्यैः सप्तभिश्च वायुस्कन्धैः सप्तभिश्च पाताळैः । विशेषविवक्षायामनेकत्वं, सामान्यविवक्षायां त्वैक्यम् । तत्र भूमध्ये जम्बूद्वीपप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कराद्याः सप्त द्वीपाः । अष्टादशेत्येके । एकस्त्रयः चत्वारः सप्ताब्धयो वाच्या इत्यादिकविप्रसिद्ध्या सर्वं घटते । कालः—काष्ठाकलामुहूर्तरात्रिदिनपक्षमासर्तुवर्षादिभेदभिन्नः । वयः शैशवादिकम् । जातिः स्त्रीपुंसादिका, ब्राह्मणत्वादिका वा आदिशब्दाद्विद्यावित्तकुलादयः । व्यवहारादीत्यादिशब्दादाकारवचनादयः । व्यवहारादीति देशादिभिः प्रत्येकं

---

[1]दि समुचित. [2]भट्ट के ति नराजादौ परमेश्वरेति मुनिप्रभृतौ प्रक्ष।

अनङ्गस्य रसानुपकारकस्य वर्णनं यथा—कर्पूरमञ्जर्यां नायिकया स्वात्मना [1]च कृतं वसन्तवर्णनमनादृत्य वन्दिवर्णितस्य [2]राज्ञा प्रशंसनम् ।

'ईदृशाः' इति । नायिकापादप्रहारादिना नायककोपादिवर्णनम् । उक्तं हि ध्वनिकृता—

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥ इति ॥

इदानीं क्वचिद्दोषा अप्येत इत्युच्यन्ते ।

**न दोषस्स्वपदेनोक्तावपि संचारिणः क्वचित् ।**

यथा—

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताऽऽभिमुख्यं पुनः ।
दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥३३०

अत्रौत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत् ।

---

योज्यम् । तेन देशवेषादेरौचित्येन निबन्धः कार्य इत्यर्थः । एवं कालादौ योज्यम् ।

*तस्येति । वसन्तस्य ।

एत इति । दोषा इत्यर्थः ।

न तथेति । यथौत्सुक्यनामा सञ्चारी साक्षात् स्वपदेनोक्तश्चमत्कारी न तथा तदनुभावाश्चिन्तादिरूपश्चमत्कारीति स्वशब्देनौत्सुक्यनामा संचारी सम्प्रोक्तः ।

---

[1] च वसन्तस्यवर्ण । [2] राज्ञः प्र. * वर्णितस्य इत्येतदुत्तरं तस्येति पाठं मनुते.

अत एव 'दूरादुत्सुकं' इत्यादौ व्रीडाप्रेमाद्यनुभावानां विचलितत्वादीनामिवोत्सुकत्वानुभावस्य सहसाप्रसारणादिरूपस्य तथा प्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम्।

**संचार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा॥६३**

बाध्यत्वेनोक्तिर्न परमदोषः, यावत्प्रकृतरसपरिपोषकृत्। यथा 'क्वाकार्यं शशलक्ष्मणः क्व च कुलं' इत्यादौ। अत्र वितर्कादिषूद्गतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतरसपरिपोषः।

पाण्डु क्षामं [1]वदनं हृदयं सरसं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः॥३३१॥

इत्यादौ साधारणत्वं पाण्डुतादीनामिति न विरुद्धत्वम्।

---

**व्रीडादीति**। व्रीडाहर्षकोपासूयाप्रसादाः। तदनुभावाः विवलनस्फारणारुणत्वाञ्चितभ्रूलतात्वबाष्पाम्बुपूर्णत्वस्वरूपाः। **तथा प्रतिपत्तीति**। चमत्कारकारित्वाभावादित्यर्थः।

**क्वाकार्यमिति**। अत्र वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये धृतिचिन्तने मिथो बाध्यबाधकतया भवन्ती चिन्तायामेव विश्राम्यन्ती परमास्वादस्थानम्।

**पाण्डु क्षाममिति**। रसावामस्नेहौ क्षेत्रियरोगः क्षयरोग उद्गारश्च। **न विरुद्धत्वमिति**। पाण्डुतादयो हि क्षयरोगजा जारचिन्तोत्थाश्च मृत्यवे भवन्तीति करुणविप्रलम्भयोः समाः।

---

[1] वक्त्रं.

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः ।
किं तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥ ३३२ ॥

इत्यत्राद्यमर्धं बाध्यत्वेनैवोक्तम् । जीवितादप्यधिकमपाङ्गभङ्गस्यास्थिरत्वमिति [1]प्रसिद्धभङ्गुरोपमानतयोपा[2]त्तं शान्तमेव पुष्णाति, न पुनश्शृङ्गारस्यात्र प्रतीतिः, तदङ्गाप्रतिपत्तेः । न तु वि[3]नेयोन्मुखीकरणमत्र परिहारः, शान्तशृङ्गारयोर्नैरन्तर्यस्याभावात् । नापि काव्यशोभाकरणम्, रसान्तरादनु[4]प्रासमात्राद्वा तथाभावात् ॥

सत्यमिति । अत्र शृङ्गारविभावप्रतिपादकं पूर्वार्धं बाध्यत्वेनैवोक्तं न तु शिष्यौन्मुख्यार्थं काव्यशोभार्थं वा । ध्वनिकारस्तु शिष्यौन्मुख्यार्थं काव्यशोभार्थत्वाभ्यां शान्तशृङ्गारयोर्विरोधं परिहरति, शृङ्गाराद्धि काव्यं चारु स्यात्, मृदुमतयश्च नृपाद्याझडित्यभिमुखीभूताः शान्ते सुखं स्थाप्यन्ते, तदसत् अनयोर्नैरन्तर्यस्य भरतेन निषिद्धत्वात् । प्रसिद्धेति । प्रसिद्धेन तेनाधिकत्वाख्येन गुणेन योपमानता तयोपात्तमस्थिरत्वं कर्तृ शान्तं पुष्णाति । यद्वा प्रसिद्धः आविक्याख्यो गुणो यस्य, प्रस्तावादपाङ्गभङ्गस्य स तथ स उपमानं यस्य यत्र वा, तत् प्रसिद्धतद्गुणोपमानं, तस्य भावस्तत्ता, तयोपात्तं प्रस्तावाज्जीवितं (?) द्वितीयार्थं वा कर्तृ । तदङ्गेति । शृङ्गाराङ्गनाम् । रसान्तरादिति । अत्रोक्तशान्ताख्यरसात् । मात्राद्वेति । मत्ताङ्गनेत्यादिरूपात् । तथेति । गुंफशोभाभावादित्यर्थः ।

[1] प्रसिद्धतद्गुणोपमानतया इति सङ्केतानुसारी पाठः [2] त्तं, सच्छान्त. [3] विनयो. [4] प्रासाद्वा.

आश्रयैक्ये विरुद्धो यस्स कार्यो भिन्नसंश्रयः ।
रसान्तरेणान्तरितो नैरन्तर्येण यो रसः ॥ ६४ ॥

वीरभयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः । शान्तशृङ्गारयोस्तु नैरन्तर्येण विरोध इति रसान्तरमन्तरे कार्यम् । यथा नागानन्दे शान्तस्य जीमूतवाहनस्य ‘ अहो गीतमहो वादित्रं ’ इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः । न परं प्रबन्धे, यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्तते । यथा—

[1]भूरेणुदिग्धान्नवपारिजातमाला[2]रजोवासितबाहुमध्याः ।
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तराळाः ॥ ३३३ ॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकैस्सुगन्धिभिः कल्पलतादुकूलैः॥ ३३४
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानान् ललनाङ्गुलीभिर्वीरास्स्वदेहान् पतितानपश्यन् ॥ ३३५ ॥

---

प्रतिपक्षेति । अन्यस्थानगत्वेनेति तात्पर्यं न तु प्रतिपक्षो भीरुरिति निश्चयः क्वापि । प्रतिपक्षस्य धीरोद्धतस्यापि रावणादेः प्रसिद्धत्वात् । रसान्तरमिति । अविरुद्धमिति शेषः ।

---

[1] रेणु दा घान्न.  [2] रजो रञ्जित.

अत्र बीभत्सशृङ्गारयोरन्तर्वीररसो निवेशितः ।

**स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः।**
**अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥६५॥**

यथा—

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ३३६ ॥

एतद्भूरिश्रवससमरभुवि पतितं हस्तमालोक्य तद्वधूरभिदधौ ।
अत्र पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं पोषयति ।

---

**निवेशित इति** । एतेन विरोधो निवृत्तः । "वीराः स्वदेहान्" इत्यादिनोत्साहाद्यवगत्या कर्तृकर्मणोः समस्तवाक्यार्थानुयायितया प्रतीतिरिति मध्यपाठाभावेऽपि सुतरां वीरस्य व्यवधायकता । स्वदेहानित्यनेनैकत्वाभिमानादाश्रयैक्यम् । अन्यथा भिन्नविषयत्वे को विरोधः इत्यर्थः । नन्वत्र रतिजुगुप्से एव वीरं प्रति संचारीभूते लक्ष्येते न तु शृङ्गारबीभत्सौ रसौ । सत्यं । तथाऽपि प्रकृतोदाहरणता युज्यत इति रतिजुगुप्सयोरपि हि न विरोधः ।

**अयमिति** । अत्र स्मर्यमाणः शृङ्गारः करुणस्य प्रकृतस्य विरुद्धोऽपि पोषकः । यतस्स्वभावसुभगं वस्तु शोच्यतां गतं प्रागवस्थाभाविभिर्विलासैः स्मर्यमाणैर्गाढं शोकं जनयति ।

[1]दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतश्शरीरे।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥ ३३७॥

अत्र कामुकस्य दन्तक्षतादीनि यथा [2]चमत्कारीणि तथा जिनस्य। यथा वा परश्शृङ्गारी तदवलोकनात्सस्पृहः तद्वदेतद्दृशो मुनय इति साम्यविवक्षा।

दन्तेति। स्वडिम्भभक्षणप्रवृत्तसिंहिकायाः स्वाङ्गं ददतो बुद्धस्य केनापि चाटुः क्रियते। पुलकोद्भेदः परार्थसम्पादनसुखाभ्याम्। रक्तमसृगनुरक्तं च। मुनयश्चोद्बोधितस्मरावेशाश्चेति विरोधः। जातस्पृहैरिति च। वयमप्येवं कदा कृपालवो भविष्याम इति भावः।

पर इति। श्लोकोक्तकामिव्यतिरिक्तः। तद्वेति। कामिदन्तक्षतेक्षणात्। एतद्दृश इति। एतेषां जिनदन्तक्षतादीनां दर्शनेन। साम्येति। अयं भावः यथा कोऽपि मनोरथशताप्तप्रेयसीरतकाले जातपुलकस्तथात्वं परार्थकारणाय स्वाङ्गदान इति विरुद्धेन शृङ्गारेण शान्तः पोष्यत एव। यत्र तु नैवं तत्र दोष एव यथा—'राममन्मथशरेण' इति। अत्र प्रकृतस्य करुणस्य विरुद्धः शृङ्गारो न पोषकः इति साम्येऽपि दुष्टत्वम्। द्वौ विरुद्धौ अङ्गित्वे दुष्टौ नाङ्गतायाम्। सा चाङ्गता सहजारोपजीवा। तत्र येषां सहजा तेषां तावदुक्तावविरोध एव, यथा—

[1] दन्तैःक्ष. [2] चमत्कारणानि.

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैस्सदर्भाः स्थलीः
पादैः पातित[1]यावकैरिव पतद्बाष्पाम्बुधौताननाः ।
[2]भीता भर्तृकरावलम्बित[3]करास्त्वच्छत्रुनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥ ३३८ ॥

अत्र चाटुके राजविषया रतिर्या प्रतीयते तत्र करुण इव शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः ।

---

विप्रलम्भे तदङ्गानां । ते हि निरपेक्षभावतया सापेक्षभावविरोधीन्यपि करुणे सर्वथाऽङ्गत्वेन दृष्टाः । यथा—'भ्रमिमरतिमलसे' त्यादि । आरोपिताङ्गता यथा—'लीलापद्मकशावातैः कान्ताभिकोऽपि हन्यते' इत्यत्र हन्यत इति । रौद्रानुभावानां रूपकबलादारोपितानां चौरवदित्यनुक्तेस्तदनिर्वाहादेवाङ्गत्वम् । इयं चान्याङ्गता । यदाधिकारिकत्वात्प्रधान एकस्मिन् काव्यार्थे रसौ भावौ वा मिथो विरुद्धावङ्गतां यातस्तत्रापि न दोषो यथा—'क्रामन्त्य' इति ।

न विरोध इति । पराङ्गत्वेऽपि कथं विरोधिनोरविरोध इति चेदुच्यते । विधौ विरुद्धसमावेशो दुष्टो नानुवादे यथैहीत्यादि । नह्यत्र विधिस्तदैव तदेव कुरु माकार्षीरितिवदेकदा प्राधान्यरूप अपितन्याङ्गतानुरूपोनुवादः । अन्याङ्गता च क्रीडनापेक्षया, यदैव ह्येहीत्यादि ब्रूयात् तदैव यदि गच्छेत्यादि ब्रूयात्तदा विरोधस्स्यात् । इदं तत्वं । सामग्रीविशेषगत्वेन भावानां विरोधाविरोधौ न

---

1 यावकैरिव ग. 2 भीत्या. 3 करा स्त्वद्वैरिना.

यथा—

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
[1]एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ ३२९ ॥

अत्र एहीति क्रीडन्ति, गच्छेति क्रीडन्ति, इति [2]क्रीडनापेक्षयोरागमनगमनयोर्न विरोधः ।

क्षिप्तो हस्तावलग्नः [3]प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितस्संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभि[4]स्साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधस्स दहतु दुरितं शाम्भवो वश्शराग्निः ॥

इत्यत्र त्रिपुरारिप्रभावातिशयस्य करुणोऽङ्गम्। [5]तस्य तु शृङ्गारः । तथाऽपि न करुणे विश्रान्तिरिति तस्याङ्गतैव ।

---

स्वभावेन, भिन्नदेशयोः शीतोष्णयोरपि विरोधाभावात् । न च रसेषु विध्यनुवादौ न स्यातामिति वाच्यम् । तेषां वाक्यार्थत्वेनाभ्युपगमात् ॥ वाक्यार्थस्य च वाच्यस्य यौ विध्यनुवादौ तौ तदाक्षिप्तानां रसानामपि भवतः । अनूद्यमानविभावाद्याक्षिप्तत्वाद्रसानामनूद्यमानतेति यावत् । **प्रभावातिशयस्येति** । रतेः । **विश्रान्तिरिति** । **तस्येति** । तस्य करुणस्य तत्पोषकशृङ्गारस्यापि रतावेव विश्रान्तिरित्यर्थः ।

---

[1] एवमाशाशतग्र. [2] क्रीडापेक्षयोर्गमनागमनयो. [3] प्रसभमभिहितो. [4] सास्रैन. [5] तस्यश्रृ.

अथवा प्राग्यथा कामुक आचरति स्म, तथा शराग्नीरिति शृङ्गारपोषितेन करुणेन मुख्य एवार्थ उपोद्बल्यते। उक्तं हि–

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥

इति। प्राक्प्रतिपादितरूपस्य रसस्य रसान्तरेण न विरोधः, नाप्यङ्गाङ्गिभावो भवतीति रसशब्देनात्र तत्स्थायिभाव उपलक्ष्यते ॥

इति श्री काव्यप्रकाशे दोषदर्शनो नाम सप्तम उल्लासः.

---

अथवेति। पूर्वस्मिन् पक्षे करुणं पुष्यन्नपि शृङ्गारः प्रभावातिशयेऽङ्गभावगमनादविरोधी प्रोक्तः। अधुना तु स शृङ्गारः करुणस्यैवाङ्गतां गतो न विरोधीति। तथाहि—करग्रहणासहनादिः नार्याः शृङ्गारवृत्तान्तः स्मर्यमाणः सम्प्रति विध्वस्ततया शोकविभावतां प्रकृष्टं यातीति वाक्यार्थीभूतः करुणः।

विरुद्धेनापि शृङ्गारेण कृतसंस्कारो गुणः-करुणो रसः, प्रधानं-प्रभावातिशयं। तथेति। कृतसंस्कारः इत्यर्थः। प्रधानस्य भूयसे उपकाराय स्यादिति भावः। रसस्येति। करुणस्य। रसान्तरेणेति। शृङ्गारेण। रसशब्देनेति। "अङ्गिन्यङ्गत्वमाप्तौ" इत्यत्राङ्गिनि रस इत्युक्तं, तत्र रसशब्देन स्थायी रत्यादिर्वाच्यः तथैव चाङ्गितयोदाहृतः, तथाऽङ्गत्वमाप्तौ रसौ न दुष्टावित्युक्तं, ततोऽप्राधान्यादेव शृङ्गारकरुणयोः स्थायिनौ रतिशोकाख्यौ ज्ञेयौ।

यत्रापि समप्राधान्येनानेकस्य भावस्य न्यासो यथा—

"एकत्तो रूअइ पिआ अन्नत्तो समरतूरनिग्घोसो ।
नेहेण रणरसेण य भडस्स दोलाइयं हियमम् ।"

इत्यादौ रत्युत्साहयोः "मात्सर्यमुत्सार्य,, त्यादौ रतिशमयोः । अत्राप्युच्यते न हि द्वयोः समप्रधानयोर्मिथोऽनुपकारकयोः एकवाक्यत्वं युज्यते । तस्मादेकत्र भटस्येत्युक्तिबलाद्वीर एव विश्रान्तिः । न हि रणतूर्यनादे भटाः समरालसाः स्युः । अन्यत्र तु चिरन्तनरतिवासनाया हेयत्वेनोपादानाच्छमैकपरत्वं, आर्यास्समर्यादमित्युक्तिबलात् । एवमन्यत्रापि ज्ञेयम् ॥

सङ्केतवर्त्मनाऽनेन सम्यग्घटनत*त्परा: ॥
मदयन्ति विदग्धानां मनांसि सुमनोगिरः ॥

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाश
सङ्केते सप्तमोल्लाससङ्केतः.

---

* सम्यग्घटनतः परा इति स्वरसं स्यात्.

# अथाष्टमोल्लासः.

एवं दोषानुक्त्वा, गुणालङ्कार[1]विवेकमाह—

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥ ६६ ॥**

आत्मन [2]एव हि यथा शौर्यादयो नाकारस्य, तथा रसस्यैव माधुर्यादयो गुणा न वर्णानाम् । क्वचित्तु शौर्यादिसमुचितस्याकारमहत्त्वादेर्दर्शनादाकार एवास्य शूर इत्यादेर्व्यवहारादन्यत्राशूरेऽपि विततात्कृतित्वमात्रेण शूर इति, क्वापि शूरेऽपि मूर्तिलाघवमात्रेणाशूर इति, अविश्रान्तप्रतीतयो यथा व्यवहरन्ति, तद्व[3]न्मधुरादिव्यञ्जकसुकुमारादिवर्णानां, मधुरादि-

---

अथ अष्टमोल्लासः

अर्हम् । ये रसस्येति । रसोऽङ्गी वाच्यवाचकावङ्गम् । अचलेति । एतेन काव्ये गुणानामवश्यंभावः । तथाहि—अनलंकारोऽपि वाक् सगुणा रोचते, यथा—"यः कौमारे" त्यादौ । निर्गुणा तु सालंकाराऽपि न रोचते यथा—

स्तनकर्परपृष्ठस्था वार्जैनीच्छद्मण्डकाः ।
वियोगाग्न्यूष्मणा पक्वाः कन्दुकिन्येव ते स्त्रिया ।

**न वर्णानामिति** । उत्कर्षहेतव इति शेषः । रसस्यैव यन्माधुर्यादि तत्कथं मधुरौजस्विप्रसन्ना वर्णा इति प्रतीतिरित्याह—**क्वचित्त्विति** । **शौर्यादीति** । शौर्यादिसंयुक्तस्य । **आकार एवेति** । यथा शौर्यमुपचारात् तद्व्यञ्जके काये व्यवह्रियते, तथा वर्णानां मधुरादिरसव्यञ्जकानां माधुर्यादीति भावः । **मधुरादीति** । शृंगारा-

---

1 विवेकमाह. 2 एव शौर्यादयो यथा नाऽकारस्य. 3 मधुरादिरसव्यञ्जक.

व्यवहारप्रवृत्तेरमधुरादिरसाङ्गानां वर्णानां सौकुमार्यादिमात्रेण, माधुर्यादि, मधुरादिरसोपकरणानां तेषामसौकुमार्यादेरमाधुर्यादि, रसपर्यन्तविश्रान्तप्रतीतिवन्ध्या व्यवहरन्ति । अत एव माधुर्यादयो रसधर्माः [1]समुचितैर्वर्णैर्व्यज्यन्ते, न तु वर्णमात्राश्रयाः । यथैतेषां व्यञ्जकत्वम्, तथोदाहरिष्यते ।

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥ ६७॥

ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन, मुख्यं रसं संभविनमुपकुर्वन्ति ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽप्युपकारका हारादय इवालङ्काराः यत्र तु नास्ति रसस्तत्रोक्ति[2]वैचित्र्यमात्र[3]पर्यवसायिनः । क्वचित्तु सन्तमपि नोपकुर्वन्ति

दिर्मधुरो रसो वीरादिस्त्वमधुरः । सौकुमार्यादीति । माधुर्यादिविरहेऽपि गुम्फस्य मृदुत्वादिमात्रेण मधुर्यादि व्यवहरन्तीत्यर्थः । तेषामिति । वर्णानाम् । वन्ध्या इति । वामनाद्याः समुचितैरिति । योग्यत्वेनोक्तैः । नत्विति । रसाश्रया एव गुणाइत्यर्थः । एषामिति । वर्णानाम् ।

शरीरिणोपीऽति । आत्मनोऽपि । उक्तीति । शब्दार्थवैचित्र्य एव विश्रान्ताः । क्वचित्त्विति । जातुचिदित्यस्य व्याख्या ।

[1] समुचितवर्णैः. [2] वैचित्र्यपर्य. [3] पर्यवसिताः.

[1]यथाक्रममुदाहरणानि ।

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि! मृणालैरिति वदति दिवानिशं बाला ॥

इत्यादौ वाचकमुखेन ।

[2]मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी [3]निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर [4]इव गरीयानित इतो
न [5]मां त्रातुं तातः प्रभवति नचाम्बा न भवती ॥३४२॥

इत्यादौ वाच्यमुखेनालङ्कारौ रसमुपकुरुतः ।

चित्ते विहट्टदि ण [6]टुट्टदि सा गुणेसु
सज्जासु लोट्टदि विसट्टदि दिम्मुहेसु ।
बोलम्मि वट्टदि पवट्टदि कव्वबन्धे
झाणे ण टुट्टदि चिरं तरुणी तरट्टी ॥ ३४३ ॥

इत्यादौ वाचकमेव ।

---

अपेति । अत्रोद्दीपनविभावाः । वर्धिष्णुतया विद्वेष्यत्वेनोक्ताः ।

मन इति । मनोरोगः कामजः । भवती सखीत्यर्थः ।

रसमिति । एकत्र कोमलानुप्रासोऽन्यत्र तु मालोपमेति शब्दार्थालङ्कारौ विप्रलम्भरसमुत्कर्षयतः । रसाभावे तूक्तिवैचित्र्यविश्रान्तिदृष्टान्तः । षष्ठोल्लासोक्तत्वात्पुनर्नोक्तिः ।

चित्त इति । बहुट्ठदि निखाता भवति । खुट्टदि न न्यूनतामेति । विसट्टदि विकसति । तरट्टीप्रौढा ।

---

1 यथा अपसारय. 2 मनोरोग इति सङ्केतानुरोधी पाठः. 3 निर्धूमो ज्वलति। 4 इव बलीया. 5 मां तातस्त्रातुं. 6 टुट्टदि इति सङ्केतेपाठः.

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य [1]दयितासन्नं पुरस्सारसम् ।
[2]चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥३४७॥

इत्यादौ वाच्यमेव न तु रसम् । अत्र [3]बिसलता न जीवं रोद्धुं क्षमेति प्रकृताननुगुणोपमा । एष एव च गुणालङ्कारप्रविभागः । एवं च समवायवृत्त्या शौर्यादयः संयोगवृत्त्या हारादय इत्यस्तु गुणालङ्काराणां भेदः । ओजःप्रभृतीनामनुप्रासप्रभृतीनां चोभयेषामपि समवायवृत्त्या [4]स्थितिरिति गड्डुलिकाप्रवाहेणैषां भेद इत्यभिधानमसत् । यदप्युक्तं काव्यशोभायाः

मित्र इति । स्थानद्वयेऽप्यत्र क्रमात् परुषानुप्रासोपमाख्यावलङ्कारौ शब्दमर्थं चोपकुरुतो न प्रकृतं सन्तमपि विप्रलम्भरसं । रोद्धुं नेति । अतिसूक्ष्मत्वात् ज्जीवस्य ।

एष इति । योऽस्माकं मतः । भेद इति । एतेन शौर्यादिहारादिकल्पाः गुणालंकाराः । अभिधानमिति । शब्दार्थालङ्काराणां गुणवत्समवायेन स्थितिरिति भामहवृत्तौ भट्टोद्भटेन भणनमसत्, तथाहि—शृङ्गारादिरसे गुंफे प्राच्यस्यालङ्कारस्योत्थापने गुम्फस्य न दोषो नापि पोषः न किञ्चिद्वा स्थाप्यते तथाऽपि न दोषः । तत्रार्थालङ्कारस्योत्थापनेऽन्यस्य तादृशः स्थापने स्वोक्तं यथा-

सतामपि महाद्वेषः स्यादेकगुणजीविनाम् ।
वैमुख्यमेकमालाया यथा सुमनसां मिथः ॥

[1] दयितासक्तं. [2] चक्राङ्केन. [3] लता जीवं रोद्धुं न क्षमेति. [4] स्थितिर्गड्डुलिका.

**कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्कारा इति तदपि न युक्तम् । यतः किं समस्तैर्गुणैः काव्यव्यवहारः उत कतिपयैः ? यदि समस्तैः तत्कथमसमग्रगुणा गौडी पाञ्चाली च रीतिः काव्यस्यात्मा ? अथ कतिपयैः ततः ॥**

**आदावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यःप्रोद्यन्नुल्लसत्येष धूमः ।**

**इत्यादावोजः प्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्तिः ।**

**स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनि ! ।**

**अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥ ३४८ ॥**

**इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ [1]काव्यव्यवहारस्य प्रवर्तकौ ।**

यथाच——न किं सुमनसां मिथः ।

शब्दालङ्कारस्योत्थापने स्वोक्तं यथा ।

दुष्टस्सुतोपि निर्वास्यः स्वामिना नयगामिना ।

ग्रहपङ्क्तेर्ग्रहाधीशः शनिमन्त्ये न्यवीविशत् ॥

यथाच——विभुना नयशालिना ।

एवमलङ्कारान्तरेष्वपि ज्ञेयम् ।

गुणानां तु नैषा युक्तिः तत्रैव गुंफे माधुर्यमुत्सार्यौजोन्यासे दोषप्रसङ्गात । **असमस्तेति** । वैदर्भी तु सर्वगुणा । वामनमतमदः ।

**स्वर्गेति** । अत्र स्फुटस्य कस्यापि गुणस्यानुपलम्भेऽपि काव्यत्वम् । स्वर्गप्राप्तिरूपहेतुसामग्र्ये सत्यपि दिव्यदेहरूपकार्यस्यानुक्तेः विशेषोक्तिः । पूर्वदेहत्यागाभावेऽपि स्वर्गाप्तिफलस्योक्तेर्विभावनापि । न्यक्करोतीति व्यतिरेकः ।

[1] व्यवहारप्रवर्तकौ.

इदानीं गुणानां भेदमाह ।

**माधुर्यौजः प्रसादाख्याः त्रयस्ते न पुनर्दश ॥**

एषां क्रमेण लक्षणमाह ।

**आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥ ६८ ॥**

शृङ्गारे (अर्थात्) संभोगे । द्रुतिः गलितत्वमिव । श्रव्यत्वं पुनरोजः प्रसादयोरपि ।

---

शृङ्गार इति । शृङ्गाराङ्गे हास्याद्भुतादावपि । यद्यपि हास्याद्भुतयोराश्रितत्ववृत्तिविस्तारहेतुतयौजोऽप्यस्ति । तथाऽपि शृङ्गाराङ्गतया प्रकृष्टं माधुर्यमेव तत्र प्रतीयते । द्रुतिरिति । आर्द्रतेति यावत् । चित्तस्य द्रुतिहेतुराह्लादकत्वमातिव्यापकत्वाव्यापकत्वाभावाल्लक्षणं सत् । बहुधा श्रुतमपि यदनुद्वेजकं वचस्तन्मधुरमिति भरतोक्तं तु लक्षणं प्रियजनरूक्षाक्षरवचनेऽपि तुल्यत्वादतिव्यापकम् ।

पृथक्पदत्वं तु माधुर्यं वामनोक्तमव्यापकं, समासेऽपि माधुर्यस्य दृष्टेः । "अवृत्तिर्मध्यवृत्तिर्वे" त्यग्रे भणनात्परमेतदपि भङ्ग्योपात्तम् । दण्डिमते तु रसवत्काव्यं मधुरं । श्रुतिवर्णानुप्रासाभ्यां वाग्रसः अग्राम्यार्थता तु वस्तुरसः, इत्थं रसो द्वेधा । अनुप्रासस्यालङ्कारत्वादग्राम्यार्थतायास्तु दोषाभावत्वान्न गुणत्वं । वामनोक्तोऽर्थगुणस्तु माधुर्यमग्रे चर्चिष्यते । अर्थादिति । तत्र श्लोके विप्रलम्भभणनरूपसामर्थ्यात् । श्रव्यत्वमिति । ओजःप्रसादयोरपि श्रव्यत्वात् 'श्रव्यं नातिसमस्तार्थशब्दं मधुरमिष्यते' इति माधुर्यलक्षणं भामहोक्तमतिव्यापकत्वेन निरस्तम् ।

**करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।**

अत्यन्तद्रुतिहेतुत्वात् ।

**दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥६९॥**

चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः ।

**बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च ।**

वीराद्बीभत्से ततोऽपि रौद्रे सातिशयमोजः ।

**करुण** इति । अत्र क्रमेणेत्यभणनात्सम्भोगात् करुणे ततो विप्रलम्भे ततोऽपि शान्ते सातिशयं माधुर्यं न, किन्तु सम्भोगात्करुणादौ समतयाऽधिकमित्यर्थः । अन्ये तु क्रमेणेति व्याख्यान्ति । **वीरेति** । वीररसे प्रधाना स्थितिर्यस्य । यद्वा स्थानं स्थितं तद्विद्यते यस्य तत् स्थिति, वीररसे स्थिति स्थितिमत्तत्तथा । **विस्तारेति** । विस्तारो विकासः तद्रूपदीप्तत्वमोजसो लक्षणं सत्, न तु हीनमवगीतं वा वस्तु शब्दार्थसंपदा यदुत्कृष्यते तदोज इति भरतोक्तम्* । अहीनानवगीतस्यापकर्षणेनौजसोऽपि गुणस्य प्राप्तेः । द्वयोरुदाहृतिः स्वा यथा—

लघुभ्यो यादृशी कीर्तिर्महद्भ्यस्त्याद्न तादृशी ।
अरण्यं समृगं स्थानं नगरं कीटकाश्रितम् ॥

साहित्यदिगेषा यत्किमपि कदाचित्कथञ्चित् वर्ण्यते तत्कथमिवायं गुणः । †दण्ड्युक्तं समासदैर्घ्यमोज इत्यपि न रीतित्रयेप्योजस स्साधारणत्वात् गौडीयानिर्देशो न युक्तिमानिति वामनमङ्गलौ । तस्माद्गाढत्वमोज इत्यपि न शुद्धम् बन्धगाढत्वं प्रत्युतौजो हानिहेतुः, यथा

दैन्त्येन्द्रं द्राग्विदद्रे हृत्पङ्कैर्बाष्परौद्रैः ।
स्पष्टमात्रं वक्रक्रूरैः नखाग्रकैः ।

---

* समासवद्भिर्विविधैर्विचित्रैश्च पदैर्युम् । सा? तुस्वरैरुदारैश्च तदोजः परिकीर्त्यते । इति भरतनाट्यशास्त्रे दृश्यते.

† ओजस्समासभूयस्त्वमेतद्गद्यस्य जीवितम् । पद्येप्यदाक्षिणात्यानामिदमेकं परायणं । इति दण्डिनः काव्यादर्शे. गाढबन्धत्वमोजः इति वामनसूत्रम्.

**शुष्केन्धनाग्निवत्स्वच्छजलवत्सहसैव यः॥७०॥**
**व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः।**

**अन्यदिति व्याप्यमिह चित्तम्। सर्वत्रेति सर्वेषु रसेषु**

---

वामनोक्तश्चार्थगुणो द्विविधोऽप्यग्रे चर्चिष्यते।
वीरबीभत्सान्तः पाठाद्भयानकेऽप्योज इत्यके।

शुष्केति। शुष्केन्धनस्याग्निः स यथा, तथा यश्चित्तं व्याप्नोति स प्रसादः किंभूतः शुष्केन्धनाग्निवदित्यदितुल्यार्थे वतिः। शुष्केन्धनस्याग्निः स्वच्छस्य वस्त्रादेर्जलं यथा शीघ्रं व्याप्तिकृत्तथा चित्तस्य प्रसाद इत्यर्थः। विभक्तवाच्यवाचकयोगादनुक्तयोरपि शब्दार्थयोः प्रतिपत्तिः प्रसाद इति तु भरतः। प्रसिद्धार्थपदतेति भावः। पदपूर्विका तदर्थावगतिरिति शब्दार्थयोर्ग्रहणम्। सेयं विशेणाधारविशेष्याणामुक्तिः। वामनोक्ते शैथिल्यं प्रसादः ओजोऽन्यत्वयाद्दोषोयं, तर्हि गाढत्वसंप्लुतं शैथिल्यं प्रसाद इति चेन्न। मिथोविरोधिगाढत्वशैथिल्ययोरेकत्वसंप्लवासिद्धेः।

"करुणप्रेक्षणीयेषु संप्लवः सुखदुःखयोः।
यथाऽनुभवतः सिद्धस्तथैवौजः प्रसादयोः"

इत्युक्त्या संप्लवः सिद्ध्यतीति चेत्तर्ह्योजस्यन्तर्भाव इति वक्ष्यते। वस्तुवृत्त्या तु सभ्यानां नाट्ये करुणवासितानां प्राक् दुःखं नेपथ्यादिर्दर्शनेन च पश्चात्सुखमिति क्रमात् सुखदुःखानुभूतिः। ओजः प्रसादयोः पुनः सममनुभवप्रातिज्ञेति दृष्टान्तासिद्धिः। यद्वा सर्वरस-

सर्वासु रचनासु च ।

**गुणवृत्त्या पुनस्तेषां वृत्तिश्शब्दार्थयोर्मता ॥७१**

गुणवृत्त्या उपचारेण । तेषां गुणानां आकारे शौर्यस्येव ।

कुतस्त्रय एव न दशेत्याह ।

**केचिदन्तर्भवन्त्येषु दोषत्यागात्परे श्रिताः ।**

**अन्ये भजन्ति दोषत्वं कुत्र चिन्न ततो दश ॥७२**

बहूनामपि पदानां एकपदवद्भासनात्मा यः श्लेषः, यश्चारोहावरोहक्रमरूपस्समाधिः, या च विकटत्व लक्षणोदा-

---

प्रतीतिरानन्दरूपैवेति दृष्टान्तासङ्गतिः । अर्थगुणस्तु प्रसादोऽग्रे चर्चिष्यते ॥

गुणेति ॥ मुख्यया वृत्त्या गुणा रसे, शौर्यमिवात्मनीत्यर्थः ॥

एष्विति ॥ रसध्वनिगुणालङ्कारेषु ॥ 'दोषेति ॥ पूर्वोक्तदोषत्यागात्केचिल्लब्धाः । परोक्तशेषशब्दार्थगुणानां क्रमेणान्तर्भावस्वीकारदोषत्वान्याह—बहूनामित्यादि ॥ 'स्वभावस्पष्टं विचारगहनं वचः श्लिष्ट' मिति भरतः । विचारगहनं गंभीरार्थम् । अभिधानाभिधेयव्यवहारे वैदग्धीयं, न च गुम्फधर्मः । गुम्फधर्मा हि गुणाः । तस्मात् 'मसृणत्व श्लेषः यस्मिन् सति बहून्यपि पदान्येकपदवद्भान्ती' ति वामनः, यथा—

"अस्त्युत्तरस्यां दिशि देवतात्मा"

इति मसृणपदं* पुरंदन्तुरत्वे हि रीतिवैशसोपनिपातः । तं चान्यतरनिर्वाहे, (?) निषेवन्ते तस्मात् "अशिथिलं श्लिष्टम् इति दण्डी । स्वं

---

* अन्यतररसनिर्वाह इति काव्यानुशासन व्याख्याने मसृणपददन्तुरत्वे इतिस्यात्.

यथा—

अपकारिण्यपि प्रायः स्वच्छास्स्युरुपकारिणः ।
मारकेभ्योऽपि कल्याणं रसराजः प्रयच्छति ॥

ओज एवेदम् । गौडगुम्फादर्शिनो वा मतामिदम् । ते हि शिथिलप्रियाः । एवं यथा— ‘

नीचा स्वशीलं मुञ्चन्ति नोपकारापकारयोः ।
आरटन्त्येव करभा भारारोहावरोहयोः ॥

एकपदवद्भान्तीत्युक्तौ वस्तुवृत्त्या तु पृथक्पदत्वमेव सत्यमिति माधुर्यमेवेदम् । "अर्थस्य गुणान्तरसमाधानात्समाधिः" इति भरतः । समाधानमारोपः यथा—

कीर्तिः पल्लवितेवासीद्गुणैः कुन्देन्दुसुन्दरि ! ॥ इति

सोऽयमतिशयोक्तिविशेषः । तस्मात् "आरोहावरोहक्रमः समाधिः" इति वामनः । तदिदं गुरुलघुवर्णसंचययोः मिथोऽन्तरणमिति दण्डिभोजौ । तस्मादन्यधर्मस्यान्यत्र समाधानात्समाधिः । यथा—"मुखं विकसितस्मितम्" इत्यादि । लक्षणेयं न गुण इति । एवमेतत्वोजः । "बहुभिस्सूक्ष्मैश्च विशेषैः समेतमुदारम्" इति भरतः । यथा "प्रथममरुणच्छायः" इत्यादि । उल्लेखवानसावर्थो न गुणस्तस्माद्विकटत्वमुदारता । यस्मिन् सति नृत्यन्तीव पदानि इति प्रतीतिरिति वामनः । एवं यथा ।

यद्यशःकैरवारामे वैरिणामपकीर्तयः ।
भ्रमद्भृङ्गाङ्गनाभङ्गीमङ्गीकुर्वन्ति हेलया ।

**रता, यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः तेषामोजस्यन्तर्भावः। पृथक्पदत्वरूपं माधुर्यं भङ्ग्या साक्षादुपात्तम्। प्रसादेनार्थव्यक्तिर्गृहीता। मार्गाभेदरूपा समता क्वचिद्दोषः तथाहि—**

मनागमसृणानुप्रासप्रभावोऽयं न गुणः।

स्वमते त्वोजः "यस्मिन्नतथास्थितोऽपि तथास्थित एवार्थः प्रतिभाति सोऽर्थव्यक्तिर्गुण इति भरतः।

स्वोक्तं यथा—

"तदम्भः किं वाच्यं तनयिषु जगज्जीवनकरं
श्रियः क्रीडागारं जयति जलजं यस्य तनयः।
कथं वा निर्वाच्यं सरसिजमिदं यस्य भुवन—
त्रयीस्रष्टा स्रष्टा समजनि सुतः सर्वमहितः॥

प्रसादान्न भेदोऽस्येति वामनीयाः। तस्माद्यत्र प्रागिवार्थस्यावगतिः पश्चादिव वाचां साऽर्थव्यक्तिः। यथा—"वागर्थाविव संपृक्तौ" इति। सोऽयमुक्त्यन्तरोक्तः प्रसाद एवेति', दण्डी। तस्मादनेयार्थत्वमर्थस्यार्थव्यक्तिः। दोषाभावोऽयं न गुणः "परस्परविभूषणालङ्कारग्रामः समम् इति भरतः। भिन्नाधारा गुणालङ्काराः कथमन्योन्यं भूषयेयुरिति दण्डी। श्लेषयमकचित्राणि भूरिरनुप्रासश्च प्रत्युत गुणान् विगृह्णन्ति। तस्माद्बन्धेष्वविषमं समम्। बन्धश्च प्रौढमृदुमध्यवर्णारब्धत्वात्ताद्दशास्त्रयः। अत्र दृष्टान्ताः सुलभत्वान्नोच्यन्ते। एवं पश्चादग्रे च ज्ञेयम्। तदिदं वृत्तिष्वन्तर्भवतीति। तस्मादारब्धरीतिनिर्वाहः सममिति वामनीया इत्यपि दूष्यते। **मार्गाभेदेति। क्वचिदिति।** कुत्रचिदित्यस्य व्याख्येयम्।

**'मातङ्गाः किमु वल्गितै' रित्यादौ सिंहाभिधाने मसृणमार्गत्यागो गुणः। कष्टत्वग्राम्यत्वयोर्दुष्टत्वाभिधानात्तन्निराकरणेनापारुष्य-रूपं सौकुमार्यम्, औज्ज्वल्य[1]रूपा कान्तिश्च स्वीकृता। एवं न दश शब्दगुणाः।**

---

तस्मात्समता न गुणः। **अपारुष्येति**। "सुखशब्दार्थं सुकुमारम्" इति भरतः। सुखशब्दमेवेति तु वामनः। तदिदं माधुर्यं कष्टत्व-दोषाभावो वा। **कान्तिरिति**। "श्रोत्रमनःप्रीतिकृत् कान्तिः" इति भरतः। माधुर्यमेवेदं, 'तस्मादौज्ज्वल्यं कान्तिरि' ति वामनः। यस्यां सत्यां नव्या गुम्भच्छायेयमिति प्रतीतिः। स्त्रं यथा—

अस्तावनीं विगलितोष्मणि संसृतेऽर्के
दिक्कामिनीषु रुदतीषु विहङ्गनादैः॥
सौरभ्यनीलमधुपालिमिषेण राज्ञा
मृत्पिण्डमुद्रितमुखा इव पद्मकोशैः॥

ओजोप्यौज्ज्वल्यतस्तर्हि कान्तिः, तस्माल्लोकसीमानतिक्रमः कान्ति रिति दण्डि। सा चोपचारात् प्रशंसनाच्च। क्रमेणोदा—

एते वयममी दाराः कन्येयं कुलजीवितम्।
ब्रूत येनात्र वः कार्यं अनास्था बाह्यवस्तुषु॥
तदास्यमनु भृङ्गाळी गन्धलोभार्द्रमन्त्यभात्॥
ध्रुवं भुवं गतस्येन्दोः भ्रान्त्या सेनेव तामसी।

स्वमिदम्। एवं चेत्तर्हि लोकसीमातिक्रमोऽकान्तिस्स्यात्।

---

[1]रूपा च क न्तिः स्वी.

पदार्थे वाक्य[1]रचनं वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥

इति या प्रौढिः ओजः इत्युक्तं तद्वैचित्र्यमात्रं न गुणः । तदभावेऽपि काव्यव्यवहारप्रवृत्तेः । अपुष्टार्थत्वाधिकपदत्वानवी[2]कृतत्वामङ्गलरूपाश्लीलग्राम्याणां [3]निराकरणेन च साभि

---

पदार्थ इति । पदार्थे वाच्ये वाक्योक्तिर्यथा—चन्द्रपदे वाच्येऽत्रिनयनसमुत्थं ज्योतिरित्युच्यते ।

वाक्यार्थे पदोक्तिर्यथा—दिव्यैषा न स्यात् किन्तु मानुषीति वाच्ये निमिषतीत्युक्तिः ।

वाक्यार्थव्यासो यथा—

"सुखं क्वचित्क्वचिद्दुखं सुखदुःखं क्वचित्पुनः ॥
क्वचिन्न दुःखं न सुखमिति चित्रा भवस्थितिः" ॥

स्वमिदम् ।

तस्यैव समासो यथा—

"ते हिमालयमामन्त्र्य" इति । साभिप्रायत्वेति । वामनोक्तोऽयं द्वितीयो भेदः । न स्वस्य । जडत्वान्नाभिप्रायः । वक्तृश्रोत्रोः स इति चेत्, तद्गतोऽर्थस्य गुण इति कथम् । अथ वस्त्वन्तराक्षेपकत्वमेव तस्य गुण इति ब्रूषे, तद्वस्त्वन्तरमाक्षेप्यं वक्त्रभिप्रायरूपम् । एवमाक्षेपकत्वमपि कविव्यापारादेव, तथा तथा विनिवेशप्रकारयोगे तथा भावात् । अत एव प्रौढिर्वस्तुतो वक्तृगताऽर्थेषूपचर्यते ।

---

[1] रचना वाक्यार्थे, [2] च॥ व्याससमासौ चेति या [3] कृतामं, [4] निराकरणे च.

प्रायत्वरूपमोजः, अर्थवैमल्यात्मा प्रसादः उक्तिवैचित्र्यरूपं माधुर्यं, अपारुष्यरूपं सौकुमार्यम्, [1]अग्राम्यत्वरूपोदारता च स्वीकृतानि । अभिधास्यमानस्वभावोक्त्यलङ्कारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपार्थव्यक्तिः दीप्त[2]रसत्वरूपा कान्तिश्च स्वीकृते । क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा [3]श्लेषोपि विचित्रत्वमात्रम् । अवैषम्यरूपा

---

अर्थेति । प्रयोजकपदोक्तिर्वैमल्यम् । उक्तीति । नवीकृतत्वे ह्युक्तयो विचित्रा स्युः । अपारुष्येति । अत्रार्थगतमपारुष्यं यशश्शेष इति । यद्वोक्तिविशेषोऽसौ पर्यायोक्तम् । उदारतेति । यथा—"त्वमेवं सौन्दर्या स च रुचिरताया" इत्यादि । दीप्तेति । वामनमतमिदम् । यथा—"प्रियान् *सोऽयमपाकृतः" इत्यादि । रौद्राद्याः दीप्ता रसाः, शृङ्गाराद्याः न, ततस्तद्वैपरीत्यादकान्तिरपि स्यादित्यप्युत्तरम् । क्रमेति । नेत्रपिधानादेर्यः क्रमो यच्च कौटिल्यं तयोरनुल्बणत्वेनाग्राम्यत्वेनोपपत्त्या युक्ततया यद्योजनं योगस्तद्रूपा घटना या तदात्मा श्लेषः । यथा—

दृष्ट्वैकासनसङ्गते प्रियतमे पश्चादुपेत्यादरात्
एकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः †सपुलकस्वेदोल्लसन्मानसा-
मन्तर्हासलसत्कपोलपुलको धूर्तोऽपरां चुम्बति ।

---

1 अग्राम्यत्ववपुरुदार. 2 रसरूपा. 3 श्लेषोवि.

* सायमितिकाव्यानुशासने. † सपुलकप्रेमोल्लसन्मानसामिति, उद्योते पाठः.

**समता दोषाभावमात्रं न पुनर्गुणः। कःखल्वनुन्मत्तोऽन्यस्य[1] प्रस्तावेऽन्यदभिदध्यात्। अर्थस्यायोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत्कथं काव्यम्? इत्यर्थदृष्टिरूपस्समाधिरपि न गुणः।**

---

अत्रैका प्रिया अक्षिपिधानकेलिनाऽन्या चुम्बनेन रञ्जितेति संविधानकभवं वैचित्र्यमात्रमिदं न तु गुणः। कः खल्विति। एकमर्थं प्रक्रम्य तत्त्यागादन्येनार्थेन कस्सुधीर्निर्वाहं कुर्यादित्यर्थः। अर्थ दृष्टीति।

स्वं यथा—

सर्वथा नष्टनैकत्वं विपदे वृत्तशालिनाम्।
वारिहारिघटे पार्श्वे ताड्यते पश्य झल्लरी॥

तस्मात्समाधिः काव्यार्थ एव न तु गुणः।

"व्याजावलम्बनं समाधिः" इति तु भोजः यथा—

"दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा"॥

इत्यादि एतदपि वैचित्र्यमात्रम्।

अविच्छेदेन विच्छेदेनारोहावरोहाभ्यां ससौष्ठवतया स्थानस्यानुच्चनीचतया च पाठे क्रमेणौजःप्रसादमाधुर्यौदार्यसाम्यानीति गुणाः पञ्चेत्येके। तदसत्। न हि विषयविभागेन पाठनियमोऽस्ति, किमपि कदाचित्कथञ्चित् पठ्यत इति पाठानियमः कल्पित इति चेत्सोऽलीकत्वान्न गुणहेतुः॥

---

[1] अन्यप्रस्तावे.

**तेन नार्थगुणा [1]वाच्याः ।**

वाच्याः वक्तव्याः ।

**प्रोक्ताश्शब्द[2]गुणाश्च ये ।**

**वर्णास्समासो रचना तेषां व्यञ्जकतामिताः ॥**

के कस्येत्याह—

**मूर्ध्नि वर्गान्त्यगाः स्स्पर्शाः अटवर्गा रणौ लघू ।**
**अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥७४॥**

ट, ठ, ड, ढ, [3]वर्जिताः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः, तथा रेफणकारौ ह्रस्वान्तरिताविति वर्णाः, समासाभावो [4]मध्यमस्समासो वेति समासः, तथा माधुर्यवती पदान्तर[5]योगेण रचना माधुर्यस्य [6]व्यञ्जिका ।

---

स्रग्धरादावोजः इन्द्रवज्रादौ प्रसादः मन्दाक्रान्तादौ माधुर्यम्, शार्दूलादौ साम्यम्, विषमवृत्तेष्वौदार्यमिति छन्दोविशेषसाध्या गुणाः इत्येके। तदप्यसत् । स्रग्धराद्यादिष्वपि प्रतिगुणं यथोक्तवर्णरचनासमासाद्यभावे गुणान्तरप्राप्तेः । यथा—"जङ्घाकाण्डोरुनाल" इति । एवमिन्द्रवज्रादिष्वपि ज्ञेयम् ।

तेषामिति । ये माधुर्याद्या गुणाः शब्दगतत्वेनोक्ताः तेषां, वर्णाद्या व्यञ्जकतां गता इत्यर्थः ।

स्पर्शाः । वर्गवर्णाः । ह्रस्वेति । लघुत्वस्य स्वरधर्मत्वाद्रणयोर्व्यञ्जनयोः अनुपपत्तौ ह्रस्वान्तरितोपनिबन्धे लघुत्वं कल्प्यते । तथेति ।

---

1 वाच्याः प्रोक्ताः. 2 गुणास्तु ये. 3 वर्जाःकादयो.
4 मध्यमसमासो. 5 योगे रचना. 6 व्यञ्जिका तथोदाहरणं.

उदाहरणम्—

अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापर[1]चिन्तितानि ॥ ३४९ ॥

**योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः ।**
**टादिश्शषौ वृत्तिदैर्घ्यं गुम्भ उद्धत ओजसि ॥**

वर्गप्रथम[2]तृतीयाभ्यामन्त्ययोः द्वितीयचतुर्थयो रेफेण अध उपरि उभयत्र वा यस्य कस्य चित् तुल्ययोः तेन तस्यैव संबन्धः टवर्गोऽर्थात् णकारवर्जः शकारषकारौ [3]दीर्घसमासः विकटा संघटना ओजसः । उदाहरणम्—

मूर्ध्नामुद्वृत्तकृत्तेत्यादि ।

**श्रुतिमात्रेण [4]शब्दात्तु येनार्थप्रत्ययो भवेत् ।**
**साधारणस्समग्राणां स प्रसादो [5]गुणो मतः ॥७६॥**

समग्राणां [6]रसानां संघटनानां च । उदाहरणम्—

---

माधुर्यानुकूला, स्पर्शा इत्यादि व्यञ्जकतामिता इति सम्बन्धः ।

अनङ्गेति । एता भङ्ग्यः । स्वान्तानि योषाङ्गमेव ध्यायन्तीत्यर्थः । अत्र ङ्ग, न्त, ङ्गी, त्यादिरूपतया वर्णा मूर्ध्नि स्ववर्गान्त्यगाः समासरचने च शृङ्गारस्य व्यञ्जकाः । * तद्वितीयेति । च्छ. ट्ठ. त्थ. प्फ. इत्यादिरूपतया । अध इति । क्र. र्क. ऋत्यादिरूपतया । तुल्ययोरिति । क्क. च्च. द्द. त्त. त्यादिरूपतया ।

---

[1] चिन्तनानि. [2] तृतीयाभ्यां द्वितीय. [3] दीर्घस्समासः. [4] शब्दानां. [5] गुणः स्मृतः. [6] रसानां समासानां सं.

* द्वितीयचतुर्थयोरित्यस्य स्थाने तद्वितीयचतुर्थयोरिति पाठं मनुते.

परिम्लानं पीनस्तनजघनसङ्गादुभयतः
तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्यास्सन्तापं वदति बिसिनीपत्त्रशयनम् ॥ ३५० ॥

यद्यपि गुणपरतन्त्रास्सङ्घटनादयस्तथापि ।

**वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित् ।**
**रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥ ७७ ॥**

क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः । यथा—

मन्थायस्तार्णवाम्भःप्लुति[1]कुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटाऽन्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभि[2]स्ताडितोऽसौ ॥

[3]अत्र हि न वाच्यं क्रोधादिव्यञ्जकम् । [4]अभिनेयार्थं च काव्यमिति तत्प्रतिकूला उद्धता रचनादयः । वक्ता चात्र भीमसेनः ।

---

परीति । दाहाधिक्येनाधोमुखी स्त्री शयने लुठिता अतः स्तनजघनस्थानयोर्म्लानिः ।

मन्थेति । मन्थेनायस्तं यदर्णवाम्भः तत्प्रतिकुहरं चलन् यो मन्दर इति योगः । कृष्णा द्रौपदी । केन ताडितोऽयं दुन्दुभिरीदृगभूदिति निवृत्तार्थः ।

अत्रेति । यदिहि क्रोधादिव्यञ्जकं वाच्यमत्र स्यादिदं च काव्यं

---

[1] कुहरगलन्मन्दर । कुहररणन्मन्दर । कुहरवलन्मन्दर.
[2] ताडितोऽयम्.  [3] अत्र न वाच्यं.  [4] अभिनया.

क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः । यथा—

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजाम्
भाङ्कारैर्भीममेतन्निपतति [1]वियतः कुम्भकर्णोत्तमाङ्गम् ॥३५२॥

क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते। तथाहि । आख्यायिकायां शृङ्गारेऽपि न [2]मसृणवर्णादयः। कथायां रौद्रेऽपि नात्यन्तमुद्धताः। नाटकादौ रौद्रेऽपि न दीर्घसमासादयः।

---

अनभिनेयार्थं स्यात्तदाऽनुमन्येतोद्धतं रचनादि । अभिनेयार्थं हि नाटकादि, तत्र रौद्रादावपि न दीर्घवृत्त्यादि कार्यम् ।

**न मसृणेति**। विकटगद्यबन्धाख्यायिका, बन्धस्य च वैकट्यं न मृदुवर्णैः स्यात् । **कथायामिति**। मृदुवर्णा कथा। **नाटकेति**। न केवलं करुणविप्रलम्भयोः। रौद्रेऽपि न दीर्घवृत्त्यादिकं कार्यम् । यतो रसप्रतीतौ विरोधिनो व्यवधायकाश्च त्याज्या एव । एवं दीर्घवृत्तिः, वृत्तानां नानाविधसम्भावनया रसप्रतीतिं कदाचिद्व्यवदधातीति ताभ्यां न भरः कार्यः, विशेषेण काव्येऽभिनेयार्थे। तत्रापि विप्रलम्भकरुणयोः, तयोर्हि सुकुमारत्वादल्पेऽप्यस्वच्छत्वे शब्दार्थयोः प्रतीतिः मन्दा स्यात् । रसान्तरे तु रौद्रादौ मध्यवृत्तिरपि धीरोद्धतव्यापारौचित्याद्दीर्घवृत्तिरपि वा तदाक्षेपाविनाभाविरसोचितवाच्यापेक्षया न विगुणा स्यादिति साऽपि स्वीकार्या। प्रसादस्तु सर्वरससाधारण इत्युक्तत्वात्

---

[1] वियतः कौम्भकर्णं. [2] मसृणा वर्णा.

एवमन्यदप्यौचित्यमनुसर्तव्यम् ।

इति काव्यप्रकाशे गुणालङ्कारभेद नियत
गुणनिर्णयो नामाष्टम उल्लासः ॥

---

सर्वत्र ज्ञेयः । तत्त्यागे ह्यवृत्तिरपि न करुणविप्रलम्भयोः व्यञ्जिका । तदङ्गिकारे मध्यवृत्तिरपि न व्यञ्जिका अत एव "कृतमनुमतं दृष्टं वा यैः" इत्यादौ प्रसाद एव न माधुर्यं नाप्योजः दुर्विवृत्त्याद्यभावात् न चाचारुत्वम्, इष्टरसप्रतीतेः । **एवमिति** । एकद्वित्रिचतुर्भिश्छन्दोभिरर्थसमाप्तौ मुक्तकः । सन्दानितक, विशेषक, कलापकानि सर्वभाषाणि स्युः । पञ्चादिचतुर्दशान्तैस्तु कुलकम् । चतुर्दशोर्ध्वमप्येके । मुक्तकैरेकविषया पद्धतिः पर्या । स्वपरकृतानां सूक्तीनां मीलनं कोशः । एकानेकप्रघटकविषयत्वेनैककविकृतानां तु मीलनं सङ्घाटकसंहिते । तत्त्रैषां मध्ये मुक्तकेषु रसबन्धाश्रयेण न दीर्घा वृत्तिः कार्या । अन्यथा तु स्वेच्छा । सन्दानितकादौ विकटबन्धत्वेन वृत्त्यभावस्तत्त्याज्यः । प्रबन्धाश्रितेऽनुमुक्तकादौ यथोक्तप्रबन्धविशेषा आराध्याः । पर्याबन्धेषु तु दीर्घा वृत्तिस्तत्त्याज्या । कदाचिद्रौद्रादिविषये दीर्घायामपि वृत्तौ परुषाग्राम्ये वृत्ती त्याज्ये । एकं पुमर्थमुद्दिश्य प्रकारभङ्ग्या भूरिवृत्तान्तवर्णनारूपायां परिकथायां त्विवृत्तस्य न्यासे भरः कार्यो न रसानाम् । मध्यादुपान्ततो वा ग्रन्थान्तरप्रसिद्धमितिवृत्तं यस्यां वर्ण्यते सा खण्डकथा। पूर्णकथा तु प्रसिद्धा । तयोः कुलकभूयस्त्वाद्दीर्घाऽपि वृत्तिरविरुद्धा । सर्गबन्धे तु रसा एव आराध्या इति ।

वाणी काव्यप्रकाशस्य गुणतत्वविवेचिनी ।
सङ्केतेनैव घटते यदि कस्यापि धीमतः ॥

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते
अष्टमोल्लाससङ्केतः ॥

---

# अथ नवमोल्लासः.

गुणविवेचने कृते अलङ्काराः प्राप्तावसरा इति संप्रति शब्दार्थालङ्कारानाह—

**यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते ।**
**श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥ ७८ ॥**

तथेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च ।

तत्र पद[1]भङ्गश्लेषेण यथा —

नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो
वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान् ।
युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः[2] पुरन्दरमतच्छेदं विधातुं कुतः ॥३९३॥

---

## अथ नवमोल्लाससङ्केतः

अर्हम् । यदुक्तमिति । अन्येनान्यथोक्तमन्येनान्यथा योज्यत इत्यर्थः । श्लेषेण काक्वेति । हेतौ तृतीया । तथेति । श्लेषकाकुभ्याम् ।

तत्रेति । पदानां भङ्गाभङ्गाभ्यां श्लेषवक्रोक्तिः स्यादिति भावः ।

नारीणामिति । चेज्जानासि नारीणामनुकूलमाचरसीति योगः । नारीणां स्त्रीणाम् । भङ्गे तु न अरीणाम् । वामाः स्त्रियः प्रतिकूलाश्च । हितकृदिति । हितं करोति कृन्तति च । बलं शक्तिर्बलो दैत्यश्च तदभावेनाप्रसिद्धात्मा दुर्बलो विडौजाश्च । मतमभी-

---

[1] भङ्गे श्ले. [2] वामानां हितमातनोति.

अभङ्गश्लेषेण यथा—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥ ३८४ ॥

काका यथा—

[1]गुरुजन[2]परतन्त्रतया दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते [3]नैष्यति सखि! सुरभिसमयेऽसौ॥

नारीणाम् ।

---

ष्टम् । अत्राभङ्गभङ्गाभ्यां उक्तिप्रत्युक्ती ।

दारुणेति । प्रथमान्ततया रौद्रा । तृतीयान्ततया काष्ठेन । केन काष्ठेनेति योगः । सत्वरजस्तमांसि गुणाः ।

काकेति । काकुनिराकांक्षा शब्दव्युत्पत्तिस्तृतीयोल्लासे कृता । वाक्यस्य साकाङ्क्षनिराकाङ्क्षत्वाभ्यां काकुर्द्विधा । निराकाङ्क्षा साकाङ्क्षा च । यस्माद्वाक्याद्यादृशः संकेतनार्थः प्रतीयते न तादृगेव किन्तु न्यूनाधिकः प्रमाणबलेन निर्णययोग्यस्तद्वाक्यं साकाङ्क्षमन्यथा तु निराकाङ्क्षम् । वक्तुराकाङ्क्षा वाक्ये उपचर्यते । सा च प्रस्तावशान्निर्णीयते । विशिष्टविषयता चास्याः प्रस्तावदेव वाच्या । विषयोऽप्यर्थान्तरं । तदर्थगत एव विशेषः, तदर्थाभावो वा इति त्रिधा यथा—"देशस्सोऽयमराति" इति । अत्र साकाङ्क्षकाकुप्रभावात्ततोऽभ्यधिकं कुरुत इत्यर्थान्तरे गतिः ।

स यस्य दशकन्धरं कृतवतोऽपि कक्षान्तरे

---

[1] गुरुपरतन्त्रतया बत दू. [2] परतन्त्रतया बत दूरं देश. [3] सखि नैष्यति.

गतः स्फुटमवन्ध्यतामधिपयोधि सान्ध्यो विधिः ।
तदात्मज इहाङ्गदः प्रहित [1]एव सौमित्रिणा
क्व स क्व स दशाननो ननु निवेद्यतां राक्षसाः ! " ॥

अत्र तदात्मज इहाङ्गद इति साकाङ्क्षया काक्वा स्वगता वालिपुत्रतोचिता विशेषा अर्प्यन्ते । "निर्वाणवैरदहना" इत्यत्र भवन्तीति वचनोच्चारणं त्वर्थे संभावनां विदधद्भवस्य निषेधात्मनो विषयं भवनलक्षणमर्पयति । न भवन्त्येवेत्यर्थः । "अभिप्रायवान् पाठधर्मः काकुः स नालङ्कारी स्यादिति" तु यायावरीयः । शब्दस्पृष्टत्वेन अर्थान्तरप्रतीतिहेतुत्वाद्गुणभूतव्यङ्ग्यभेद एवायम् । यदाह ध्वनिकारः

अर्थान्तरगतिः काक्वा या चैषा परिदृश्यते ।
सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता ॥ इति ।

तन्मते काकुवक्रोक्तिः नालङ्कारः यथा च पाठधर्मत्वं काकोस्तथा भरतात् ज्ञेयम् । वस्तुस्वाभाव्यात्काकुः श्रुतमर्थमनादृत्यार्थान्तरं वक्तीत्येके । अन्ये त्वेवमाहुः—इह यैषा प्रथमेन संवित्स्यन्देन प्राणोल्लासनया वर्णादिविशेषहीना वाक् जन्यते सा नादरूपा सती हर्षादिचित्तवृत्तिं विधिनिषेधाद्याशयं वा तत्कार्यं लिङ्गतया वा तादात्म्येन वा गमयति । दृश्यते हि मृगश्वादेरपि नादश्रुतौ भीरोषशोकादिप्रतिपत्तिः । नादाच्चित्तवृत्त्याद्यनुमानमित्यर्थः । ये त्वेते वर्णविशेषास्ते तन्नानारूपसामान्यात्म-

[1] एष इति काव्यानुशासने दृश्यते.

## वर्णसाम्यमनुप्रासः ।

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम् । रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः ।

## छेकवृत्तिगतो द्विधा ।

छेका विदग्धाः वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः गत इति छेकानुप्रासो वृत्त्यनुप्रासश्च ।

किं तयोस्स्वरूपमित्याह ।

## सोऽनेकस्य सकृत्पूर्वः ।

---

कवाक्कन्तुग्रन्थिमया इव प्राच्यप्रयत्नातिरिक्तनिमित्तान्तरापेक्षाः त एवान्यत्राप्यभिप्रेतेऽन्यथाऽपि प्रयोक्तुं शक्याः । अत एव दृष्टाभिचाराः । नादस्तु झटित्युद्भिन्नमुखरागपुलकस्थानीयो नान्यथा कर्तुं पार्यते इत्यनन्यथासिद्धोऽन्यथासिद्धं शब्दार्थं बाधत एव वा । यथोक्तं— 'भीरुनामेभयामिति १ ।' अन्यप्रकारतां वाक्यार्थस्य विशेषणार्पणेन विधत्ते । वामनस्तु सादृश्याल्लक्षणा वक्रोक्तिरिति वक्रोक्तिलक्षणमाह । वर्णस्यैकस्यानेकस्य घटपटेत्यादिशब्दरूपराहितस्य साम्यं सादृश्यम् ।

स्वरेति । स्वरव्यञ्जनसादृश्ये यमकं स्यादिति वर्णसाम्यमुक्तम् । एकस्यैव पुनःपुनर्निबन्धः साम्यवृत्तिरिति भावः प्रकृष्ट इति । अदूरान्तरित इति शेषः ।

पूर्व इति । छेकानुप्रासः । अनेकस्येति । अयं भावः—यत्रानेकं

---

[1] रसाद्यनुगुणः,

अनेकस्य अर्थाद्व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रासः उदाहरणम्—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षाम कामिनीगण्डपाण्डुताम् ॥ ३५६ ॥

**एकस्याप्यसकृत्परः ॥ ७९ ॥**

एकस्य [1]अपिशब्दादनेकस्य व्यञ्जनस्य द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः ।

तत्र

**माधुर्यव्यञ्जकैर्वर्णैरुप[2]नागरिकोच्यते ।**
**ओजः[3]प्रकाशकै[3]स्तैस्तु परुषा,**

---

व्यञ्जनं द्वित्र्यादिव्यञ्जनसमुदायः सकृदेकवारमावर्त्यते तत्र छेकानुप्रासः। ततोऽरुणेति । अत्र रु,रि,न्द,न्दी,ण्ड,ण्डु, इत्याद्यनेकव्यञ्जनं सकृदावृत्तम् । कामपरिक्षामकामिनीत्यत्र तु कामेत्यनेकस्य व्यञ्जनस्य द्विरावृत्तत्वाद्वृत्त्यनुप्रासः ।

एकस्येति । असमुदायरूपस्य, केवलस्येति यावत् । तस्यासकृद्बहुकृत्वः सादृश्ये चारुत्वं अनेकस्य तु द्विर्बहुकृत्वो वा ।

तत्रेति । वृत्त्यनुप्रासे ।

---

[1] अपिशब्दादनेकव्यञ्जनस्य. [2] नागरिकेष्यते. [3] प्रकाशकैस्तैश्च.

उभयत्रापि प्रागुदाहृतम्, [1]अनङ्गरङ्गेत्यादि। मूर्ध्नामुद्वृत्तेत्यादि।

**कोमला परैः ॥ ८० ॥**

परैः शेषैः। तामेव केचिदग्राम्येति वदन्ति।

उदाहरणम्—

[2]अपसारय घनसारं
कुरु हारं दूर एव किं कमलैः।
अलमलमालि! मृणालै-
रिति वदति दिवानिशं बाला ॥ ३५७ ॥

**केषां चिदेता वैदर्भीप्रमुखा रीतयो मताः।**

एतास्तिस्रो वृत्तयो वामनादीनां मते वैदर्भी गौडी पाञ्चाल्याख्या रीतयो मताः।

**शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः॥८१**

---

उभयत्रापीति। उपनागरिकापरुषयोः। प्रागिति। "अनङ्गरङ्गे" त्यादि "मूर्ध्नामुद्वृत्ते" त्यादि च। अनङ्गरङ्गेत्यत्रैकस्य गकारस्य बहुवारमावृत्तिः। अग्राम्येति। ग्राम्येति नाम्नि तात्पर्यं। न तु दुष्टत्वे न हि सर्वग्राम्यं दुष्टमेव, ग्राम्यमपि किमपि रम्यं भवतीति नामान्तरतत्परता खलु,

अपेति। अत्र वर्णसमुदायस्य बहुवारमावृत्तिः।

रीतय इति। एतेन रीतयो वृत्यात्मिका इत्यर्थः।

शाब्दस्त्विति। न तु वार्णः। तात्पर्यमात्रेति। यमकव्यवच्छेदार्थं। तात्पर्यमन्यपरत्वं तेनैव भेदोऽत्र न शब्दार्थस्वरूपेण

---

[1] प्रागुदाहृतम्। कोमला इति सङ्केतानुमतपाठः. [2] अवसारयेत्यादि। केषां.
[3] रीतय उच्यन्ते। शाब्दस्तु.

शब्दगतोऽनुप्रासः, शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदात् । लाट-जनव[1]ल्लभत्वाच्च लाटानुप्रासः । एष पदानुप्रास इत्यन्ये ।

**पदानां सः ।**

स इति लटानुप्रासः । उदाहरणम्—

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य [2]च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥

**पदस्यापि ।**

---

अन्वयमात्रेति । अनन्वये शब्दैक्यमौचित्यादानुषङ्गिकं न तु नियतं । ततो हंस इव हंसः हंसो मराळ इति वा कृते न दोषः । अत्र तु शब्दार्थयोरैक्यमेव ।

एष च पञ्चधेति क्रमेणाह—**पदानामिति ।**

यस्येति । अत्र पूर्वार्धे दवदहनो विधेयः । तुहिनदीधिति-रनुवाद्यः । एतदेवोत्तरार्धे विपरीततया ज्ञेयम्। यथावा—

"न्यायशालिनि भूपाले सङ्गृही नावसीदति ।
विपरीते पुनस्तत्र सङ्गृही नावसीदति" ॥

पूज्यानामिदं । स्थानद्वयेऽप्यत्र बहूनां पदानां सकृदावृत्तिरुक्ता असकृत्तु स्वं यथा—

"सन्ति सन्तः किं न सन्ति सन्ति चेत्तन्निवेद्यताम् ।
"किं कुप्यन्ति न कुप्यन्ति ते कुप्यन्ति कतीदृशाः ॥

---

[1]वल्लभत्वा. [2]यस्य न सविधे इति पाठान्तरं तदा दवदहनो नेत्यन्वयः.

अपिशब्देन स इति समुच्चीयते । उदाहरणम्—

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क नु पुनः [1]कलङ्कविकलो भवेत् ॥ ३५९ ॥

**वृत्तावन्यत्र तत्र वा ।**

**नाम्नः स वृत्त्यवृत्त्योश्च ।**

एकस्मिन् समासे भिन्ने वा [2]समासे समासासमासयोर्वा नाम्नः प्रातिपदिकस्य न तु पदस्य सारूप्यम् ।

उदाहरणम्—

सितकर कररुचिरविभा विभाकराकार धरणिधर! कीर्तिः ।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥ ३६० ॥

---

पदस्य सकृदावृत्तिः यथा—वदनमिति । अत्र वदनं सुधाकरत्वेनोक्त्वा पुनर्निषेधो न युक्त इति चेन्न । वर्णनीयस्यात्यन्तोत्कर्षाय स्वोक्तस्यापि तिरस्कारो न दूषणं प्रत्युत भूषणम् । यद्वा तस्याः सत्यं वक्त्रं सुधाकरः इति काक्वा व्याख्येयम् । असकृद्यथा—

"दुःखाभावस्सुखं नेह दुःखं यत्तन्न वा सुखं ।
सुखं तत्परमार्थेन यद्विहाय सुखं सुखम्" ॥ स्वमिदम् ।

वृत्तावित्येकस्मिन् समासे[2] अन्यत्र तत्र वेति भिन्ने समासे, वृत्त्यवृत्त्योरिति समासासमासयोरिति ज्ञेयम् । सितेति । अनेकस्य नाम्नः सकृदावृत्तिरेषा । असकृदावृत्तिः स्वयमूह्या । एकस्य नाम्नः सकृदसकृदावृत्तिः यथा—स्वं।

"विश्वसृष्टिकरो विश्वपालको विश्वघातकः ।
विश्वज्ञो विश्वविख्यातो देवदेवः पुनातु वः ॥

---

[1] कलङ्करहितो. [2] समासासमासयो.

**तदेवं पञ्चधा मतः ॥ ८२॥**

**अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनश्श्रुतिः । यमकम् ॥**

**समरसमरसोयमित्यादावेकेषामर्थवत्त्वेऽन्येषामनर्थकत्वे भिन्नार्थानामिति न युज्यते वक्तुमित्यर्थे [1]सतीत्युक्तम् सेति सरो रस इत्यादिवैलक्षण्येन तेनैव क्रमेण स्थिता ।**

---

"नेत्रेऽञ्जनेत्रे ! तव" इत्यादौ तु विभक्त्यादौ वास्यापौनरुक्त्येऽपि बहुतरशब्दार्थपौनरुक्त्यात् लाटानुप्रास एव । यमकस्येवास्यापि प्रायेण भेदाः स्युः । **वर्णानामिति** । स्वरयुतानामिति शेषः । तथा "सूत्रे लिङ्गवचने अतन्त्रे" इति न्यायाद्वर्णस्य वर्णयोश्च पुनः श्रुतौ यमकत्वम् । परं वर्णस्य पादान्तरगतत्वेन पुनःश्रुतौ वैचित्र्याभावात् तस्मिन्नेव पादे पुनः श्रुतिः कार्या । पुनःश्रुतिरावृत्तिः । वर्णस्य पादादिमध्यान्तेष्वावृत्तिः यथा—

'नानाशं शंकरो मम" ।

वर्णयोर्वर्णानां च तस्मिन्नेव पादे पादान्तरे वाऽऽवृत्तिः स्वयमूह्या । यमौ द्वौ समजातौ, तत्प्रतिकृतिर्यमकम् तेनैकस्याक्षरस्य द्वयोर्बहूनां वाऽन्यत्सदृशं निरन्तरं सान्तरं वा शोभाजनकमलङ्कारः । **अनर्थकत्व इति** । "मधुपराजिपराजितमानिनी" इत्यादौ द्वयोरनर्थकत्वे वेति शेषः । न च तदर्थ एव शब्दः

---

[1] सतीत्यादयुक्तम् । सतीत्युक्तम । साश्रुतिः सरो

पादतद्भागवृत्ति तद्यात्यनेकताम् ॥ ८३ ॥

(१) प्रथमो द्वितीयादौ (३) द्वितीयस्तृतीयादौ (२) तृ-

पुनः प्रयुज्यते, पौनरुक्त्यप्रसङ्गादिति । सामर्थ्यलब्धेऽप्यर्थभिन्नत्वे यत्र स एवार्थः प्रसङ्गेन पुनर्वक्तुमिष्टस्स्यात् बन्धबन्धुरत्वादिना च प्रयुक्त एव शब्दः पुनः प्रयुज्यते

"उदेति सविता ताम्रस्ताम्र एव"

इत्यादौ तत्र पौनरुक्त्यदोषाभावाद्यमकत्वं प्रसज्येतेत्यर्थभिन्नानामित्युक्तम्। तथा—दन्त्यौष्ठ्यौष्ठ्यवकारबकारादिवर्णभेदे लघुप्रयत्नतरालघुप्रयत्नतरकृते च भेदे संयुक्तयोः सजातीययोर्वर्णयोर्वास्तवे विशेषे यमकबन्धो न विरुध्यते लोकप्रतीत्या तत्रापि श्रुतितुल्यत्वात् । एवं यथा—

"यथा नश्यन्ति विघ्नानि यथा नश्यन्ति न द्विषः ।

तथा कुरु गुणालम्ब कृपालं वस्सदा *मतः ॥

अत्र श्यन्तीत्येकत्रैकशकारोऽन्यत्र द्वौ । तत्रैकत्र ब ओष्ठ्योऽन्यत्र वो दन्त्योष्ठ्यः । तथा गुणालम्बेत्यत्र लकारो लघुप्रयत्नतरः, कृपां लातीति कृपालमित्यत्र त्वलघुप्रयत्नतरः । तथा नकारणकाराभ्यां अस्वरमकारनकाराभ्यां विसर्गभावाभावाभ्यां च न विरोध इत्यन्ये ।

एवं यथा

"अप्रमाणमप्रभानमङ्गीकुर्वन् गुणव्रजम् ।

देवदेवस्समाक्षासि? साधूनामध्वनि व्रजन्" ॥

इत्यादि । लोकादन्यदप्यूह्यम् ।

* मन इति स्यात्.

तीयश्चतुर्थे (१) प्रथमस्त्रिष्वपि (१) इति सप्त । [1]प्रथमो द्वितीये तृतीयश्चतुर्थे प्रथमश्चतुर्थे द्वितीयस्तृतीये इति द्वे । तदेवं पादज नवभेदम् ।

अर्धावृत्तिः श्लोकावृत्तिश्चेति द्वे । द्विधा विभक्ते पादे [2]प्रथमादिपादादिभागः पूर्ववद्द्वितीयादिपादादिभागेष्वन्तभागोऽन्तभागेष्विति विंशतिभेदाः । श्लोकान्तरे हि नासौ भागा-

---

तदेवं पादजमिति । अत्र प्रथमस्त्रिष्वपीति भेदवर्जं पादस्य सकृदावृत्त्या भेदा ज्ञेयाः । तेन प्रथमे द्वितीयतृतीययोः द्वितीयचतुर्थयोः तृतीयचतुर्थयोः, द्वितीयः तृतीयचतुर्थयोरिति चतुर्भेदी सत्यपि न गणिता । नवभेदमिति । प्रथमस्य क्रमेण द्वितीयतृतीयचतुर्थैः पादैस्सह, द्वितीयस्य तृतीयचतुर्थाभ्यां तृतीयस्य चतुर्थेन सादृश्ये षड्भेदाः । चतुष्पादसादृश्ये सप्तमो भेदः ।

अर्धेति । द्वे अप्यर्धे सदृशे । श्लोकेति । द्वौ श्लोकौ सदृशावित्यर्थः । प्रथमपादादीति । प्रथमपादस्यादिभागः स तथा। द्वितीयादयश्च ते पादाश्च तेषामादिभागास्तेषु तथा । प्रथमपादादिभाग इत्यत्रादिशब्दः प्रथमादिपादादिभाग इत्येवंरूपतया ज्ञेयः । ततो ग्रन्थो युज्यते । अन्यथा तु दशभङ्गी नोत्तिष्ठते । यद्वाऽऽदिशब्दं विनाऽपि पुर उक्तस्येतिशब्दस्य प्रकारार्थता ज्ञेया । ततो ग्रन्थोक्तं युज्यत इति ॥

श्लोकान्तरे हीति । अत्र हि भागस्यावर्त्यमानत्वे न वैचित्र्य-

---

[1] प्रथमश्चतुर्थे द्वितीयस्तृतीय इति, प्रथमोद्वितीये तृतीयश्चतुर्थे इति द्वे.

[2] प्रथमपादादीति सङ्केते पाठः.

वृत्तिः[1] त्रिखण्डेत्रिंशच्चतुःखण्डे चत्वारिंशत् । प्रथमपादादिगतान्त्यार्धादिभागो द्वितीयपादादिगत आद्यार्धादिभागे यम्यत [2]इत्याद्यन्वर्थतानुसारेणानेकभेदम्, [3]अन्तादिकम्, आद्यन्तिकम्, तत्समुच्चयः, मध्यादिकम्, आदिमध्यम्, अन्तमध्यम्, मध्यान्तिकम् । तेषां समुच्चयः । तथा तस्मिन्नेव पाद आद्यादिभागानां मध्यादिभागेषु अनियते च स्थान आवृत्तिरिति प्रभूतमित्यावृत्तिः नेष्टा न त्वसम्भवादेव ॥

चत्वारिंशदिति ॥ द्वित्रिचतुष्पादभेदानां केवलानामेव मेलने उक्तसंख्या युज्यते । द्विकादियोगे तु वर्धतेऽपि ॥

प्रथमपादादीति ॥ प्रथमपादादिगतान्त्यार्धरूपः । आदिशब्दादादिमध्यान्तरूपो भाग इत्यर्थः ॥

अन्तादिकमिति । अत्रान्तशब्देनाग्रतनोऽन्तादिकनामा यमकभेदो "भीमो भीमसेन" इति न्यायेन गृह्यते । ततोऽन्तादिकादिकमिति लभ्यते । यद्वाऽन्तादिकादिकमिति पाठः । यद्वा यमकस्य जातिनामेदम् । अग्रतस्तु व्यक्तिनामानि ॥

तत्समुच्चय इति ॥ तयोरन्तादिकाद्यन्तकयोः समुच्चयो योगः

तेषामिति । मध्यादिकादीनाम् ॥

आद्यादीति । आदिशब्दात् मध्यान्तभागानाम् । मध्यादीति । आदिशब्दादन्तादिभागेषु ॥

1 हि न भागा । 2 इत्याद्यन्वर्थतानुसरणेनानेक 3 अन्त्यादिकम् ।

तमभेदम् । तदेतत्काव्यान्तर्गडुभूतमिति नास्य भेदलक्षणं कृतम् । दिङ्मात्रमुदाह्रियते—

सन्नारीभरणोमायमाराध्य पृथिवीं जय ।
सन्नारीभरणोमाय ततस्त्वं पृथिवीं जय ॥ ३६१ ॥

विनाऽयमेनो नयताऽसुखादिना
विना यमेनोनयता सुखादिना ।
महाजनोऽदीयत मानसादरम्
महाजनोदी यतमानसादरम् ॥ ३६२ ॥

---

गडुभूतमिति ॥ काव्यवपुषो रसोपचयभङ्गहेतुत्वाद्यमकं ग यते ॥

**सन्नारीति** ॥ सतीर्नारीर्बिभर्ति पुष्णाति योमा तां याति स तथा । सन्ना अरीणामिभा यत्र तथाविधो रणो यस्य आराध्येति । *सन्नाक्रियापेक्षया पूर्वकालता । तत इति प्रथमान्तं तसन्तं च । अत्र प्रथमपादस्तृतीये पादे यमितः ।

**विनेति** ॥ एनोऽपराधं विना महाजनं नयता प्रापयता असुखादिना प्राणविनाशिना † विशिष्टपुरुषयुक्तो यमेनोनयता हानिं कुर्वाणेन सुखादिना सुखभक्षकेणायं महाजनोऽदीयताखण्डयत । अरं शीघ्रं मानसात् मानसमाक्रम्य । मानसादिति पञ्चमी प्रासादात्प्रेक्षते इतिवत्कर्मणि, महाजनन्ति महाजाः खलास्तान्नुदतीत्येवं शीलः । यतमानानां सोद्यमानां खेदं गाति क्रियाविशेषणमिदं । तथा यमेन मानस-

---

* सदनक्रियापेक्षयेति स्यात्. † विना विशिष्टपुरुषयुक्तेनेति स्यात्.

सत्वारम्भरतोऽवश्यमबलं [1]विततारवम् ।
सर्वदारणमानैषीद्दवानलसम[2]स्थितः ॥ ३६४ ॥
अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम् ।
या च मातेव भजते प्रणते मानवे दयाम् ॥ ३६५॥
यदानतोऽयदानतो नयात्ययं न यात्ययम् ।
शिवे हितां शिवेहितां स्मरामि तां स्मरामि [3]ताम् ॥३६६॥
सरस्वति प्रसादं मे स्थितिं [4]चित्तसरस्वति ।
सरस्वति कुरुक्षेत्र कुरुक्षेत्र [5]सरस्वति ॥ ३६७॥

माक्रम्य महाजनोऽखण्ड्यत ।यथा सोद्यमाः खिद्यन्त इत्यर्थः । अत्र प्रथमो द्वितीये तृतीयश्चतुर्थे पादे पादो यमितः ।

सत्वेति । महापुरुषः पुनः शत्रुसमूहं भराद्वशे वर्तमानं दुर्बलं दीर्घाक्रन्दं सर्वकालं रणं प्रापयामास । अलसमवान् * गच्छन् शीघ्रगामीत्यर्थः । अस्थीनि तस्य † विच्छिनत्ति, सत्वे नये अरम्भाः तेषु रतः सर्वथा श्रितं तरुत्वग्वसनं येनारेण, सर्वेषां यो दारणो मानस्तमिच्छति, दवाग्निना समं स्थितं यस्य ।

अनन्तेति । अत्र द्विधा पादविभागेऽन्तभागेऽन्तभाग आवृत्तः। वेधाः यां न वेद न वेत्ति । या च नम्रे मानवे दयां कृपां भजते ।

यदा इति । यस्याः प्रणतः अयस्य शुभदैवस्य दानात् न्यायातिक्रमं न गच्छत्यसौ, शिवेऽनुकूलां वराभिलाषां, स्मरेणामितां ध्यायामि ताम् । अत्र पादमध्य एवाद्यन्तकम् ।

सरस्वतीति । हे वाणि चित्ताब्धौ स्थिते सर गच्छ । स्वति

[1] श्रितेति सङ्केते पाठः. [2] पुनरयं श्लोकः. [3] ताम् समुच्चययमकम् । सरस्वति.
[4] चित्ते सरस्वति. [5] सरस्वति, वर्णभेदयमकम् । ससार.

* अवान् अगच्छन् इति स्यात्. † तस्यति इति स्यात्.

ससार साकं दर्पेण कन्दर्पेण ससारसा ।

शरन्नवाना बिभ्राणा नाविभ्राणा शरन्नवा ॥ ३६८ ॥

मधुपराजपराजित[1]मानिनीजनमनस्सुमनस्सुरभिश्रियम् ।

अभृत वारितवारिजविप्लवं स्फुटिततामृततामृवणं जगत्॥३६९

एवं वैचित्र्यसहस्रैः स्थितमन्यदुन्नेयम् ।

[2]वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः ।

श्लिष्यन्ति शब्दाः श्लेषोसावक्षरादिभिरष्टधा ॥

अर्थभेदेन शब्दभेद इति दर्शने

---

कुरु, सुष्टु कुरु, क्षेत्रमिव कुरुक्षेत्रं तत्र नदि! । अत्र पूर्वार्धे आद्यन्तकं उत्तरार्धे त्वाद्यन्तकादिकसमुच्चयः । सकलश्लोके आद्यन्तकान्तादिकयोगे यथा—

ससारेति । प्रवृत्ता, सार्धं, दर्पेण, स्मरेण च, सरासैर्युक्ता काशां, नूतनशकटा, धारयन्ती, न विद्यते वीनां भ्राणः शब्दो यत्रासावविभ्राणा, नाविभ्राणा, अपितु पक्षिध्वनियुक्ता शरत् ऋतुविशेषः । नवा प्रकृष्टा ॥

मधुपेति । अत्रानियते स्थाने आवृत्तिः ॥

शब्दभेद इति । यथा—कर इत्यत्र पाणिशुण्डाद्यर्थभेदेन शब्दभेदो न वर्णभेदेन सर्वेष्वप्यर्थेषु वर्णैकस्वरूपत्वात् ।

ननु स्वरभेदाद्भिन्नस्वरूपापह्नवाभावे, न श्लेषः स्यादित्याशङ्क्याह—

---

[1] मालिनी.

[2] वाच्यप्रभेदभिन्ना.

काव्यमार्गे स्वरो न गण्यत इति च नये वाच्यभेदेन भिन्ना अपि शब्दा यद्युगपदुच्चारणेन श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते स श्लेषः। स च वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनानां भेदादष्टधा।

क्रमेणोदाहरणानि—

अलङ्कारश्शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोः
विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ ३७० ॥

पृथुकार्तस्वरपात्रम्
भूषितनिश्शेषपरिजनं देव!।
विलसत्करेणुगहनं
संप्रति सममावयोस्सदनम् ॥ ३७१ ॥

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
[1]ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये।

---

काव्यमार्गे इति। भेदादिति। भङ्गात्। अभङ्गस्तु नवमो भेदः अनन्तरं वक्ष्यते ॥

विधाविति। अत्र विधुर्विधिश्चेत्युकारेकारयोर्वर्णयोर्भङ्गश्लेषः। अलङ्कारसर्वस्वमते अत्रार्थापत्तिरलङ्कारः, तथाहि—विधौ वक्रे यदेश्वरस्यापीदृग्दशा तदर्थादन्येषामीदृग्दशा सिद्धैवेति। संसृष्टिरपि ॥

भक्तीति। भवेभवे त्वद्दर्शनं भूयादित्यादिप्रकारेण भक्ति-

---

[1] ध्यानालोकनतां.

[1]लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥३७२॥

[2]एवं वचनश्लेषोऽपि—

महदेसुरसन्धंमे तमव समासङ्गमागमाहरणे ।
हरबहुसरणं तं चित्तमोहमवसरउमे सहसा ॥ ३७३ ॥

(छाया—मह्यं देहि रसं धर्मे तमोवशामाशां गमागमाद्धर नः।
हरवधु शरणं चित्तमोहमपसरतुमे सहसा ॥)

अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥ ३७४ ॥

---

प्रह्वाणां * विलोकनयाञ्चइती । दृक्पक्षे भक्तावलोकने स्नेहवती । नीलोत्पलस्पर्धिनी कृष्णतया चारुतया । हितप्राप्तये नीते, नीता चेहितप्राप्तये । महानिध इति । प्रथमायां 'रोरेलोप' इति दीर्घः । वचनेति । अत्र स्त्रीक्लीबलिङ्गयोर्द्विवचनैकवचनयोश्च श्लिष्टतेत्यर्थः ।

महदे इति । हे मे! महदे उत्सवदे, आगमाहरणे आगमानपह्नापिनि, सुरैस्सन्धानं यस्य तं तादृशं समासङ्गं विषयप्रसङ्गं अव रक्ष । यद्वा आगमस्य स्वीकारे समासङ्गं विघ्नं रक्ष । तथा बहुसरणं बहुव्यापकं चित्तमोहमवसरे काले हर स्फुटयेति संस्कृतपक्षः । प्राकृतपक्षे तु हे हरवधु! शम्भुपत्नि मम देहि रसं धर्मे तमोवशामाशां गमागमात् भवात् हर स्फुटय । तथा नोऽस्माकं शरणं त्वं । चित्तमोहोऽपसरतु मे सहसा बलेन । प्राकृतत्वाच्चित्त

---

[1] लावण्यस्यमहानिधी. [2] एष वचन.

* विलोकने वाञ्छावति इति स्यात् । यद्वा विलोकनेयाच्ञावती.

रजनिरमणमौलेः पादपद्मावलोक
क्षणसमयपराप्तापूर्वसंपत्सहस्रम् ।
प्रमथनिवहमध्ये जातुचित्त्वत्प्रसादा-
दहमुचितरुचिस्स्यान्निन्दिता सा तथा मे ॥ ३७५ ॥
सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः ।
नयोपकारसाम्मुख्यमायासि तनुवर्तनम् ॥ ३७६ ॥

**भेदाभावात्प्रकृत्यादेर्भेदोऽपि नवमो भवेत्** ॥[1]

**नवमोऽपीत्यपिर्भिन्नक्रमः उदाहरणम्—**

योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः ।

---

मोहमित्यत्र क्लीबत्वम् । एवं संस्कृतस्यापभ्रंशादिभाषाश्लेषोऽपि ज्ञेयः । वक्ष्यतीति वहिवच्योः रूपम् । कृदिति करोतिकृन्तत्योः ।

**सहस्रमिति** । क्रियाविशेषणं सहस्रशब्दो बाहुल्यार्थः । स्यां स्यादिति च । नन्दतीति नन्दिता । नन्दिनो गणविशेषस्य भावो नन्दितेति चाख्यातकृत्तद्धितप्रत्ययानां भेदः ।

**सर्वेति** । हे शम्भो त्वं सर्वस्य सर्वस्वं । त्वमेव संसारोच्छेद-तत्परस्सन् नयोपकारयोः साम्मुख्यं शरीरवर्तनमायासि आगच्छसि । अन्यच्च हर स्फोटय । भव सम्पद्यस्व । नय निवारय । आयासि खेद-कारि वर्तनं तनु प्रथयेति । सुप्तिङ्विभक्त्योर्भेदः । अत्र प्रकरणा-दिना नियमाभावे श्लेषो न तु ध्वनिः ।

**प्रकृत्यादेरिति** । अभङ्गश्लेष इत्यर्थः ।

**य इति** । गोत्रशब्दो गिरिवंशार्थः । पक्षाः पतत्राणि स्वव-

---

[1] नवमो मतः.

शतकोटिदलां बिभ्रद्विबुधेन्द्रस्स राजते ॥ ३७७ ॥

अत्र प्रकरणादिनियमाभावाद्द्वावप्यर्थौ वाच्यौ । ननु स्वरितादिगुणभेदाद्भिन्नप्रयत्नोच्चार्याणां तदभावादभिन्नप्रयत्नोच्चार्याणां च शब्दानां [1]बन्धेऽलङ्कारान्तरप्रतिभोत्पत्तिहेतुः शब्दश्लेषोऽर्थश्लेषश्चेति [2]द्विविधोऽप्यर्थालङ्कार[3]मध्ये परिगणितोऽन्यैरिति कथमयं शब्दालङ्कारः? । उच्यते । इह दोषगुणालङ्काराणां शब्दार्थगतत्वेन यो विभागः सोऽन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते. तथाहि— कष्टत्वादिगाढत्वाद्यनुप्रासादयो व्यर्थत्वादि[4]प्रौढ्याद्युपमादयस्तद्भावतदभावानुविधायित्वादेव शब्दार्थगतत्वेन व्यवस्थाप्यन्ते ।

---

र्गेचाश्च । क्षणो महः । शतकोटिदः शतकोटीनां दाता शतकोटिना वज्रेण छेदकश्च विबुधा देवाः ।

स्वरितादीति । समाहारोदात्तानुदात्ताः ।

भिन्नेति । भिन्नाभिन्नप्रयत्नोच्चार्यत्वं क्रमेण शब्दार्थश्लेषयोर्हेतुरित्यर्थः । अन्यैरित्युद्भटाद्यैः ।

अयमिति । योऽसकृदित्यादिः ।

कष्टत्वादीति । एते त्रयोऽपि शब्दगतत्वेन दोषागुणालङ्काराः ।

व्यर्थत्वादीति । एते तु त्रयोऽर्थगतत्वेन दोषगुणालङ्काराः ।

तद्भावेति । अयं भावः । गोत्रादिशब्दप्रयोगे अलङ्कारस्तदर्थवंशशैलादिप्रयोगे तु नेति तद्भावतदभावानुविधायित्वेनान्वयव्यतिरेकाभ्यां शब्दालङ्कार एवात्र । अर्थालङ्कारे तु शब्दाः परिवृत्ति

---

[1] बन्धेनियमेना. [2] द्विविधोऽप्ययमर्था. [3] मध्ये. ग. पौढ्युपमा.

स्वयं च पल्लवाताम्रभास्वत्कर[1]विराजिता ।

इत्यभङ्गः शब्दश्लेषः ।

प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा ॥ ३७८ ॥

इति [2]सभङ्गः शब्दश्लेषश्च । इति द्वावपि शब्दैकसमाश्रयाविति द्वयोरपि शब्दश्लेषत्वमुपपन्नम् । न त्वाद्यस्यार्थश्लेषत्वम् । अर्थश्लेषस्य तु स विषयो यत्र शब्दपरिवर्तनेऽपि न श्लेषत्व[3]खण्डना ।

यथा—

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो सुसदृशी वृत्तिस्तुलाकोटेः [4]खलस्य च ॥ ३७९ ॥

---

सहन्ते । अर्थस्तु तदवस्थ एव ।

स्वयं चेति । गौरीपक्षे पल्लववदाताम्रभास्वद्भ्यां कराभ्यां शोभते । सुखेनाप्तुं यन्न शक्यं फलं तत्र लुब्धानामीहितं प्रदत्ते । सन्ध्यापक्षे तु भास्वत्कराः सूर्यकराः स्वापफलं विश्रान्तिः, लुब्ध इति सप्तम्यन्तम् ।

अभङ्ग इति । अर्थश्लेषतयोद्भटस्य यस्सम्मतः ।

नत्विति । न ह्यभङ्गत्वमात्रमर्थालङ्कारताहेतुः किन्त्वन्वयव्यतिरेकौ । अर्थश्लेषस्य तर्हि को विषय इत्याह—

स्तोकेनेति । तुलायाः कोटिरग्रम् । एतेनालङ्कारान्तारविविक्तो नास्ति श्लेष इति यदुक्तं परैस्तत्परिहृतम् । केचिदत्रापि तुल्ययोग्य-

---

1 विराजिनी विराजिनीत्यभङ्ग. 2 सभङ्गशब्द. 3 खण्डना। स्तोकेनो.
4 खलस्य चेति.

नचायमुपमाप्रतिभोत्पत्तिहेतुः श्लेषः। अपि तु श्लेषप्रतिभोत्पत्तिहेतुरुपमा। तथाहि—यथा—

कमलमिव मुखं मनोज्ञमेतत्कचाति तराम्।

इत्यादौ गुणसाम्ये क्रियासाम्ये उभय[1]साम्ये वोपमा—

तथा—

सकलकलं पुरमेतज्जातं [2]संप्रति सुधांशुबिंबमिव।

[3]इत्यादौ शब्दमात्रसाम्येऽपि सा युक्तैव।

[4]तथाहुयक्तं रुद्रटेन—

स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ किन्तु।

आश्रित्य शब्दमात्रं [5]सामान्यमिहापि संभवतः॥ इति

---

तामाहुः। द्विविधस्यापि परेष्टश्लेषस्यालङ्कारान्तरप्रतिभोत्पत्तिहेतुत्वं दूषयति—

न चेति। अयमिति। स्वयं चेत्यादिः।

प्रतिभेति। प्रतिभाऽर्थस्याभासमात्रं न तु प्ररोहः निर्वाह इति यावत्।

यथा गुणक्रियासाम्ये स्यादुपमा तथा शब्दसाम्येऽपि सा स्यादिति। निर्णेतुमाह—

तथा हीति। सकलेति। सह कलकलेन वर्तते यत्, सकलाः कला विद्यन्ते यत्र। सकलैः कलावद्भिः कलं। सकलं च तत्कलं चेत्यादिविग्रहः। पक्षद्वये यथायोगं योज्यम्।

शब्दमात्रसाम्येऽपीति। एतेनोद्भटेष्टं शब्दमात्रसाम्ये शब्द-

---

1 साम्येचो. 2 संप्रति सितांशु. 3 इत्यादिशब्द. 4 तथाचोक्तम्. 5 साधर्म्यं.

नच कमलमिव मुखमित्यादिः साधारण[1]धर्मप्रयोगशून्य उपमाविषय इति वक्तुं युक्तम्। पूर्णोपमाया निर्विषयत्वापत्तेः।

[2]त्वमेव देव! पातालमाशानां त्वं निबन्धनम्।

त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥ ३८० ॥

इत्यादिः श्लेषस्य चोपमाद्यलङ्कारविविक्तोऽस्ति विषय इति द्वयोर्योगे सङ्कर एव। उपपत्तिपर्यालोचने तूपमाया [3]एवायं युक्तो विषयः। अन्यथा विषयापहार एव पूर्णोपमायाः स्यात्।

---

श्लेषत्वं निरस्तम्।

इहापीति। शब्दालङ्कारप्रकरणे। एतेन शब्दमात्रसाम्येऽप्युपमात्वं सिद्धम्।

शून्य इति। चारुत्वादिधर्माप्रयोगे उपमा तत्प्रयोगे श्लेष इति परस्याशयः।

ननु यदि पूर्णोपमायाः निर्विषयत्वभिया भवद्भिः शब्दसाम्येऽप्युपमात्वं स्मृतं तर्हि श्लेषस्य निर्विषयतेत्याह—

देवेति। त्वमेवेत्यत्रैवकारनिर्देशात्पातालमिति*व्याख्या। तेन न रूपकाशङ्का। अशा दिश आस्थाश्च। एतेन पृथ्वी लब्धा। चामरवीजने चामरमरुतां भूमिः, अमराणां मरुतां च भूमिः स्वर्गः द्वयोरपि स्वयं चेत्यादावस्मदभीष्टा श्लेषप्रतिभोत्पत्तिहेतुरुपमा यदि ते न रोचते तदा तवापि मतेऽन्यत्र लब्धसत्ताकयोर्द्वयोर्योगे सङ्करस्स्यादेव।

अयमिति। स्वयं चेत्यादिकः। तत्सिद्धमेतद्गुणाक्रियासाम्ये

---

1 धर्मशून्या, 2 देव त्वमेवेति सङ्केते पाठः. 3 एवायं विषयः

* पातालम् इत्याख्या इतिस्यात्.

नच—

अबिन्दुसुन्दरी [1]नित्यं गलल्लावण्यबिन्दुका ॥

इत्यादौ विरोधप्रतिभोत्पत्तिहेतुः श्लेषः । अपि तु श्लेषप्रतिभोत्पत्तिहेतुर्विरोधः । न ह्यत्रार्थद्वयप्रतिपादकः शब्दश्लेषः द्वितीयार्थस्य प्रतिभातमात्रस्य प्ररोहाभावात् । नच विरोधाभास [2]इव विरोधः श्लेषाभासः श्लेषः ।[3]तदेवमादिषु वाक्येषु श्लेषप्रतिभोत्पत्ति हेतुरलङ्कारान्तरमेव ।

तथाच

सद्वंशमुक्तामणिः ।

---

उपमा । शब्दसाम्ये तु श्लेष इति । विशेषस्यानभिधानाच्छब्दसाम्यमप्युपमाया विषयः । श्लेषस्य तूपमया विरहित इति स्वयं चेत्यादावुपमैव ।

यथोपमाबाध्यत्वं श्लेषस्य तथाऽलङ्कारान्तरबाध्यत्वमपि तस्य स्यादित्युद्भटेष्टमन्यदपि दूष्यते । न चेति । आप्सु इन्दुरबिन्दुः । द्वितीयेति । न बिन्दुरबिन्दुरित्यन्योऽर्थः । न चैकार्थप्रतिभामात्रे श्लेषः किन्त्वर्थद्वयप्ररोहे स्यादित्याह—

न चेति । यथा विरोधाभासो विरोधो न तथा श्लेषाभासः श्लेष इत्यर्थः । कानि तान्येवमादिवाक्यानीत्याह—

तथा च सद्वंशेत्यादि । वंशः कुलं स एव वंशो वेणुः ।

---

1 नित्यं लसल्लावण्य. 2 एव. 3 तस्मादेवमादिषु

नाल्पःकविरिव स्वल्पश्लोको देव! महान् भवान्।
अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः।
अहो दैवगतिश्चित्रा तथाऽपि न समागमः॥ ३८१॥

आदाय चापमचलं कृताऽहीनं गुणं विषमदृष्टिः।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै॥ ३८२॥

इत्यादावेकदेशविवर्तिरूपकश्लेषव्यतिरेकसमासोक्तिविरोधत्वमुचितं। न तु श्लेषत्वम्।

---

श्लोको ग्रन्थोऽपि॥

तत्पुरस्सर इति। आयान्त्या इव सन्ध्यायाः कामिवत् दिवसः पुरस्सम्मुखं सरतीति व्याख्या, न त्वग्रे दिनं पृष्ठतश्च सन्ध्या यातीति, एवं हि कदापि न सङ्गमः स्यात्।

आदायेति। अचलं शैलं निश्चलं च। अहीनं शेषं। हीनं च। विषमा त्रिरूपा चञ्चला च। अच्युतो विष्णुः गतिशून्यश्च।

एकदेशेति। भामहोक्तैकदेशविवर्तिरूपकस्य मम्मटमते परंपरितसंज्ञा। अत्र वर्णनीयस्य राज्ञो मुक्तामणित्वरूपणान्यथानुपपत्त्या वंशस्य गोत्रस्य वेणुत्वरूपणं साक्षादनुक्तमपि श्लेषबलादवगम्यत इत्येकदेशविवर्तित्वम्। सद्वंशेत्यत्रैकदेशविवर्तिरूपकं। नाल्पः कविरित्यत्र श्लेषव्यतिरेकौ। अनुरागवती सन्ध्येत्यत्र समासोक्तिः। आदायेत्यत्र च विरोधः।

शब्दश्लेष इति चोच्यते। अर्थालङ्कार[1]मध्ये च लक्ष्यते इति कोऽयं नयः। किञ्च वैचित्र्यमलङ्कार इति य एव कविप्रतिभासंरम्भगोचरस्तत्रैव विचित्रतेति सैवालङ्कारभूमिः। अर्थमुखप्रेक्षित्वमेषां शब्दानामिति [2]चेदनुप्रासादीनामपि तथैवेति तेऽप्यर्थालङ्काराः किं नोच्यन्ते। रसादि[3]व्यञ्जकस्वरूपवाच्यविशेष[4]सव्यपेक्षत्वेऽपि ह्यनुप्रासादीनामलङ्कारता। [5]शब्दगुणदोषाणामप्यर्थापेक्षयैव गुणदोषता। अर्थगुणदोषालङ्काराणां शब्दापेक्षयैव व्यवस्थितिरिति तेऽपि [6]शब्दगतत्वेनोच्यन्ताम्।

---

ननु स्वरितेत्यादिपरोक्तपूर्वोक्तपूर्वपक्षस्योपहासं करोति। **शब्दश्लेष इति**। य एवेति शब्दोऽर्थो वा। **सैवेति**। विचित्रता। एतेन स्वयं चेत्यादौ शब्द एव कविप्रतिभासंरम्भगोचर इति परमतेऽपि शब्दश्लेषता न त्वर्थश्लेषतेत्युक्तम्। **रसादीति**। रसादिव्यञ्जकं स्वरूपं यस्य वाच्यविशेषस्य। अनुप्रासादीनामपि शब्दालङ्कारताऽर्थापेक्षैवेति तेऽप्यर्थालङ्काराः किं न स्युः॥

**गुणदोषतेति**। शब्दगुणदोषा अप्यर्थगुणदोषत्वेन किं नोच्यन्त इति भावः। संस्कृतादिषड्भाषाणामर्थाभेदे युगपदुक्तिर्भाषाश्लेष

---

[1] मध्ये लक्ष्यते। [2] चेदनुप्रासादीनां तथैवेति। [3] व्यञ्जकत्वरूप। [4] सव्यपेक्षत्वे ह्य। [5] शब्दापेक्षया व्यव। शब्दापेक्षयैवावस्थिति। [6] शब्दगतत्वेनैवोच्यन्ताम्।

विधौ वक्रे मूर्ध्नीत्यादौ च वर्णादिश्लेष एकप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वं शब्दभेदेऽपि प्रसज्यतामित्येवमादि स्वयं विचार्यम्।

**[1]तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता॥८५॥**

सन्निवेशविशेषेण यत्र न्यस्ता वर्णाः खड्गमुरजपद्माद्याकारमुल्लासयन्ति [2]तच्चित्रं काव्यम् । [3]कष्टं काव्यमेतदिति दिङ्मात्रं प्रदश्यते उदाहरणम्—

मारारि शक्ररामेभमुखैरासाररंहसा ।
साराब्धस्तवा नित्यं [4]तदार्तिहरणक्षमा ॥ ३८३ ॥

---

इत्येके । तत्र संस्कृतस्य प्राकृतभाषया श्लेषो यथा ।

सरले *सहसा रागं परिहर रम्भोरु! मुञ्च संरम्भं ।
विरसं विरहायासं वोढुं तव चित्तमसहं मे ॥

एवमन्यभाषणामपि । द्वित्र्यादिश्लेषो ग्रन्थान्तरात् ज्ञेयः ।

वर्णा इति । लिपयः । तासामेव खड्गाद्याकारोल्लासनासम्भवात्, लिपीनां च श्रोत्राकाशसमवेतवर्णात्मकशब्दाभेदेन प्रतीतेरत्र वाचकशब्दालङ्कारता न लिप्यलङ्कारता ।

विचित्रमिति । चित्रंसादृश्यादाश्चर्यहेतुत्वाद्वा ।

मारारीति । मारारिः शम्भुः । रामो हली । आसारसदृशवेगेन । सर्वेषामाद्या । आदिमेति पाठान्तरम् । स्थापना यथा—द्वाढिकान्तरे साधारणो माशब्दः, तस्य दक्षिणतोऽधः

---

[1] विचित्र यत्र इति सङ्केतानुसारी पाठः। [2] तच्चित्रं। कष्टंकाव्यमे [3] कष्टकाव्य। [4] तदर्ति. *साहसरागं इति काव्यानुशासनेपाठः।

**माता नतानां सङ्घट्टः श्रियां बाधितसंभ्रमा ।**

**मान्याऽथ सीमा रामाणां शं [1]मे दिश्यादुमादिमा ॥ ३८४**

**(खड्गबन्धः)**

**[2]सरला बहुलारम्भतरलालिबलारवा ।**

**वारलाबहुलामन्दकरलाबहुलामला ॥ ३८५ ॥**

**(मुरजबन्धः)**

---

क्रमेण वर्णाश्चतुर्दश । शिखायां साधारणः साशब्दः । ऊर्ध्वक्रमेण वामतस्तावन्त एव यावन्माशब्दः साधारण एव तत्फलम् । तस्यैव माशब्दस्य दक्षिणतो निस्सरणक्रमेण वामतश्च प्रवेशक्रमेण वर्णास्सप्त सप्त । एषा द्राढिका । ततो माशब्दादूर्ध्वं क्रमेण गण्डिकायां वर्णत्रयमुपरि माशब्दः साधारणः । तस्य दक्षिणतो वामतश्च तथैव चत्वारश्चत्वारो वर्णाः । एतच्च कुलकम् । ततस्तस्य माशब्दस्योपरि वर्णद्वयमेतन्मस्तकम् । सामामाशब्दाः द्विः पञ्चकृत्वो द्विरावृत्ताः ॥

**शरलेति** । शरद्वर्णनेयम् । शरं लातीति शरला । बहुलारम्भेण तरलानामलिबलानामारवो यत्र । हंसीति * बहुला । करान् लान्तीति करलाः क्ष्मापाः अमन्दा विजिगीषवः करला यस्यां, अबहुलेन शुक्लपक्षेण निर्मला । स्थापना यथा—पादचतुष्टयेन पङ्क्तिचतुष्टये कृते प्रथमादिपादेभ्यः प्रथमाद्यक्षराणि चत्वारि

---

[1] दिश्यादुमाद्रिजा. [2] शरलेति सङ्केते पाठः. * हंसीभिर्बहुला इति स्यात्.

भासते प्रतिभासार रसाभासाहताविभा ।
भावितात्माशुभावादे देवाभा बत ते सभा ॥३८६॥
(पद्मबन्धः)

चतुर्थादिपादेभ्यः पञ्चमादीनि च चत्वारि गृहीत्वा प्रथमः पादः । द्वितीयात्प्रथमं प्रथमाद्द्वितीयतृतीये द्वितीयतृतीयाभ्यां चतुर्थे चतुर्थात्तृतीयद्वितीये तृतीयात्पादात् प्रथममक्षरं गृहीत्वा द्वितीयः पादः । द्वितीयादष्टमं प्रथमात्सप्तमषष्ठे द्वितीयतृतीयाभ्यां पञ्चमे चतुर्थात् षष्ठसप्तमे तृतीयादष्टमं च गृहीत्वा तृतीयः पादः । चतुर्थादिभ्यः प्रथमादीनि प्रथमादिभ्यः पञ्चमादीनि पादेभ्योऽक्षराणि गृहीत्वा चतुर्थः पादः ।

भासत इति । प्रतिभासार! रसेन समन्तात् भाता हता अशोभा *यथा वादे एकाग्रचित्ता शुभा प्रशस्या देवैः वादिभिः विद्वद्भिराभाति बतेत्याश्चर्ये । स्थापना यथा—भाशब्दः कर्णिकास्थाने । ततोऽक्षरद्वयेनैकं दिग्दलं निस्सरणक्रमेण विदिग्दलं चाक्षरद्वयेन प्रवेशक्रमेण । ततः स एव भाशब्दस्ततोऽक्षरद्वयेन दिग्दलं निर्गमप्रवेशाभ्यां भाशब्दं यावत् । ततोऽक्षरद्वयेन विदिग्दलं निर्गमेन तावतैव दिग्दलं प्रवेशेन भाशब्दं यावत् । पुनर्भाशब्दो निर्गमेण च तावदक्षरद्वयमित्यादिना क्रमेण दलाष्टकमुत्पाद्यमिति दिग्दलवर्णानां द्विः भाशब्दस्य चाष्टकृत्व आवृत्तिः । खड्गादित्यादिशब्दान्मुसलधनु-

* यथा इति काव्यानुशासनव्याख्याने दृश्यते.

**रसासार रसासारसायताक्षक्षतायसा ।**
**सातावात तवातासा रक्षतस्त्वस्त्वतक्षर ॥ ३८७ ॥**

(सर्वतोभद्रम्)

[1]संभविनोऽप्यन्ये प्रभेदाः शक्तिमात्रप्रकाशकाः न तु[2]काव्यरूपतां दधतीति न प्रदर्श्यन्ते ।

---

र्णचक्रशक्तिशूलहलस्वस्तिकादयः। तथैकद्वित्रचादिव्यञ्जनस्थानपादार्धश्लोकगतप्रत्यागतादयश्चित्रभेदा ज्ञेयाः ॥

रसेत्यादि । हे सार! स्थिर रससार! रसवेगवद्धर्ष आयताक्ष! पृथुनेत्र। सातं सुखमव* सामास्तचेनाततीति सातावात! अतक्षर! वृद्धिदायक। तव रक्षत स्सतः सारसा भूः अतासा विगतोपक्षयाऽस्तु, क्षत अयो यैस्ते क्षतायाः खलाः तान् स्यति या सा तथा। तवैवेत्थं। तुरवधारणे। अत्र न केवलमधोऽधः क्रमेण स्थितानां पादानां प्रातिलोम्येन स्थितिर्यावदर्थभ्रमस्यापि। तत्र हि प्रथमादिपादानां प्रथमैः चतुर्थतृतीयद्वितीयप्रथमपादानां अष्टमैश्चाक्षरैः प्रथमपादः । एवं द्वितीयसप्तमैः तृतीयषष्ठैश्चतुर्थपञ्चमैश्च द्वितीयतृतीयचतुर्थपादाः। इह च सर्वत्र तदेवोपलभ्यत इत्यर्थभ्रमस्याप्यवस्थानात् सर्वतोभद्रम् ॥

अन्य इति। स्वं वर्णच्युतं यथा—

नृपदितिजामरप्रभुनताङ्घ्रियुगो जलदद्युतिर्विभुः
पृथुभुजगाधिपस्फुटफटासुभगः कमठारिजित्तथा ।

---

[1] संभविनोन्ये। संभविनोप्यनेकप्रभेदाः। [2] काव्यस्वरूपतां। * सातं सुखमवतीति सातावस्तं सामस्त्येनाततीति सातावात इति स्यात्.

पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ।
[1]एकार्थतेव

भिन्नरूपसार्थकानर्थकशब्द[2]निष्ठमेकार्थत्वेन [3]मुखे भासनं पुनरुक्तवदाभासः सच

शब्दस्य

सभङ्गाभङ्ग[4]रूपकेवलशब्दनिष्ठः ।

उदाहरणम्—

अरिवधदेहशरीरः सहसा रथिसूततुरगपदातः ।

---

शिवसुखसंपदेव्ययविलासगृहं निखिलैनसां हरो
घनविधुता वनीं [*]हरतु सकलः कलिलावनीं जिनः ॥

अत्र श्रीपार्श्ववर्णने सिद्धिच्छन्दसि प्रतिपादमाद्याक्षरद्वयस्यान्त्याक्षरसप्तकस्य च च्युतौ प्रमिताक्षरावृत्तेन, तथाऽऽद्याक्षरसप्तकस्यान्त्याक्षरद्वयस्य च्युतौ द्रुतविलम्बितवृत्तेन तस्यैव वर्णनम् । एवं बिन्दुमात्रार्धमात्राच्युतानि क्रियाकारकपादसम्बन्धगुप्तानि प्रश्नोत्तरप्रहेळिकागोमूत्रिकातुरगपदादीनि कण्ठाभरणादिग्रंथेभ्यो ज्ञेयानि ।

आमुख इति । न तु परमार्थतः । एतेन पर्यवसानान्यथात्वं लब्धम् ॥

अरीति । अरिवधदा ईहा येषां शरिणां तानीरयति यस्स तथा । सूतशब्दः प्रेरितार्थोऽपि । स्थिरतायामवनितलतिलकोऽगो

---

[1] एकार्थतेव शब्दस्य. [2] निष्ठत्वेनैव मुखे । निष्ठत्वेनैवामुखे. [3] आमुखे
[4] रूपः केवल. * स हरतां सकलः इति स्यात्

भाति सदानत्यागः स्थिरतायामवनितलतिलकः ॥ ३८८ ॥

चकासत्यङ्गनारामाः कौतुकानन्दहेतवः ।
तस्य राज्ञस्सुमनसा विबुधाःपार्श्ववर्तिनः ॥ ३८९ ॥

**तथा शब्दार्थयोरयम् ॥ ८६ ॥**

उदाहरणम्

तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः ।
तेजोधाम महः पृथु मनसामिन्द्रो हरिर्जिष्णुः ॥३९०॥

अत्रैकस्मिन् पदे परिवर्तिते नालङ्कार इति शब्दाश्रयः

---

मेरुः सन् सतामानत्या भाति । अत्र देहशरीरशब्दौ सार्थकौ सभङ्गौ सन्तौ सारथिसूतशब्दौ सार्थकानर्थकौ सभङ्गाभङ्गौ सन्तौ, तथा दानत्यागशब्दौ अनर्थकौ सभङ्गौ सन्तौ पुनरुक्ताभासौ ।

**चकासतीति** । अङ्गनेष्वारामा येषां ते तथा । अत्राङ्गना रामा इत्येतौ शब्दावनर्थकौ । देहशरीरादिशब्दवदङ्गाभावादभङ्गौ च । केचिदस्यार्थपौनरुक्त्याश्रितत्वादर्थालङ्कारत्वमाहुः । वयं त्वर्थपानरुक्त्याश्रितत्वेऽपि शब्दवैचित्र्याच्छब्दालङ्कारत्वं ब्रूमः ।

**तन्विति** । तनुः कृशोऽपि । कुञ्जरशब्दः श्रेष्ठार्थोऽप्युत्तरपदे । रक्तो रञ्जितः । खरः कठोरः । तेजोधाम्नां महः उत्सवभूतः तेजोगृहं वा । पृथुमनसां महसां वा पृथुमनसां स्वामी । जिष्णुर्जेता । हरिः सिंहः ।

**एकस्मिन्निति** । तनुकुञ्जरादिपदेऽनेकार्थे इत्यर्थः

अपरस्मिंस्तु परिवर्तितेऽपि स न [1] हीयत इत्यर्थनिष्ठ इत्युभयालङ्कारोऽयम् ॥

इति काव्यप्रकाशे शब्दालङ्कार निर्णयो नाम
नवम उल्लासस्समाप्तः ॥

---

अपरस्मिन्निति । एकार्थे वपुरादिपदे इत्यर्थः ।
लोकोत्तरोऽयं सङ्केतः कोऽपि कोविदसम्मतः ।
शब्दस्याडम्बरो यत्र भूषणत्वेन निश्चितः ॥

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाश
सङ्केते नवमोल्लाससङ्केतः.

---

[1] हीयेतेत्यर्थनिष्ठः.

# अथ दशमोल्लासः

[1] अर्थालङ्कारानाह—

साधर्म्यमुपमा

## अथ दशमोल्लाससङ्केतः.

अथ द्वाषष्टिमुपमाद्यर्थालङ्कारानाह । तत्रापि प्रकारवैचित्र्येणानेकालङ्कारबीजामिति पूर्वमुपमोच्यते । एषा चार्थालङ्कारत्वेन प्राच्यैरुक्तत्वादुक्ता, यावता त्वेषा श्रौतीरूपा । इवादिशब्दपरावर्तासहनान्यशब्दपरावर्तसहनाभ्यामन्वयव्यतिरेकित्वेनोभयालङ्कृतिः । अत एवासौ पुनरुक्ताभासोभयालङ्कारसमीपे प्रोक्ता । श्रीभोजोऽप्येवमुक्तवान् ॥

साधर्म्यमिति । सधर्मणोर्भावः साधर्म्यं समानधर्मसम्बन्धः । तच्च प्रतीतयोरुपमानोपमेययोरेव, न कार्यकारणादिकयोरसम्भवात् । सत्वज्ञेयत्वप्रमेयत्वादिसाधर्म्यभावेऽपि तयोर्नोपमा हृद्यत्वाभावात् । उपमेति । समगुणद्वारेण उपमेयस्योपमानसदृशीकरणमुपमा, उप समीपे मीयते क्षिप्यते स्वसादृश्यप्रापणादुपमेयं येन तदुपमानं, तथा तेन यत्तु समीपे क्षिप्यते गुणद्वारेण तदुपमेयं, हृद्यतया कविना यदुत्कृष्यते तदुपमानम्, अन्यदुपमेयं, न तु प्रसिद्धमप्रकृतं चोपमानमन्यदुपमेयम् । एवं हि—

"ततः कुमुदनाथेन कामिनीगण्डपाण्डुना"

इत्यादौ चन्द्रादेः प्रसिद्धस्योपमेयत्वं गण्डादेरप्रसिद्धस्योपमानत्वं न स्यात् ।

---

[1] अथार्थाल.

[1] भेदे,

उपमानोपमेययोरेव [2] न तु कार्य[3] कारणादिकयोः साध-

---

प्रकृताप्रकृतत्वेपि कविविवक्षैवाङ्गीकार्या। चन्द्रगण्डयोरुपमानोपमेयत्व-प्रसिद्धौ सत्यामपि प्रसिद्धिविपर्यासेनौपम्यस्य कल्पितत्वाद्विपर्यासोपमा। एवंविधकार्येषु न साम्येनोपमेति श्रीभोजः। क्वचिद्दृद्धयस्यापि साधर्म्यस्योपमात्वं यथा—हास्यादौ शूर्पकर्णः कुम्भोदर इत्यादि.

भेद इति। प्रायः शब्दार्थाभ्यां, पुरुषः पुरुषो यथेत्यादिदर्शनाच्च, क्वचिदर्थेनास्यां भिन्ने उपमानोपमेये। अनन्वये तूपमानोपमेययोः शब्दार्थाभ्याम्, क्वचिच्चार्थेनाभेद एव। 'यथा—रविरिव रविः' रविस्सूर्य इव। उपमानोपमेययोः शब्दार्थद्वारेण स्वगतो भेदः। न धर्मद्वारेण। धर्मद्वारकभेदे हि व्यतिरेकालङ्कारत्वं स्यात्। नोपमालङ्कारत्वं, उपमानोपमेययोर्भेदः शब्दार्थद्वारको यथोपमायामस्ति तथा समानधर्मद्वारेणाभेदोऽप्यस्ति। यथाऽऽहुः —'यत्र किञ्चित्सामान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः' इति। तदर्थम् 'उपमाभेदे' इत्यत्र सूत्रे अकारप्रश्लेषो ज्ञेयः। ततश्च भेदाभेदप्राधान्ये उपमेति लब्धम्। उपमावाचकानि इव, वा, यथा, इत्यव्ययानि। तुल्यार्थवाचिनः प्रतिपक्ष, प्रत्यनीकादयः प्रतिबिम्ब, प्रतिच्छन्दादयश्च, शब्दाः कल्पबादिप्रत्ययाश्च, स्पर्धते जयत्यनुकरोत्यादिक्रियाश्च, चन्द्रमुखीत्यादिसमासश्च। उपमानमुपमेयं साधारणधर्म उपमाप्रतिपादकश्च यत्र स्युः सा पूर्णा।

---

[1] भेदोऽत्र उपमेयतावच्छेदकोपमानतावच्छेदकयोः, तेन अवस्थाभेदात्तस्यैव तदुपमानिर्वाहः. [2] न कार्यकारणा. [3] कार्यकारणयोः.

र्थं भवतीति तयोरेव समानेन धर्मेण संबन्ध उपमा ॥ भेदग्रहणमनन्वयव्यवच्छेदाय ।

**पूर्णा लुप्ता च,**

उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा । एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता ।

**साऽग्रिमा ।**

**श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥ ८७**

अग्रिमा पूर्णा । यथेव[1]वादिशब्दा यत्परास्तत्रैवोपमानताप्रतीतिरिति यद्यप्युपमानविशेषणान्येते, तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत्संबन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा । तथैव 'तत्र तस्येव' (पा, सू, 5-1-116) इत्यनेनेवार्थे विहितस्य वतेरुपादाने श्रौती । 'तेन [3]तुल्यं

एषां क्रमेणैकद्वित्रिलोपे लुप्ता ।

* उपमानविशेषणाः । पद्मादेरुपमानतया स्थापकाः ॥ श्रुत्यैवेति ॥ अभिधाव्यापारेण । यथा—षष्ठी यस्याग्रे तं विशिनष्टि न पुनस्तत्र विश्राम्यति । अतस्सा श्रुत्यैव संबन्धं द्विष्ठं ब्रूते, तथैवायमिवादिरुपमानोपमेययोरेकत्राप्याविश्रान्तः श्रुत्या द्विष्ठं उपमानोपमेयभावं वक्तीति । तत्सद्भावे—यथेवादिभावे । श्रौती । तथैवेति । श्रौतीत्यर्थः । इवार्थे विहितो वतिरिववत् ज्ञेयः । तेनेति । चन्द्रेण । तत्तुल्यमिति । चन्द्रबिम्बं तुल्यं मुखस्य ॥ इदं चेति ॥

[1] वाशब्दा । [2] उपमानविशेषणानि ते । [3] तुल्यमित्यादा।

* उपमानविशेषणा एत इति पाठं मनुते।

मुखम्' इत्यादावुपमेय एव, 'तत्तुल्यमस्य' इत्यादावुपमान एव, '[1]इदं च तच्च तुल्यम्' इत्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिरिति साम्यपर्यालोचनया तुल्यता[2]प्रतीतिरिति साधर्म्यस्यार्थत्वात् तुल्यादिपदोपादान आर्थी।

तद्वत् 'तेन तुल्यं क्रिया चेद्वतिः' (पा, सू, 5-1-115) इत्यनेन विहितस्य वतेः स्थितौ।

'इवेन समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति नित्यसमासे इवशब्दयोगे समासगा।

क्रमेणोदाहरणम्—

---

मुखं च चन्द्रबिम्बं च तुल्यम् ॥ उभयत्रापीति। क्रमेणेति शेषः। पूर्वयोस्त्वेकत्रैवेति भावः। तुल्यादीति। तुल्यप्रकारशब्दानाम्। साम्येति। सममेव साम्यं। समानो धर्मः। द्विष्ठरूपं सादृश्यं तुल्यता। अयं भावः—उपमानोपमेययोः साम्यप्रतीतिर्न तुल्यादिशब्दादेव, किन्त्वर्थात्, तुल्यादिपदानामेकतरत्रैव विश्रान्तेः। अन्यत्र तु साम्यालोचनया सादृश्यप्रतीतिः॥

तद्वदिति। आर्थीत्यर्थः। इवेन सह समासः स्याद्वा न वेत्याह—इवेनेति। एतद्वक्तव्यं कुगतिप्रादय इति सूत्राश्रितम्।

समासगेति। श्रौतीति योगः।

---

[1] इदं तच्च. [2] प्रतीतिरिति तत्र साधर्म्यस्या.

स्वप्नेऽपि [1]समरेषु त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ ३९३ ॥

चकितहरिणलोललोचनायाः
क्रुधि तरुणारुणतारहारकान्ति ।
सरसिजमिदमाननं च तस्याः
सममिति चेतसि सम्मदं विधत्ते ॥ ३९४ ॥

[2]अत्यायतैर्नियमकारिभिरुद्धतानां
दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदायो

---

स्वप्नेऽपीति । प्रभावो विक्रमः । अन्यत्र तु प्रकृष्टो भावोऽनुरागस्तयोः प्रभव उत्पत्तिस्थानम् । अत्र श्रीः, स्वाधीनपतिका, प्रभाव*मोचनद्वयं, यथेति च क्रमेणोपमेयोपमानधर्मोपमावाचकम् । इयं वाक्ये पूर्णा श्रौती । वाक्ये पूर्णाऽऽर्थी यथा—

चकितेति । न तुल्यादिशब्दात्साम्यप्रतीतिः । किन्त्वर्थादित्युभयत्र स्थितेनापि समशब्देनोपमानोपमेययोरेकतरस्य सादृश्यमर्थादवगम्यते ।

भुजैरिवेति । यो राजा सदा चतुर्भिरुपायैः शौरिरिव चतुर्भिर्भुजैः भुवनं बभारेति योगः । अथवा शौरिस्सदायः सन् चतुर्भिरुपायैः भुजैरिवेति योगः । इवेन समासपक्षे समासे श्रौती पूर्णोपमेयम् । ये त्विवेन समासं नेच्छन्ति तन्मते वाक्योपमेयम् ॥

---

[1] समरेऽपि त्वाम्. [2] अत्यायतैर्विषम । अत्यायतैर्विनय ।

* प्रभावप्रभवामोचनद्वयम् इति स्यात् ।

लक्ष्मीविलासभवनैर्भुवनं बभार ॥ ३९५ ॥

अवितथमनोरथपथ-
प्रथनेषु प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशस्स भवान्
अभिलषणीयः क्षितीश्वर ! न कस्य ॥ ३९६ ॥

गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् ।
[1]दुरालोकस्स समरे निदाघाम्बररत्नवत् ॥

स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्का-

---

सुरेति ॥ अत्र सुरतरुणा सदृश इति सदृशशब्द उपमेयविश्रान्तस्तद्गतं सादृश्यं साक्षाद्ब्रूते । अन्यत्र तु सादृश्यं अर्थात्प्रतीयते, बहुव्रीहौ तूपमाने सदृशशब्दो विश्राम्यति । ततस्तत्र सादृश्यं साक्षादपरत्र तु अर्थात् । इयं समासे आर्थी पूर्णोपमा ॥

गाम्भीर्येति ॥ तद्धिते श्रौती पूर्णेयमिति योगः । भुजङ्गवदित्यत्र इवार्थे वतिः, ततः श्रौतीत्वं । भुजङ्गः कामी । स चार्थात्समुद्रः । अम्बररत्नं रविस्तेन तुल्यः, तुल्यार्थे वतिः । स चोपमेये साक्षात् विश्रान्तः, उपमाने तु साम्यपर्यालोचनयोपमानताप्रतीतिरितीयं तद्धिते पूर्णाऽऽर्थी ॥

स्वाधीनेति ॥ अयं भावः—प्रतीयमानं चेद्व्यक्तं तदा ध्वनिव्यवहारः, अथास्फुटं, तदा गुणीभूतव्यङ्ग्यव्यवहारः ॥

---

1 दुरालोकश्च समरे.

रभूः । तथा जयश्रीस्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तेर्वैचित्र्यम्, वैचित्र्यश्चालङ्कारः, तथाऽपि न ध्वनि-गुणीभूतव्यङ्ग्यव्यवहारः । न खलु व्यङ्ग्यसंस्पर्शपरामर्शादत्र चारुताप्रतीतिः । अपि तु वाच्यवैचित्र्यप्रतिभासादेव । [1] रसादिस्तु व्यङ्ग्योऽर्थोऽलङ्कारान्तरं च [2] सर्वत्राव्यभिचारीसगणयित्वैव तदलङ्कारा उदाहृताः । तद्रहितत्वेन तूदाह्रियमाणा विरसतामावहन्तीति पूर्वापरविरुद्धाभिधानमिति न चोदनीयम् ।

**तद्वद्धर्मस्य लोपे स्यान्न श्रौती तद्धिते पुनः ।**

अलङ्कारान्तरं चेति ॥ तद्ध्यनुप्रासादि, श्लिष्टतरमपि काव्ये यद्यव्यभिचारितयैव गण्येत, तदा तेन सहोपमादीनां सङ्कर-संसृष्टी स्यातामिति केवलतयैवैषां विषयो नावकल्पेत ।

तदिति । स चास्फुटतरो रसादिरर्थः । तच्चालङ्कारान्तरमिति नपुंसकैकशेषः । संस्पर्शपदादत्र रसादिरस्फुटतरो ग्राह्यः । अस्फुटातिस्फुटस्य तु गुणीभूतव्यङ्ग्यता ॥

तद्रहितत्वेनेति । रसाद्यलङ्कारान्तररहितत्वेन ॥

तद्वदिति । पूर्णावल्लुप्ताऽपि वाक्यसमासयोर्विभेदात् । ताद्धिते त्वार्थ्येव न श्रौती । "तत्र तस्येव", इति सूत्रेणानीते वति श्रौतीत्वं गतम् । 'तदस्य सिंहवत् त्वया सान्निधौ न गन्तव्यम्' इत्यत्र दारुणत्वस्य गम्यत्वादनुच्चार(?) पुरुषस्य सिंहोपमेयस्य सान्निधौ पुरुष सञ्चरणनिवारणे कथं समानधर्मलोपेन श्रौतीति युज्यते? । सत्यं

[1] रसादिरूपस्तु. [2] सर्वत्राव्यभि.

**धर्मस्साधारणः । तद्धिते कल्पबादौ त्वार्थ्येव । तेन पञ्च । उदाहरणम्—**

**धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।**
**करणीयं [1]वचश्चेतः सत्यं तस्यामृतं यथा ॥ ३९८ ॥**
**आकृष्टकरवालोऽसौ सम्पराये परिभ्रमन् ।**
**प्रत्यर्थिसेनया दृष्टः कृतान्तेन [2]समःप्रभुः ॥ ३९९ ॥**
**करवाल इवाचारस्तस्य वागमृतोपमा ।**
**विषकल्पं मनो वेत्सि यदि जीवसि तत्सखे ! ॥ ४०० ॥**

---

समानधर्मतां निवारणादिकं भजते । अथवा—प्रतीत्यभावादेव । तथाहि—षष्ठ्यन्तस्य सिंहोपमानत्वेऽपि विवक्षिते शब्दसामर्थ्यात्तृतीयान्तेनैव सहोपमायाः स्फुटता प्रतीयते न तु पूर्वोक्तघटना ॥

**करणीयमिति** ॥ करणीयं वपुः, करणेभ्यो हितत्वात्, कर्म वा । सत्यमेतत्त्रयमपि सुधावदाह्लादकमित्यर्थः । इयमाह्लादकत्वादिधर्मलोपे वाक्ये श्रौती ।

वाक्ये आर्थी **यथा—**

**आकृष्टेति** ॥ अत्र समशब्दस्योपमेये विश्रान्त्या उपमानसाधर्म्यप्रतीतिरर्थात् । क्रूरादिधर्मलोपोऽत्र ॥

**करवालेति** ॥ अत्र "इवेनेति" समासः । **इयं** दारुणत्वधर्मलोपे समासे श्रौती ।

समासे आर्थी यथा—

**अमृतोपमेति** ॥ अत्र माधुर्यादिलोपः । तद्धिते आर्थी यथा—

**विषेति** ॥ यदि वेत्सि तज्जीवसीत्यन्वयः । अत्र दारु-

---

[1] वपुः इति सङ्केते. [2] समो विभुः.

णधर्मलोपः। इषदपरिसमाप्तं विषं मन इत्युक्त्या आमुखे रूपकावभासः। निर्वाहे तु विषसदृशं मन इति प्रतीत्या प्रातीतिकेन रूपेणोपमैव। ईषदपरिसमाप्तिविशिष्टे प्रकृत्यर्थसदृशेऽर्थे कल्पबादीनां स्मरणात्। ईषदपरिसमाप्तं विषं विषकल्पशब्देनोच्यते। गुणहीनविषजातीयं यत्किञ्चनापि वस्तु विषकल्पशब्दवाच्यमित्यर्थः। मनोविषकल्पशब्दयोस्सामानाधिकरण्यं गौर्वाहिकवद्गुणद्वारेणेति केचित्। वयं तु कल्पप् प्रत्ययस्य सदृशार्थवाचित्वेन विषकल्पं विषसदृशं मन इति प्रतीत्या विशेषणतया सामानाधिकरण्यं ब्रूमः। यतस्सर्वत्र प्रतीतिरेव बलवती। विषशब्दो विषजातेस्तदाधारद्रव्यस्य च वक्ता। जातिश्चैकाऽनवयवा च स्वाश्रयव्याप्त्या समाप्तैव। द्रव्यमपि यत्तद्युक्तं तत्सर्वतः संपूर्णत्वात्समाप्तमेवेतीषदसमाप्तिः कथमिति चेन्न। शब्दाद्धि शब्दार्थौ जातिर्द्रव्यं वा तद्योगाद्वाऽशब्दार्था अपि गुणाः प्रतीयन्ते। तत एतद्द्वयभावे न स्यादीषदसमाप्तिः, एकतराभावे तु स्यात्। तद्विषशब्दो विषजात्या दुष्टत्वादिगुणेन वा हीनं द्रव्यं भवन्नीषदसमाप्त एव। अतश्च विषजातिहीने मनश्शब्दवाच्येऽर्थे केनापि साम्येन वर्तित्वा विषशब्दप्रत्यययुङ्मनश्शब्देनैकाधिकरणः। गुणहीनत्वेन त्वेकाधिकरणः प्रागुक्तः॥

उपमानानुपादाने वाक्यगाऽथ समासगा ॥८८

सअलकरणपरवीसामसिरिविअरणं ण सरसकव्वस्स ।
दीसइ अहव णिसम्मइ सरिसं असंसमेत्तेण ॥ ४०१ ॥

(छाया सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य ।
दृश्यतेऽथवा निशम्यते सदृशमंशांशमात्रेण ॥)

कव्वस्सेत्यत्र कव्वसममिति, सरिसमित्यत्र च णूणमिति, पाठ एषैव समासगा ।

वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि ॥
कर्मकर्त्रोर्णमुलि;

वा शब्द उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे षट्। समासेन, [1]कर्मणोऽधिकरणाच्चोत्पन्नेन क्यचा, [2]कर्तुः क्यङा, कर्मकर्त्रोरुपपदयोर्णमुला च भवेत् ।

उदाहरणम्—

ततःकुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥ ४०२ ॥

सअलेति । अत्र सदृशशब्दवाच्यस्योत्कृष्टत्वेन बलादुपमानत्वं तच्च सरिसमिति विशेषणेनाक्षिप्यते, नात्र साक्षात्प्रतीयते इत्युपमानानुपादानं, सरसकाव्यमुपमेयं, तस्यान्यदुपमानभूतं सरसान्तरं निषेध्यमिति भावः ।

"ततः, इत्यत्र समासासमासगे उपमानोपमेये प्रोक्ते ।

[1] कर्मण्यधिकरणे चो. [2] कर्तरि क्यङ.

तथा—

असितभुजगभीषणासिपत्रो रुहरुहिकाऽहितचित्ततूर्णचारः ।
पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेऽयमासीत् ॥

पौरं सुतीयति जनं समरान्तरेऽसा-
वन्तःपुरीयति विचित्रचरित्रचुञ्चुः ।
नारीयते समरसीम्नि कृपाणपाणे-
रालोक्य तस्य [1]चरितानि सपत्नसेना ॥ ४०४ ॥

मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे ।
स पुनःपार्थसञ्चारं संचरत्यवनीपतिः ॥ ४०५ ॥

**एतद्विलोपे क्विप्समासगा ॥ ८१ ॥**

[2]एतयोर्धर्मवाद्योः । उदाहरणम्—

---

"असित" । इत्यत्र तु समासगे । कुर्भूस्तन्मुदामनायोपतापकः? ।

**रूहरुहि** । औत्सुक्यम् ।

**सुतीयतीति** । कर्मणि क्यच् । अन्तःपुर इवाचरत्यन्तःपुरीयतीत्याधारक्यच् । यन्नित्यर्थः ? क्यङायीरित्यर्थः । नारीयते भिन्नमभिन्नं व्याख्येयम् । मृधे इति । अत्र समासे कर्मकर्त्रोर्णमुलीवलोपः । सुतीयतीत्यादिषु तु त्रिषु प्रत्ययेन साधारणधर्म उच्यते, नेवार्थः ।

**एतदिति** । एतयोर्द्विलोपे एतयोर्द्वयोर्लोपे वेति, क्विप् आयिरुच्यते? ।

---

[1] ललितानि. [2] एतयोर्द्वयोर्ध.

सविता विधवति विधुरपि
सवितराति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति [1]दिनानि च
सुखदुःखवशीकृते मनसि ॥ ४०६ ॥

परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।
[2]संपराये प्रवृत्तोऽसौ राजते राजकुञ्जरः ॥ ४०७॥

**धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते ॥**

उदाहरणम्—

[3]ढुण्ढुण्णन्त मरीहसि कण्टककलिआइं केअइवणाइं ।
मालइकुसुमसरिच्छं भमर! भमन्तो ण पावहिसि ॥४०८॥

---

**विधवतीति** । अत्र क्विब्लोपात्तद्वाच्यस्याचाराख्यधर्मस्यैवस्य च लोपः ।

**राजेति** । राजा कुञ्जर इवेति समासे उपमासाधकधर्मस्यैवस्य च लोपः । राजत्वं तु राजकुञ्जर इत्युपमायां सिद्धायां योज्यत इति न धर्मसद्भावः शङ्क्यः ।

**वृत्ताविति** । समासे ।

ढुंढुंल्लितु परिभ्रमन्, मरिष्यसि भ्रमर भ्रमणशील, दुष्टविटचुम्बितानि शमलीकुलानि गवेषयन् विपद्यसे, न कदाऽपि मालतीमिव सुकुमारसुभगां नारीं प्राप्स्यसीति भावः। तेन तुल्यमित्यादौ तुल्यादि पदानामुपमेय एव विश्रान्तिरिति यद्यप्युक्तं, तथापि सदृक्षशब्दवाच्यस्योत्कृष्टगुणत्वेन बलादुपमानत्वं इत्युपमानस्यैव लोपः ॥

---

[1] दिनान्यपि. [2] संपरायप्र. [3] टुंटुण्णंतो। ढुंढुंल्लितो इति संकेते पाठः.

कुसुमेण समम् इति पाठे वाक्यगा ।

**क्यचि वाद्युपमेयासे ।**

आसे निरासे—

अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥ ४०९ ॥

अत्राऽत्मा उपमेयः ।

**त्रिलोपे च समासगा ॥ ९० ॥**

[1]त्रयाणां वादिधर्मोपमानानाम् । उदाहरणम्—

तरुणिमनि कृतावलोकना
ललितविलास[2]वितीर्णविग्रहा ।
स्मरशरविसराचितान्तरा
मृगनयना [3]हरते मुनेर्मनः ॥ ४१० ॥

---

सहस्रायुधीयति—सहस्रायुधमिवात्मानमाचरतीति नामधातुवृत्तौ । इवादिरात्मोपमेयश्च लुप्तः । आचारधर्मस्तु क्यचोच्यते । तस्य तत्र विधानात् ।

तरुणीति । विलासाय विलब्धो दत्तो विग्रहो यया सा । तथा मृगनयने इव नयने यस्या इति 'सप्तम्युपमान' इत्यादिनोपमानपूर्वस्य समासः उत्तरपदलोपश्च । अत्र धर्मस्येवादेरुपमानस्य च लोपः । यदा मृगशब्द एव लक्षणया मृगनयनवृत्तिः । तदा मृग

---

[1] समासगा, उदाहरणम्. [2] वितीर्ण इत्यत्र विलिब्ध इति पाठः सङ्केते.

अत्र सप्तम्युपमानेत्यादिना यदा समासलोपौ भवतः तदेदमुदाहरणम् । क्रूरस्याचारस्याऽयश्शूलतयाऽध्यवसायात्, अयश्शूलेनान्विच्छति 'आयश्शूलिक' इत्यतिशयोक्तिर्न तु क्रूराचारोपमेय तैक्ष्ण्य-धर्म वादीनां लोपे त्रिलोपेयमुपमा । एवमेकोनविंशतिर्लुप्ताः पूर्णाभिस्सह पञ्चविंशतिः ।

"अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता ।
मम्लौ [1]सा च विषादेन पद्मिनीव हिमाम्भसा ॥ ४११ ॥

एव नयने यस्या इति रूपकसमासस्यैव विषयः । न तूपमासमासस्य ।

यदेति । यदोपमासमासलोपौ तदा त्रिलोपे समासगा, अन्यथा तु नास्ति त्रिलोपिन्युपमा ।

आयश्शूलिक इति । अत्रार्थान्विषणोपायादिक्रूराचारोऽयश्शूलतयाऽध्यवसीयते । तथाऽत्रायश्शूलेनेत्युपमानं शब्दोक्तं, शेषं तु तैक्ष्ण्यादिधर्मक्रूराचारोपमेयेवादिरूपं त्रयमर्थसामर्थ्यगम्यम् । भाष्कारोऽप्याह । "न तिङन्तेनोपमानमस्ति," इति आख्यातं नोपमानं स्यादित्यर्थः । एवं वर्तमानसामीप्यादावप्यतिशयोक्तित्वं वाच्यम् । एवं पूर्णाया भेदाः षट्, लुप्तायास्त्वेकोनविंशतिः । तथाहि—धर्मस्य लोपे पञ्च, उपमानस्य द्वौ, वादेः षट् धर्मवाद्योः द्वौ, धर्मोपमानयोर्द्वौ, वाद्युपमेययोरेकः, त्रयाणामेक इति । लोप इति सर्वत्र योज्यम् ।

अनयेनेति । अत्र म्लानत्वमभिन्न एको धर्मः ।

[1] साऽथ.

इहाभिन्ने साधारणे धर्मे—

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥४१२॥

इति [1]भिन्ने च तस्मिन् एकस्यैव बहूपमानोपादाने मालोपमा । यथोत्तरमुपमेयस्योपमानत्वे पूर्ववदभिन्नभिन्नधर्मत्वे—

अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थिततेः ।
भणितिरिवमतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला ॥

---

ज्योत्स्नेवेति । अत्र नयनानन्दहेतुत्वान्नयनानन्दः । हेत्वलङ्कारोऽत्र पराशयेन । नयनानन्दादिको भिन्नानेको धर्मः ।

मालेति । माला स्रक्, तद्रूपोपमा सा तथा, यथा—तन्तावेकस्मिन्ननेकपुष्परत्नादियोगः, तथैकस्मिन्नुपमेयेऽनेकोपमानयोगः । यद्वोपमानानां माला पङ्क्तिस्तयोपमा ।

अनवरतेति । अत्र विमलत्वमभिन्नो धर्मः, मतिरिवेत्यत्र तु माधुर्यादिर्भिन्नो धर्मः । एवंविधेति भणनादेकदेशविवर्तिन्युपमा यथा—

"नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरश्श्रियः ।
पदेपदे विभान्ति स्म चक्रवाकै*स्स्वनैरिव" ।

अत्र सरश्श्रीणां नायिकात्वं न समासोक्त्या, विशेषणसाम्याभावात् । तस्मादुपमैकदेशविवर्तिनी वाच्यैव यथाऽन्यैरुक्ता ।

---

[1] भिन्ने वा तस्मिन्. * स्तनैरिव इति स्यात्.

मतिरिव मूर्तिर्मधुरा मूर्तिरिव सभा प्रभावाचिता ।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ॥४१४॥

इत्यादिका रशनोपमा च न लक्षिता । एवंविधवैचिञ्य सहस्रसंभवात् । उक्तभेदाऽनतिक्रमाच्च ॥

**उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ॥**

**अनन्वयः**

उपमानान्तरसंबन्धाभावोऽनन्वयः ।

उदाहरणम्—

न केवलं भाति नितान्तकान्ति-
र्नितम्बिनी सैव नितम्बिनीव ।
यावद्विलासायुध[1]लासवासा-
स्ते तद्विलासा इव तद्विलासाः ॥ ४१५ ॥

**विपर्यास उपमेयोपमा तयोः ॥ ११ ॥**

तयोरुपमानोपमेययोः, परिवृत्तिरर्थात् वाक्यद्वये, इतरोपमानव्यवच्छेदपरा उपमेयेनोपमा इति उपमेयोपमा ।

उदाहरणम्—

---

अनन्वय इति । अयं नोपमा । वास्तवद्वित्वाभावात् । विलासायुधः कामः, लासः क्रीडा, अत्र नितम्बिनी नितम्बिनीवेति, विलासा विलासा इवेति भेदाभावादुपमानतयाऽनुपपद्यमानमन्यव्यावृत्तौ लक्षणयाऽवतिष्ठते।

---

[1] लास्यवासा.

कमलेव मतिर्मतिरिव कमला
तनुरिव विभा विभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी
सततं विभाति बत यस्य ॥ ४१६ ॥

**संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ॥**

समेनोपमानेन ।

उदाहरणम्—

उन्मेषं यो मम न सहते [1]जातिवैरी निशाया-
मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः ।
नीतश्शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-
ल्लग्ना मन्ये ललिततनु ! ते पादयोः पद्मलक्ष्मीः ॥ ४१७ ॥

---

कमलेति ॥ अत्र पूर्ववाक्यात्सादृश्यावगतौ पुनरिह सादृश्यमुच्यमानमनन्यार्थत्वे सत्यन्यव्यावृत्तिं लक्षयति । अत्र पूर्वत्र चैतयोः सदृशं नान्यदस्तीति भावः ॥

उत्प्रेक्षेति । उपमानगतगुणक्रियाभिसम्बन्धादुपमानत्वेनोपमेयस्य सम्भावनमुत्प्रेक्षा । अन्यधर्माणां स्वधर्मिभूताद्वस्तुन उत्कालितानां रसभावाद्यभिव्यक्त्यनुगुणतया वस्त्वन्तराध्यस्तत्वेन लब्धप्रकर्षाणामीक्षणमुत्प्रेक्षा । तस्याश्च मन्ये शङ्के ध्रुवमिवाद्या व्यञ्जकाः ॥

उन्मेषमिति । विकासम् । अत्र हर्षो गुणः शत्रूच्छेदेनोपकारिणं प्रति सर्वस्यापि स्यादिति । स पद्मलक्ष्म्यामसम्भवन्नपि

---

[1] जातु वैरी.

लिम्पतीव तमोऽङ्गानि [1]वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव [2]दृष्टिर्विफलतां गता ॥४१८॥

इत्यादौ व्यापनादि लेपनादिरूपतया संभावितम् ।

---

सम्भावितः ।

लिम्पतीति ॥ अत्र तमोगतत्वेन लेपनक्रियाकर्तृत्वोत्प्रेक्षायां व्यापनादि निमित्तं गम्यं। व्यापनादौ तूत्प्रेक्षाविषये निमित्तमन्यदन्वेष्यं स्यात् । न च विषयस्य गम्यत्वं युक्तं, तस्योत्प्रेक्षिताधारत्वेन प्रस्तुतस्याभिधातुमुचितत्वात् । यत्तु व्यापनाद्युत्प्रेक्षाविषयमत्रोचे, तच्चिन्त्यम् । व्याख्याविशेषोऽलङ्काराणामलङ्कारसर्वस्वात् ज्ञेयः ।

"अकालसन्ध्यामिव धातुमत्ताम्"

"स्थितः पृथिव्या इव मानदण्डः"

"भुगतामिव कौमुदीम्"

"रम्भामिव भुवं गताम्"

इत्यादि तूत्प्रेक्षैव । धातुमत्तादेर्हि प्रत्यक्षेणैवाकालसन्ध्यादिसादृश्यमुपलभ्याकाले सन्ध्या न स्यादित्यसम्भाव्यवस्त्वध्यवसायस्य सम्भावना क्रियते—अकालसन्ध्यामिवेति । प्रत्यक्षोपलम्भे च न युक्तचन्तराकाङ्क्षा । उपमानस्यासम्भवान्न तूपमा ।

रवेरिवान्धकारश्रीः कालधर्म इवामृतात् ।
अनीतिः पुरुषादस्मादहो कौतूहलं महत् ॥

---

[1] किरतीवा.

[2] दृष्टिर्निष्ठुरतां । दृष्टिर्निष्फलतां.

**ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः॥ ९२॥**

भेदोक्तौ यथा—

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याऽऽजौ त्वां विदधति [1]विकल्पान् प्रतिभटाः ॥

भेदोक्तावित्यनेन न केवलमयं निश्चयगर्भः, यावन्निश्चयान्तोऽपि सन्देहः स्वीकृतः । यथा—

---

इतिवदसम्भाव्योपमेयधर्मदर्शनाभावादसम्भवोपमाऽपि न ।

"भारं वहतीव पुंगवः"

"पयो ददातीव स्त्रीगवी"

इत्यादौ तु ह्यत्वाभावान्नोत्प्रेक्षा । क्वापि क्विब्विधावामुखे उपमाच्छया, निर्वाहे तूपमानस्य प्रकृते सम्भवौचित्यात्संभावनोत्थाने उत्प्रेक्षा । एवं यथा—

"यस्याज्ञया समं पादपद्मद्वयनखद्युतिः ।
मालतीमाल्यति तरां नमद्भूपालमौलिषु" ॥

संशय इति ॥ यत्राप्रस्तुतेन संशयवता वचसा प्रस्तुतमुत्कृष्यते स सन्देहालङ्कारः । अयं च प्रतिभोत्थापितश्चमत्कारीति स्थाणुर्वा नरो वा इत्यादौ नालङ्कारता । तत्रोपमेयमुपमानादभित्त्वा भित्त्वा वोच्यते । स च निश्चयगर्भो निश्चयान्तः शुद्धश्चेति त्रिधा । तत्र भेदोक्तौ निश्चयगर्भो यथा—

**अयमिति** । अत्रादावन्ते च संशयः, मध्ये तु तुरगैरित्यादिना भेदोक्तौ निश्चयः ॥

---

[1] वितर्कान्.

इन्दुः किं क्व कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम् ।
ललितसविलासवचनैः मुखमिति हरिणाक्षि! निश्चितं परतः॥

किन्तु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमान इत्युपेक्षितो भट्टोद्भटेन ।

तदनुक्तौ यथा

[1]अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ४२२ ॥

---

इन्दुरिति । अत्र क्व कलङ्केत्यादिः भेदकोक्तिः । आदौ संशयोऽन्ते निश्चयः ॥

किन्त्विति । अयं भावः । निश्चितमित्युक्त्या निश्चयस्य न व्यङ्ग्यत्वं किन्तु वाच्यत्वं व्यङ्ग्यत्वे चायमिति ।

भेदोक्तेरभावात् सन्देहनिर्वाहे शुद्धो यथा—

अस्या इति ॥ अत्र कान्तद्युतिरिति युक्तः पाठः । निर्वाहे निर्माणस्यैव श्रूयमाणत्वान्न कान्तिप्रदानस्य । विधिः स्वस्वविशेषणविशिष्टचन्द्रादितया भूत्वैनां चक्रे । यद्वा नैतां पुराणप्रजापतिरकार्षीत्, किन्तु चन्द्रादिः, कान्तिमत्त्वसरसत्वसुकुमारत्वादिधर्मदर्शनात् । यो हि स्वयं कान्तद्युतिः शृङ्गारैकरसः पुष्पाकरश्च स एव कान्तिमत्सव*सौकुमार्यवद्वस्तु कर्तुं समर्थः । अत एवायमर्थः पूर्वोक्तविशेषणत्रयस्योत्तरार्धे विशेषणत्रयेण यथासङ्ख्यं व्यतिरेकोक्त्योपोद्बलितः । स्रष्टुः सृष्टिसम्बन्धेऽप्यसम्बन्ध उक्त इत्यतिशयो-

---

[1] अस्याः सृष्टिविधौ.        * कान्तिमत्सरससौकुमार्येति स्यात्.

## तद्रूपकमभेदो य उपमानोपमेययोः ॥

क्तिरपि । अत्र च स खलु तुरगैरित्यादिवन्न भेदोक्तिः । चन्द्रादयो ह्येवंविधा इत्यनुक्तेः । उत्तरार्धेन सन्देहनिर्वाहाच्च शुद्धत्वम् । तथा—

"रञ्जिता नु विविधास्तरुशैला नामितं तु गगनं स्थगितं नु"

अत्र ध्वान्ताद्यैः तर्वादि न व्याप्तं । किन्तु रञ्जितमित्याद्युत्प्रेक्षितं सन्देहद्वारेणेत्युत्प्रेक्षाश्रयेण सन्देहद्योती तुशब्दः । अन्ये तु तुशब्दः संभावनाद्योतकत्वादुत्प्रेक्षामेवाहेत्याहुः । "अयं मार्तण्ड" इत्यत्रोपमेयस्योपमानेनाभेदे पश्चाद्भेदे प्रोच्यमाने यद्यप्यादौ रूपकव्यतिरेकावभासस्तथापि सङ्करधीर्न कार्या । सन्देहस्यैव निर्वाहात् । इतरौ तु छायामात्रेण सन्तावप्यसत्कल्पाविति । यद्वा रूपकव्यतिरेकयोरुत्कटतया भेदेन भासनादत्र न सङ्करः । उत्कटाभेदे हि स स्यात् । तर्हि संसृष्टिर्न । उपकार्योपकारकत्वेन नैरपेक्ष्याभावात् ।

**तद्रूपकमिति** । रूपयत्येकतां नयतीति रूपकम् । अभेद इति भणनादभेदप्राधान्ये रूपकं स्यादिति लब्धम् । तथा मुखं चन्द्र इत्यादि रूपके चन्द्रेण स्वगुणा लक्ष्यन्ते । तैर्मुखगुणाः तैरपि मुखम् । ततश्च सामानाधिकरण्यं मुखचन्द्रयोर्गुणद्वारेण ताद्रूप्यादिप्रतीत्योपपद्यते । अत एव च भेदेऽप्यभेदप्रतीतिः ॥

अतिसाम्यादनपह्नुतभेदयोरभेदः—

**समस्तवस्तुविषयं श्रौता आरोपिता यदा ॥ ९३**

आरोपविषया इवाऽऽरोप्यमाणा यदा शब्दोपात्ताः, तदा समस्तानि वस्तूनि विषयोऽस्येति समस्तवस्तुविषयम् । आरोपिता इति बहुवचनमविवक्षितम् ।

यथा—

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी·

---

**अतिसाम्यादिति** ॥ साम्यमात्रे उपमा । अतिसाम्ये तु रूपकम्, सर्वथाऽतिसाम्ये पुनरप्रस्तुतप्रशंसातिशयोक्ती । अत एव "तद्रूपकमभेदो यः" इति सूत्रे तद्रूपकमभेद एव य इति नावधारणं कृतम् । इदं तत्वं—भेदे ज्ञातेऽपि यत्राभेदप्रतीतिरिव, अभेदप्रतीतिः, अभेदप्रतीतिरेव, तत्र क्रमेणोपमारूपकातिशयोक्त्याद्या ज्ञेयाः । यत्र त्वज्ञाते भेदे किलाभेदप्रतीतिरेव तन्मिथ्याज्ञानम् । तत्र न कोऽप्यलङ्कारः । **अनपह्नुतेति** ॥ अपह्नुतभेदयोरुपमानोपमेययोस्त्वप्रस्तुतप्रशंसातिशयोक्ती स्याताम् । आरोपविषयो ज्योत्स्नादिः । आरोप्यमाणो भस्मादिः ॥

**अविवक्षितमिति** ॥ अनेनारोपितावारोपिता इति च लब्धम् ॥

**ज्योत्स्नेति** ॥ चन्द्र एव मुद्राकपालम् । अत्र पादत्रये समस्त वस्तुविषयं रूपकम् । चतुर्थे पादे त्वपह्नुतिः । परिमलशब्दः स्वरूपार्थः ॥

न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य छलेन ॥ ४२२ ॥

अत्र पादत्रये अन्तर्धानव्यसनरसिकत्वमारोपितधर्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्सङ्कराशङ्का न कार्या[1] ।

**श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत् ॥**

केचिदारोप्यमाणाः शब्दोपात्ताः, केचिदर्थसामर्थ्यादवसेयाः—इत्येकदेशे विवर्तनादेकदेशविवर्ति । यथा—

जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअम् ।
रससम्मुही वि सहसा परम्मुही होइ रिउसेणा ॥ ४२३ ॥

(छाया—यस्य रणान्तःपुरे कुर्वतो मण्डलाग्रलताम् ।
रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥)

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तम्—

मण्डलाग्रलताया नायिकात्वं रिपुसेनायाश्च प्रतिनायिकात्वमर्थसामर्थ्यादवसीयत इत्येकदेशे विशेषेण वर्तनादेकदेशविवर्ति ।

---

रसिकत्वमिति ॥ रात्रिरेव कापालिकीति रूपकसमासे कापालिक्याः प्राधान्ये तस्याः सचेतनत्वादन्तर्धानव्यसनरसिकत्वं युक्तमेव । रात्रिः कापालिकीवेत्युपमासमासे तु रात्रेः प्राधान्यं स्यात्ततः तस्या अचेतनत्वादन्तर्धानव्यसनरसिकत्वं न घटत इति भावः ॥

एकदेशेति ॥ एकदैकस्मिन् काले ईशः शाब्दत्वात्समर्थो विवर्तो रूपणाविधिः यत्र तत्तथेति वा व्युत्पत्तिः ॥

---

[1] इत उत्तरं एवं रूपकेणैव निर्वाह इति क्वचित् पाठः.

**साङ्गमेतत् ।**

उक्तद्विभेदं सावयवम् ।

**निरङ्गं तु शुद्धं ।**

यथा—

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥४२४॥

**माला तु पूर्ववत् ॥ १४ ॥**

---

साङ्गमेतदिति । न केवलं यत्र तस्यैव रूपणं अपि तु तदङ्गस्यापि ।

द्विभेदमिति । पूर्वोदाहरणयोः समस्तवस्त्वेकदेशविवर्तिविषयतयेत्यर्थः ।

निरङ्गमिति । निरवयवं, यत्र केवल एवाङ्गी रूप्यते नाङ्गानि तन्निरङ्गं, यथा—प्रेमेति । अत्र लताङ्गिनी (ङ्गी) रूपिता न तु तदङ्गं पत्रादीति शुद्धम् । प्रेमैव लतिकेत्यत्रान्यत्रापि रूपकसमासे मयूरव्यंसकादित्वादेवशब्दलोपः । उपमासमासे तु सर्वत्र व्याघ्रादित्वादिवशब्दलोपः । अत्र तु लतायाः सेचनमानुकूल्यादारोपितधर्म एवेति रूपकस्य साधकं प्रमाणमिति न सन्देहसङ्करः ।

केवलं शुद्धरूपकमुक्त्वा मालारूपकमाह । मालेति ॥

मालोपमायामिव [1]एकस्मिन् बहव आरोपिताः ।

यथा—

सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मणकर्म [2]नर्मरहसामुल्लासनावासभूः ।
विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया
[3]बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥४२५॥

**नियतारोपणोपायः स्यादारोपः परस्य यः ।**
**तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥ १५ ॥**

यथा—

विद्वन्मानसहंस वैरिकमलासङ्कोचदीप्तद्युते
दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर ।
सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः॥४२६॥

---

**सौन्दर्यस्येति** । रहांसि रहस्यानि । अत्र प्रियारूप एक एवारोपविषयो मुखाद्यङ्गैर्विना (?) तनुगुणैस्तरङ्गिण्याद्यैः रूपित इति निरङ्कम् ।

**नियतेति** । नियतं ध्रुवं तडागादेरारोपणमुपायो यस्य स तथा। यद्वा नियतस्यारोपणमुपायो यस्य स तथा। **परस्येति** । हंसादेः

**विद्वदिति** । सती गौरी ; दक्षः तत्पिता; विजयस्यार्जुनस्य

---

[1] एकस्मिन्निह बहव. [2] नर्मवचसामु. [3] प्राणाःपञ्च.

अत्र मानसमेव मानसम्, कमलायाः सङ्कोच एव कमलानामसङ्कोचः, दुर्गाणाममार्गणमेव दुर्गाया मार्गणम्, समितां स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्यामप्रीतिः, विजयः परपराभव एव विजयोऽर्जुनः, एवमारोपणनिमित्तो हंसादेरारोपः ।

यद्यपि शब्दार्थालङ्कारोऽयमित्युक्तम्, वक्ष्यते च, तथापि प्रसिध्यनुरोधादत्रोक्तः । [1]एकदेशविवर्ति हीदमन्यैरभिधीयते।

---

प्राग्भावेऽग्रजत्वे ; भीमस्सन् भीमः न तु भीम इव भीमः, उपमात्वप्रसङ्गात् । वैरिञ्चं ब्राह्मम् । अत्र मानसाद्या वाचकाः श्लिष्टाः ।

एवमारोपणेति । एवमारोपणं निमित्तं यस्यारोपस्येति, पूर्वं मानसादीनां मानसत्वादिकमारोप्यते । ततो हंसाद्यारोप इति परम्परितशब्दार्थः ।

यद्यपीति । अयं भावः—मानसादीनामन्वयव्यतिरेकाभ्यां अपरावृत्तिसहत्वे हंसादीनां तत्सहत्वे उभयालङ्कारः परम्परितरूपकम् ।

उक्तमिति । पूर्वं शब्दश्लेषपुनरुक्ताभासयोः ।

वक्ष्यत इति । सङ्करालङ्कारे ।

अन्यैरिति । उद्भटाद्यैः परम्परितमेकदेशविवर्तिनाम्नोचे । तथा 'त्वमेव हंस' इत्याद्यारोपणपूर्वको मानसमेव मानसमित्याद्यारोप इत्यन्ये ।

---

[1] एकदेशवर्तीदमन्यैरप्यभि.    [2] एकदेशवृत्ति हीद.

भेदभाजि यथा—

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः ।
सङ्ग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन्! राजति वीरवैरिवनिता वैधव्यदस्ते भुजः॥४२७॥

अत्र जयादेर्भिन्नशब्द[1]वाच्यस्य कुञ्जरत्वाद्यारोपे भुजस्यालानत्वाद्यारोपो युज्यते ।

अलौकिकमहालोक[2]प्रकाशित जगत्त्रयः ।
स्तूयते देव! सद्वंशमुक्तारत्नं न कैर्भवान् ॥४२८॥

निरवधि च निराश्रयं च यस्य

---

भेदभाजीति । अश्लिष्टे वाचक इत्यर्थः ।

आलानमिति । अत्र लीलोपधानं श्रिय इति परम्परितमप्येकदेशविवर्ति । श्रियः स्त्रीत्वानुक्तेः । अत्र दृष्टान्तद्वये श्लिष्टाश्लिष्टशब्दमालया परम्परितरूपकं ।

इदानीं श्लिष्टाश्लिष्टशब्दं केवलत्वेन परम्परितरूपकं दृष्टान्तद्वयेनाह—

अलौकिकेति । आलोको ज्ञानं तेजश्च । वंशो वेणुरन्वयश्च । अत्र वंशस्य वंशत्वारोपो राज्ञो रत्नत्वारोपणोपायः ।

निरवधीति । इह भवान् पूज्यः कूर्ममूर्तिर्विष्णुरित्यतिश-

---

1 वाच्यकुञ्जर. 2 प्रसादितजगत्त्रयम्.

स्थितमनिवर्तितकौतुकमपश्रम् ।
प्रथम इह भवान् स कूर्ममूर्ति-
र्जयति चतुर्दशलोकवल्लिकन्दः ॥४२९॥

इति च अमालारूपकमपि परम्परितं द्रष्टव्यम् ।

किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥४३०॥

इत्यादि रशनारूपकं न वैचित्र्यवदिति न लक्षितम् ।

---

योक्तिः । लोका एव वल्ली तस्याः कन्दः । अत्र लोकानां वल्लीत्वारोपः कृष्णस्य कन्दत्वारोपणोपायः । वाचकश्चात्र न श्लिष्टो वल्लिकन्द इति, पूर्वत्र तु श्लिष्टः सद्वंश इति । एवं शिष्टाश्लिष्टशब्दं मालया द्विधा, केवलत्वेन च द्विधेति चतुर्धा परम्परितम् । साङ्ग निरङ्गयोर्मालाकेवलत्वेन प्रत्येकं द्विभेदत्वे चतुर्भेदत्वं । तदेवमष्टधा रूपकम् । अन्येऽपि प्रत्येकं वाक्योक्तसमासोक्तादिभेदाः सन्ति । तेऽन्यतोज्ञेयाः ।

**किसलयेति** । अत्र किसलयान्येव कराः करा एव कमला-नीत्यादिक्रमेण सर्वेषां मिथस्संघटनाद्रशनासादृश्यम् ।

"सत्कीर्तिमालती क्षारमासः? पिशुनसङ्गम" इत्यादौ वैध-र्म्येण रूपकम् । तथाऽऽरोपविषयाणां बहुत्वादारोप्यस्यापि बहुत्वं यथा—"कुवलयोल्लासिनो नखेन्दवः" इत्यादाविन्दोरेकत्वेऽपि नखेषु

**प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः ।**

उपमेयमसत्यं कृत्वा उपमानं सत्यतया [1]यत् स्थाप्यते सा त्वपह्नुतिः ।

उदाहरणम्—

अवाप्तः प्रागल्भ्यं परिणतरुचश्शैलतनये !
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥४३१॥

---

प्रत्येकमारोपाद्बहुत्वम् ।

निषिध्यान्यदिति । अन्यदुपमानम्, तच्च प्रकृतमप्रकृतं वा । रूपके ह्यारोप्यारोपविषययोरनपह्नवे स्फुटेन रूपेणादावेव सादृश्यं प्रतीयते । अत्र तूपमेयस्यापह्नुत्या मुखे पारमार्थिकस्यासत्यत्वं तदितरस्य सत्यत्वं, प्रतीत्यनिर्वाहे आरोप्यारोपविषययोः सादृश्यं प्रतीयते, स्थूलतयाऽपह्नवे विश्रान्तिस्तात्पर्येण तु वाक्यस्य सादृश्य एवेति भावः ।

अवाप्त इति । अत्र कलङ्कनिशे प्रकृते, द्वयोरपि वर्ण्यत्वेन प्रस्तुतत्वात् ।

---

[1] यत् ख्याप्यते सा त्वपह्नुतिः.

इत्थंवा—

बत सखि! कियदेतत्पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन् रागिलोके तथाहि ।
उपवनसहकारोद्भासि भृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥४३२॥

अत्र हि न सभृङ्गाणि सहकाराणि अपि तु सकालकूटाश्शरा इति प्रतीतिः ।

एवं वा—

अमुष्मिन् लावण्यामृतसरसि नूनं मृगदृशः
स्मरश्शर्वप्लुष्टः पृथुजघनभागे निपतितः ।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥४३३॥

---

बतेति । अत्र भृङ्गेति प्रकृतमपरं त्वप्रकृततम् । मन्येच्छलाद्याः शब्दा असत्यत्ववाचकाः ।

रोमेति । अत्र रोमावलिवपुरिति शब्दो वस्त्वन्तराभिधायी अपह्नवस्य कारणम् । भङ्ग्यन्तरैरिति । स्वं यथा ।

"आरुरोह चितामिष मालतीविरहादलिः ।
न किंशुकस्य कुसुमे वर्तते जीवितेश्वरि! ॥"

अत्र प्रागारोपः पश्चादपह्नवः । 'इदं ते केनोक्तम्" इत्यत्र त्वारोपपूर्वोऽपह्नवः । स्थानद्वयेऽप्यत्र नेदं कुसुमं कटकं वा

अत्र न रोमावलिः धूमशिखेयमिति प्रतिपत्तिः। एवमियं भङ्ग्यन्तरैरप्यूह्या।

**श्लेषस्स वाक्य एकस्मिन् यत्रानेकार्थता भवेत्॥**

एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थस्स श्लेषः। उदाहरणम्—

उदयमयते दिङ्मालिन्यं निराकुरुते तरां
नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः।
रचयति तरां स्वैराचारप्रवर्तनकर्तनं
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः॥४३४॥

अत्राभिधाया अनियन्त्रणाद्वावप्यर्कभूपौ वाच्यौ।

---

किन्तु चिता स्मरचक्रं वेत्यादिभङ्ग्यन्तराणि भणितिविशेषाः। कदाचित् कथंचित्किमपि काव्ये निवेश्यत इत्यर्थः।

एकार्थेति। न गोशब्दवदनेकार्थानाम्।

उदयेति। उदयस्समृद्धिरपि। दिक् न्यायमार्गः तत्स्थाः प्रजा वा। मालिन्यं कलङ्कोऽपि। निद्राऽऽलस्यमपि। क्रिया धर्मिण्याद्याः (?) अपि। स्वैरा अन्यायिनोऽपि। तेजः प्रतापोऽपि। विभाकरो नाम राजा। वक्ष्यमाणार्थसूचाभिप्रायेणोक्तौ न श्लेषः द्वयोरर्थयोः प्रकृतत्वे वक्तुमनिष्टत्वात् किन्तु वस्तुध्वनिरेव। यथा—"यान्ति न्यायप्रवृत्तस्य इति" अत्र प्रकृतत्वेनार्थोन्याय-निष्ठपुंवृत्तिः, सूचाभिप्रायेण तु रामादिवृत्तिः।

## परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः

प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात् न तु विशेष्यस्य सामर्थ्यादपि [1]यदप्रकृतार्थस्याभिधानं सा समासेन सङ्क्षेपेणार्थद्वयकथनात् समासोक्तिः । उदाहरणम्—

लहिऊण तुज्झ बाहुप्फंसं तीए स कोवि उल्लासो ।
जअलच्छी तुह विरहे ण हुज्जला दुब्बला णं सा॥४३८॥

(छाया—लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः
जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा॥)

अत्र जयलक्ष्मी शब्दस्य केवलं कान्तावाचकत्वं नास्ति ।

## निदर्शना ।

---

भेदकैरिति । उपमेयस्य विशेषणैः परस्योपमानस्योक्तिः ।
विशेष्यस्येति । उपमेयस्य । तस्य श्लिष्टत्वे श्लेषप्राप्तेः ।

लहिऊणेति । तव विरहेण हेतुना मा दुर्बला भूयात् । णं त्वर्थे । अत्र विशेषणानि कान्तया सह तुल्यानि न तु विशेष्यं। जयलक्ष्मीरिति रूपम् । अस्यां विशेषणसाम्यादप्रस्तुतस्य प्रस्तुतविशेषकत्वेन प्रतीतिः । अतो विशेषकत्वात् व्यवहारसमारोपः । रूपसमारोपे तु रूपकं स्यात् । "उपमेयस्यानुक्तौ समानवस्तुन्यासः समासोक्तिः" इति तु वामनः । तन्मतेऽप्रस्तुतप्रशंसाऽन्यथा ज्ञेया ।

---

[1] यदप्रकृतस्याप्य.

अभवन्वस्तुसंबन्ध उपमापरिकल्पकः ॥९७॥

निदर्शनं दृष्टान्तकरणम् ।

उदाहरणम्—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ ४३६ ॥

अत्र उडुपेन सागरतरणमिव मन्मत्या सूर्यवंशवर्णनमित्युपमायां पर्यवस्यति ।

यथा वा,

उदयति विततोर्ध्वरश्मिरज्जा-
वहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा
द्वयपरिवारितवारणेन्द्रलीलाम् ॥ ४३७ ॥

अत्र कथमन्यस्य लीलामन्यो वहतीति तत्सदृशीमित्युप-

---

क्व सूर्येति । अल्पमत्याऽर्कवंशवर्णनमसम्भवद्दार्ष्टान्तिकदृष्टान्त वस्तुनोरौपम्यं कल्पयति । निरपेक्षवाक्यार्थयोर्बिम्बप्रतिबिम्बत्वे दृष्टान्तस्य लक्षणात् । अत्र प्रकृतवाक्यार्थे वाक्यार्थान्तरारोपात्सापेक्षत्वे सम्बन्धानुपपत्तिमूला निदर्शना, न दृष्टान्तः, एषा वाक्यार्थेन निदर्शना । पदार्थेन सा यथा—

उदयतीति । तत्सदृशीमिति । गजलीलातुल्याम् ।

मायां पर्यवसानम् ।

दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्ग-
मादातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं लिलङ्घयिषति [1]ध्रुवमेष देव!
[2]यस्ते गुणान् गदितुमुद्यममादधाति ॥ ४३८ ॥

इत्यादौ मालारूपाप्येषा द्रष्टव्या ।

**स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा ।**

[3]क्रिययैव स्वस्वरूपस्वकारणयोस्संबन्धो यदवगम्यते साऽपरा निदर्शना ।

यथा—

उन्नतं पदमवाप्य यो लघुः
लीलयैव स पतेदिति [4]ध्रुवम् ।
शैलशेखरगतो दृषत्कणः
चारुमारुतधुतः पतत्यधः ॥ ४३९ ॥

---

**दोर्भ्यामिति** । तरङ्गवती नदी । तद्भुजङ्गोऽब्धिः ।

**स्वस्वेति** । स्वं स्वपतनात्मक्रियायाः स्वभावः । स्वहेतुश्च तस्या एव कारणमुन्नतपदाप्तिरूपं । तयोरन्वयः कार्यकारणत्वेन घटना ।

**उन्नतमिति** । अत्र ममेवान्यस्यापि लघोरुच्चैःपदाप्तिः पातान्तेति कार्यकारणयोरन्वयेनोपमानोपमेयत्वाक्षेपे सम्भवद्वस्तुसम्बन्धा निदर्शना, स्वसिद्धये वाच्येनोपमानोपमेयभावरूपार्थान्तर-

---

1 ध्रुवमेष, 2 यत्ते, 3 क्रिययैव स्वरूप. 4 ध्रुवन्.

अत्र [1]पातक्रियया पतनस्य, लाघवे सत्युन्नतपदप्राप्तिरूपस्य च संबन्धः ख्याप्यते ।

**अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥**

[2]अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेपोऽप्रस्तुतप्रशंसा ।

**कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।**
**तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥९९॥**

---

माक्षिप्यत इति ।

अपरेति उद्भटोक्ता ।

पातक्रिययेति । पततिरूपया । पतनस्येति । पतोदित्येवमुल्लिखितस्य, उच्चैःपदाप्तिरूपकारणकार्यस्वरूपस्य ।

कारणस्येति । उच्चैःपदाप्तिरूपस्य ।

अप्रस्तुतेति । इहाप्रस्तुतस्य स्तुतिनिन्दासाम्यैः वर्णना दृष्टा । प्रशंसाऽत्र वर्णना, न स्तुतिः । तच्चाप्रस्तुतमप्रस्तुतत्वादेव वक्तुमयुक्तं सत्प्रस्तुतपरतयोच्यमानं युक्तं स्यात् । प्रस्तुतपरता च कार्यकारणभावसामान्यविशेषभावसारूप्यसम्बन्धैः स्यात् । सैवेति । या प्रशंसा कविभिरप्रस्तुतस्य क्रियते, सा प्रस्तुतपरा, सैव प्रस्तुत प्रशंसैव । तदन्यस्येति । कार्ये प्रस्तुते तदन्यस्य कारणस्येत्यादि क्रमेण चतुष्टयस्य, तथा तुल्ये राजादौ प्रस्तुते तदन्यस्य तुल्यस्य यद्वचो भणनमिति पञ्चधात्वम् । अत्र वाच्यस्य परार्थे स्वसमर्पणमिति लक्षणेन लक्षणा ।

---

1 पातक्रियया निर्दिष्टस्य पतनस्य. 2 अप्राकरणिकस्यार्थस्याभिधानेन.

तदन्यस्य कारणादेः ।

क्रमेणोदाहरणानि—

यातास्किं न मिलन्ति सुन्दरि! पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशाऽसि कथयत्येवं सबाष्पे मयि ।
लज्जामन्थरतारकेण [1] निपतद्धाराश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥४४०॥

अत्र प्रस्थानात्किमिति निवृत्तोऽसीति कार्ये पृष्टे कारणमभिहितम्।

राजन्! राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे! भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते ।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरात्

---

नितरामिति । अग्रेऽपि त्वं कृशा चिन्तया भृशं भवसि यतः ।

हसितेनेति । तथा तया हसितं, यथाऽहं त्वया त्यक्ता सती मरिष्यामीति कारणं सूचितम् ।

कुमारेति । कुमारवरैः । राजशुको वरशुकः । त्वां यात्रोद्यतं ज्ञात्वा द्विषस्ते नष्टाः इति प्रस्तुतो हेतुरूपोऽर्थः । शुकवृत्तान्तस्त्वप्रस्तुतः कार्यरूपः प्रस्तुतार्थं स्वात्मानमर्पयतीत्यर्थः । यद्वा—कारणवत्कीरवृत्तान्तरूपकार्यस्यापि वर्ण्यत्वेन प्रस्तुतत्वे कार्यद्वाराऽऽत्मभङ्ग्यन्तरेण कारणस्योक्तावत्र पर्यायोक्तव्यलङ्कारः । कारणापेक्षया कार्यस्यातिचारुत्वमिति कार्यमेवोच्यते । कारणकार्ययोः प्रस्तुताप्रस्तुतत्वेऽप्रस्तुतप्रशंसा ।

---

[1] निपतत्पीताश्रुणा.

चित्रस्थानवलोक्य [1]शून्यवलभावेकैकमाभाषते ॥४४१॥

अत्र [2]प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयःपलाय्य गता इति कारणे प्रस्तुते कार्यमुक्तम् ।

एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तश्शुचा ॥४४२॥

अत्र अस्थाने जडानां [3]ममत्वसंभावना भवतीति सामान्ये प्रस्तुते विशेषःकथितः ।

सुहृद्वधूबाष्पजलप्रमार्जनम्
करोति वैरप्रतियातनेन यः ।
स एव पूज्यस्स पुमान स नीतिमान्
सुजीवितं तस्य स भाजनं श्रियः ॥

अत्र कृष्णं निहत्य नरकासुरवधूनां [4]यदि दुःखं प्रशमयसि [5]तत्त्वमेव श्लाघ्यः इति विशेषे प्रकृते सामान्यमुदितम् ।

---

मुखादिति । मुखमाकृतिर्लोकात्, एतस्या आकृतेरिदमल्पमित्यर्थः । मुखादित्यपेक्षितक्रियमपादानम् । अत्राम्भोबिन्दौ मणिधीर्विशेषः ।

कृष्णमिति । कृष्णेन नरकासुरे हते तन्मन्त्रिणस्तन्मित्रं प्रत्युक्तिः ।

---

[1] शून्यभवनेऽप्यै । शून्यवलभीष्वेकैक । [2] प्रस्थानोद्यतं ज्ञात्वा ।
[3] महत्वसं. [4] यदि दुःखं शमयसि । [5] तदात्वमेव ।

तुल्ये प्रस्तुते तुल्याभिधाने त्रयःप्रकाराः। श्लेषः समासोक्तिः सादृश्यमात्रं वा [1] तुल्यात्तुल्यस्य ह्याक्षेपे हेतुः।

क्रमेणोदाहरणम्—

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
यायाद्यदि प्रणयने नमहानपि स्यात्।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक्प्रकटिता पुरुषोत्तमेन॥ ४४॥

येनास्यभ्युदितेन चन्द्र? गमितः क्लान्तिं रवौ तत्र ते
युज्येते प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः।

---

पुंस्त्वादिति। पुंस्त्वं विक्रमपुम्भावौ। अधः पातालं नीच तया चलनं च। प्रणयनं याञ्चा। नमहानपि वामनः स्वल्पश्च। पुरुषोत्तमः सन्नरोऽपि। अत्र साधुवृत्तं वाच्यत्वात् प्रस्तुतं। तत्र चाभिधाया नियन्त्रणान्नात्र श्लेषः। विष्णुप्रतिपत्तिस्तु शब्दोत्थात् ध्वनेरेवेति नेहाप्रस्तुतप्रशंसेति चेन्न। साधुवृत्तस्य वाच्यत्वासम्भवात्। न ह्युत्कृष्टोऽपि पुमान् विष्णुवद्वस्तुतया विश्वमुद्धर्तुमीष्टे। आक्षिप्यमाणस्य तु तस्य गुणवृत्त्या तद्वर्णनमविरुद्धं, गुणभूतत्वात्। तस्मादत्र विष्णुवृत्तं वाच्यमप्रस्तुतं च। तेन च प्रस्तुतं साधुवृत्तमाक्षिप्यत इति न ध्वनिः। स ह्यप्रस्तुताक्षेपरूपः स्यात्।

येनासीति। जडधामता शीततेजस्ता मूर्खाश्रयता च। अत्र

---

[1] तुल्यातुल्यान्तरस्य.

क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो [1]मना-
गस्त्वेवं जडधामता तु भवतो यद्व्योम्नि विष्फूर्जसे॥४४५

आदाय वारि परितः सरितां मुखेभ्यः
किं तावदार्जितमनेन दुर्णवेन ।
क्षारीकृतं च [2]बडबादहने हुतं च
पाताळकुक्षिकुहरे विनिवेशितं च ॥ ४४६ ॥

इयं च काचिद्वाच्ये प्रतीयमानार्थानध्यारोपेणैव भवति। यथा—

अब्धेरम्भः स्थगितभुवनाभोगपाताळकुक्षेः
पोतोपाया इह हि बहवो लङ्घनेऽपि क्रमन्ते ।
आहो रिक्तः कथमपि भवेदेष दैवात्तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः ॥ ४४७ ॥

---

पूर्वश्लोके पुरुषोत्तमवद्विशेष्यमर्केन्दुरूपं न श्लिष्टम् । विशेषण श्लिष्टत्वे तु समासोक्तिः तुल्यान्तराक्षेपहेतुः । पूर्वत्र तु श्लेषे द्वयोरपि श्लिष्टत्वात् ॥

इयं चेति । सादृश्यहेतुकाऽप्रस्तुतप्रशंसा ।

अब्धेरिति । आहो इति यद्यर्थे । कल्पः शक्तः । अत्राब्धावपीदृशस्यार्थस्य सम्भवान्नैकान्तेन कस्यापीश्वरस्याक्षेपाकाङ्क्षा। एवं पुंस्त्वादित्यत्र, आदायेत्यत्र च गम्यार्थानध्यारोपः । येनासीत्यत्र तु चन्द्रे सम्बोधनादेरर्थस्यासम्भवादपकारिभ्योऽप्यर्थेच्छो-

---

[1] मनागस्त्वेव. [2] बडवावदने.

क्वचिदध्यारोपेणैव । यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं [1]कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनस्सर्वात्मना सेवते
न च्छायाऽपि परोपकारकरणे मार्गस्थितस्यापि मे ॥४४८॥

क्वचिदंशेष्वध्यारोपेण । यथा—

सोऽपूर्वो रसनाविपर्यय[2]विधिस्तत्कर्णयोश्चापलं
दृष्टिस्सा मदविस्मृतस्वपरदिक्किं भूयसोक्तेन वा ।

---

दरिद्रस्य अध्यारोपः ।

**कस्त्वमिति** । अत्र कथयामीत्येतदाह—श्रूयमाणं निर्वेदकृदपि तवानुबन्धात्कथ्यते । कस्मादिति वैराग्यहेतुप्रश्नः । कथ्यत इत्यादि सनिर्वेदस्मरणोपक्रमं कथंकथमपि निरूप्यते । **वामेनेति** । कु* कूलादिनोपलक्षितः । **वट इति** । फलदानशून्यश्छायामात्रकरणादेव गर्विष्ठः । **छायाऽपीति** । श्मशानाग्निदग्धपल्लवादिस्तरुविशेषो हि† शाखोटकः । मार्गः सतां पन्था अपि । अत्र वृक्षेण सहाचेतनत्वादुक्तिप्रत्युक्त्यसम्भवे तु श्रीमत्पुरुषसेवया खेदवान् दरिद्रमनस्वी कश्चित्पुमान् प्रतीयमानतयाऽध्यारोप्यते ।

**सोऽपूर्व इति** । रसनाविपर्ययो गजानां * ‡शापजोऽलीकजोऽपि । चापलं खलवचश्श्रवणे साम्मुख्यमपि । शून्यकरत्वमदातृ-

---

[1] कस्मादिदं बोध्यते. [2] विधिस्तत्कर्मणश्चा.

* अनुचितेन कुलादिनोपलक्षित इत्यर्थ इति काव्यानुशासनव्याख्या.

† शाखोटको भूतावासो वृक्ष इति उद्योते. ‡ शापनिदानन्तु महाभारते आनुशासनिकपर्वणि ८५ तमेऽध्याये.

सर्वं विस्मृतवानसि भ्रमर! हे यद्वारणोऽद्याप्यसा-
वन्तश्शून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥४४९॥

अत्र रसनाविपर्ययः शून्यकरत्वं च भ्रमरस्यासेवने न हेतुः। कर्णचापलं तु हेतुः। मदःप्रत्युत सेवने निमित्तम्।

**निगीर्याध्यवसानं तु प्रकृतस्य [1]परेण यत्।**
**प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम्॥१००**
**[2]कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः॥**
**विज्ञेयातिशयोक्तिस्सा-**

उपमानेनान्तर्निगीर्णस्योपमेयस्य यदध्यवसानं सैका। यथा—

कमलमनम्भसि कमले कुवलयमेतानि कनकलतिकायाम्।
सा च सुकुमारसुभगेत्युत्पात[3]परम्परा केयम्॥ ४५०॥

---

त्वमपि।

हेतुरिति। तेन वाच्येऽर्थे प्रतीयमानस्य कस्यापि कुस्वामिसेवकस्याध्यारोपः कार्यः। चापलमसेवने मदश्च सेवने हेतुः। प्रस्तुताप्रस्तुतयोः वाच्यत्वे विशेष्यस्यापि श्लिष्टत्वे अर्थश्लेषः। विशेषणानां श्लिष्टत्वे प्रस्तुतस्य वाच्यत्वे अन्यस्य तु गम्यत्वे समासोक्तिः। अप्रस्तुतस्य वाच्यत्वे प्रस्तुतस्य गम्यत्वेऽप्रस्तुतप्रशंसेति विवेकः।

कमलमिति। अत्र भेदेऽतिशयोक्तिरित्येको भेदः। मुखादेः कमलादिरूपतयाऽध्यवसाने प्रथमो भेदः। कमलमनम्भसीत्यादियोगे त्वसम्बन्धे सम्बन्धरूपातिशयोक्तिः। तथा विरोधालङ्कारोऽपि।

---

[1] समेन. [2] कार्यकारणयोश्चैव पौ. [3] परम्परा चेयम्.

अत्र मुखादि कमलादिरूपतयाऽध्यवसितम्। यच्च [1]तदेवा-न्यत्वेनाध्यवसीयते साऽपरा। यथा—

अण्णं लडहत्तणअं अण्णाविअ काबि वत्तणच्छाआ।
सामा सामण्णपआपइणो रेह च्चिअ ण हो इ॥ ४९१॥

(छाया—अन्यत्सौकुमार्यमन्यैव च काऽपि वर्तनच्छाया।
श्यामा सामान्यप्रजापते रेखैव च न भवति॥)

यद्यर्थस्य यदिशब्देन चेच्छब्देन वोक्तौ यत्कल्पनम्। (अ-र्थादसंभविनोऽर्थस्य) सा तृतीया। यथा—

राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात्॥ ४९२॥

---

तदेवेति। प्रस्तुतमभिन्नमन्यत्वेन भेदेनाध्यवसीयते।

अण्णमिति। रेखा मर्यादा। वत्तणं वक्त्रं वर्तना वा। अत्रान्यल्लटभत्वमित्यभेदेऽप्यन्यत्वेन भेदोक्तिरिति द्वितीयः। अत्रा भेदे भेद इति वाक्योपपत्तये वास्तवलटभत्वस्य सातिशयं कविकल्पितं लटभत्वं द्वितीयं कल्पनीयम्। उत्तरार्धे सम्बन्धेऽप्यसम्बन्धरूपा-तिशयोक्तिः॥

राकेति। राकेन्दोर्निर्लक्ष्मत्वस्य बहिरसम्भवेऽपि कविना सम्भवद्रूपतयोक्तावास्यं निरुपममित्यर्थः। एषोत्पाद्योपमेति रुद्रटः। अद्भुतोपमेति दण्डिमुख्याः। अयं सम्बन्धेऽप्यसम्बन्धरूपस्तृतीयः।

---

[1] तदेवान्यत्वेनानुमीयते.

कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वमुक्तौ चतुर्थी । यथा—

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभलोचनविषयं [1]त्वया भजता ॥ ४५२ ॥

प्रतिवस्तूपमा तु सा ॥ १०१ ॥
सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।

क्वचिदसम्बन्धे सम्बन्धो यथा—*

*"पुष्पं प्रवालोपहितम्, इति
अत्रासम्बन्धे सम्भावनया सम्बन्धः ।

**हृदयमिति** । अत्र स्मराधिष्ठानं कार्यं । नायकाधिष्ठानं तु कारणं, तयोर्विपर्यासः कृतः । प्राक्कार्यं पश्चात्कारणमिति विपर्ययस्तुल्यकालत्वेनापि स्यात् । यद्वा—यथौचित्यमौचिती, तथा पौर्वापर्यं पौर्वापरी, तस्या अविपर्ययः ईषद्विपर्ययस्तुल्यकालत्वं तत्रातिशयोक्तिर्यथा—

अविरलविलोलजलदः कुटचार्जुननीपसुरभिवनवातः ।
अयमायातः कालो हन्त हताः पथिकगेहिन्यः ॥

**प्रतीति** ॥ वस्तुशब्दस्य वाक्यार्थवाचित्वे प्रतिवाक्यार्थमुपमा साम्यमित्यन्वर्थत्वाश्रयणात् केवलं काव्यसमयात्पर्यायान्तरेण पृथङ्निर्देशः । अयं भावः—सामान्यधर्मस्यैवाद्यनुक्तौ सकृन्निर्देशे दीपकतुल्ययोगिते । असकृन्निर्देशे शुद्धसामन्यरूपत्वे प्रतिवस्तूपमा । सामान्यधर्मस्य बिम्बप्रतिबिम्बभावे तु दृष्टान्तः ॥

[1] त्वया व्रजता.

* पुष्पं प्रवालोपहितं यदि स्यात् मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्य ताम्रोष्ठपर्यस्तरुचेः स्मितस्य ॥

साधारणो धर्म उपमेयवाक्ये चोपमानवाक्ये च कथितपदस्वस्य दुष्टतयाऽभिहितत्वाच्छब्दभेदेन यदुपादीयते, सा वस्तुनो वाक्यार्थस्योपमानत्वात् प्रतिवस्तूपमा। यथा—

देवीभावं गमिता परिवारपदं [1]कथं भजत्येषा।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम्॥४५४॥

यदि दहत्यनलोऽत्र किमद्भुतं
यदि च गौरवमद्रिषु किं ततः।
लवणमम्बु सदैव महोदधेः
प्रकृतिरेव सतामविषादिता॥४५५॥

[2]इत्यादिर्मालाप्रतिवस्तूपमा द्रष्टव्या। एवमन्यत्राप्यनुसर्तव्यम्।

**दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्॥१०२॥**

देवीति। अत्र परिवारपदत्वं साधारणो धर्मः। परिभोगयोग्यमिति पर्यायेण भिन्न उक्तः। परिवारपदत्वपरिभोगयोग्यत्वयोरेकार्थत्वात्।

प्रकृतिरेवेति। इदमेकं प्रकृतं, शेषं त्रयमुपमानभूतम्।

एवमिति। यथा—"हरवन्न विषमदृष्टिः" इत्यादौ व्यतिरेके व्यतिरेकमाला, अत्रैकस्य बहुभ्यो भेदेनोक्तिः। अस्यामिवाद्यभावेऽपि प्राकरणिकत्वालोचनयौपम्यावगतिः।

दृष्टान्त इति। अत्र पुनश्शब्दः पूर्वस्माद्विशेषकः। विशे-

[1] कथं भजत्वेषा.
[2] इत्यादिका मालाप्रतिव.

एतेषां साधारणधर्मादीनां । दृष्टोऽन्तः (निश्चयो) यत्र स दृष्टान्तः ।

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।
अलोके हि हिमांशोः विकसति [1]कुसुमं कुमुद्वत्याः ॥ ४९६ ॥

एष साधर्म्येण वैधर्म्येण तु—

तवाहवे साहसकर्मशर्मणः करं [2]कृपाणान्तिकमानिनीषतः ।
भटाः परेषां विशरारुतामगुः दधत्यवाते स्थिरतां हि पांसवः॥

---

षश्च बिम्बप्रतिबिम्बभाव एव ।

सर्वेषामिति । न तु प्रतिवस्तूपमायामिव साधारणधर्मस्यैव द्विः प्रयोगः । किन्तूपमेयादेरपि । निश्चयो यत्रेति भणनाद्यत्र विशेषेण विशेषो बिम्बप्रतिबिम्बभावे सति समर्थ्यते स दृष्टान्तः । निश्चयस्य विशेषादेव सम्भवात् । विशेषरूपतयैव दृष्टान्ते बिम्बप्रतिबिम्बभावयोगात् । विशेषस्य सामान्येन समर्थने त्वर्थान्तरन्यासः ।

त्वयीति । यथा कुमुदिन्याश्चन्द्रालोके तद्गुणपक्षपातित्वेन कुमुदं विकसति तथा त्वद्दर्शने गुणपक्षपातात्तस्या मन इति सर्वं प्रतिबिम्बनम् ।

तवेति । अत्र विशरारुतागमनादीनां स्थिरत्वाधानादिवैधर्म्येण प्रतिबिम्बनम् । दृष्टान्ते साधारणधर्माणां वस्तुवृत्या ह्यभेद एव; परं शब्दान्तरेणोक्तत्वात् प्रतिबिम्बने भेदाभास इति बिम्बने

---

[1] कुमुदं. [2] पाणिं कृपाणान्तिकमा.

**सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥१०३॥**

प्राकरणिकाप्राकरणिकानां अर्थादुपमानोपमेयानां धर्मः क्रियादिः एकवारमेव यदुपादीयते [1]तदेकस्यैव समस्तवाक्यदीपनाद्दीपकम् ।

यथा—

**किवणाणं धणं णाआणं फणमणी केसराइं सीहाणं ।**
**कुलवालिआणं थणआ कुत्तो छिप्पन्ति अमुआणम् ॥**

(छाया—कृपणानां धनं नागानां फणमणिः केसराश्च सिंहानाम् ।)
(कुलबालानां च स्तनाः कुतः स्पृश्यन्तेऽमृतानाम् ॥)

**कारस्य च बह्वीषु क्रियासु सकृदावृत्तिर्दीपकम् । यथा—**
**स्विद्यति कुणति वेल्लति [2]विवलति निमिषति विलोकयति तिर्यक् ।**

---

नियतनिष्ठतया तेषां साधारणता न स्यादिति नाशङ्क्यम् ।

*एकस्थस्यैवेति । अयं भावः—एकत्र स्थितः क्रियादिः समानो धर्मः प्रसङ्गेनान्यत्रोपकाराद्दीपनाख्याद्दीपकम् । अत्र प्रकृताप्रकृतत्वयोर्वास्तवत्वादर्थानामौपम्यं सत्यं परं गम्यं न श्रौतम् । अतो नोपमा । तुल्ययोगितायां तु काल्पनिकमौपम्यं, शुद्धानामेव प्रकृतानां अप्रकृतानां वा तत्र ग्रहणान्न पुनर्युगपदुभयग्रहणमिति ।

किविणेति । कुलबालाः प्रकृताः शेषमप्रकृतम् । अत्र छिप्पन्तीति क्रिया समानो धर्मः, स चान्ते निर्दिष्ट इत्यन्तक्रियादीपकम् । आदिमध्यक्रियादीपके स्वेनोह्ये ।

स्विद्यतीति । अत्र वधूरूपं कारकमन्तस्थं बहुषु क्रियासु

---

[1] विचलति. [2] तदेकस्यैव इत्यत्र तदैकस्थस्यैव इति पाठं मनुते.

अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूश्शयने ॥ ४५९॥

**मालादीपकमाद्यं चेद्यथोत्तरगुणावहम् ।**

पूर्वेण पूर्वेण वस्तुनोत्तरमुत्तरं चेदुपक्रियते तन्मालादीपकम् । यथा—

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
[1]देवाऽऽकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
[2]तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥

**नियतानां सकृद्धर्मस्सा पुनस्तुल्ययोगिता॥१०४॥**

नियतानां [3]प्राकरणिकानामेव अप्राकरणिकानामेव वा ।

---

वर्तेत इत्यन्तकारकदीपकम् । आदिमध्यकारके ज्ञेये । तथा क्रियायाः सर्वत्र वाक्ये प्रयोगात्तद्दीपकत्वे सर्वं वाक्यं सालङ्कारं स्यादतो न क्रियामात्रं दीपकं, किन्तु भूयोभिस्सजातीयैः कारकैस्सम्बध्यमानं, तस्य चानेकेष्वर्थेषु साधारणतया सम्बध्यमानस्य बलादौपम्यगर्भत्वम् ।

सङ्ग्रामेति । अत्रासादनक्रियानिमित्तं दीपनं दीपनविषयाणां उत्तरोत्तरोम्भितत्वेन कृतं । तथा कोदण्डाद्यैश्शरादीनां क्रमेणोत्कर्षो विहितः । एकावली तु पूर्वस्योत्तरोत्तरेणोत्कर्षहेतुत्वे स्यादिति विवेकः ।

---

[1] संप्राप्ते परिपन्थियोधनिवहे साम्मुख्यमासादितम्. [2] तेन त्वं नृपते त्वया सितयशस्तेनापि लोकत्रयम्. [3] प्राकरणिकानामप्राकरणिकानामेव वा.

क्रमेणोदाहरणम्—

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः ॥४६१॥

कुसुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे [1]तवाऽऽननस्य ॥

**उपमानाद्यदन्यस्य व्यतिरेकस्स एव सः ।**

अन्यस्योपमेयस्य व्यतिरेक आधिक्यम् ।

क्षीणः क्षीणोऽपि शशी [2]भूयो भूयो विवर्धते [3]नित्यम् ।

---

पाण्डु क्षाममिति । अत्र सर्वाणि प्रकृतानि । क्षेत्रियरोगो राजयक्ष्मा अन्यस्मिन् क्षेत्रे देहान्तरे चिकित्स्यः । पक्षे उपपतिविषयोऽनुरागः । आवेदयतीति सकृद्धर्मः ।

कुसुदेति । अत्र कुमुदादीनि सर्वाण्यप्रकृतानि, दृशोर्मुखस्य च वर्ण्यत्वात् प्रकृतत्वम् । का इति निन्दारूपः पूर्वार्धे, प्रतिहतरूपश्चोत्तरार्धे सकृद्धर्मः कुमुदादीनां तुल्ययोग्यताहेतुः निबद्धः ।

आधिक्यमिति । अर्थादुपमानात् । तदयं सूत्रार्थः । यदुपमानादुपमेयस्य व्यतिरेकः, स एव व्यतिरेक एव, सः व्यतिरेकोऽलङ्कारः ।

क्षीण इति । यथेन्दुः क्षीणोऽपि वर्धते तथा तारुण्यमपि इवि? कतत्वात् काऽपि रुष्टा सती प्रियेण ज्ञाताशयेनो-

---

[1] तदाननस्य. [2] भूयोऽपि वर्धते. [3] नितराम् । सत्यं.

विरम प्रसीद सुन्दरि ! यौवनमनिवर्ति यातं तु ॥४६३॥

इत्यादावुपमानस्योपमेयादाधिक्यमिति यत्केन चिदुक्तं तदयुक्तम् ! अत्र यौवनगतास्थैर्यस्याधिक्यं हि विवक्षितम् ।

**हेतोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ॥**

**शब्दार्थाभ्यामथाक्षिप्ते श्लिष्टे[1] तद्वत्त्रिरष्ट[1] तत् ॥**

व्यतिरेकस्य हेतुरुपमेयगतमुत्कर्षनिमित्तम् । उपमानग[3]-तमपकर्षकारणं । तयोर्द्वयोरुक्तिः । एकतरस्य द्वयोर्वाऽनु-क्तिरित्यनुक्तित्रयं । एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन

च्यते–प्रिये ! यातं क्षीणं यौवनं भूयो न निवर्तत इति मा कुप्यः ।

**केन चिदिति** । रुद्रटेन, तन्मताशयेनात्र चन्द्राद्यौवनं न्यूनगुणं शशिवैलक्षण्येन गतस्य तस्यापुनरागमनात् । अलङ्कारसर्वस्वेऽपीत्थमुक्तम् । **विवक्षितमिति**। यौवने यादृशमस्थैर्याधिक्यं न चन्द्रे तादृगिति भावः । विपरीतोऽतिरेकोऽधिकत्वं व्यतिरेकः । अधिकत्ववैपरीत्यं च हीनत्वम् । अ आधिक्यं आधिक्यं, अनाधिक्यमित्यर्थः । एवं च रुद्रटोऽपि मानितः । इत्थमभणनं चोहकानामेवात्राधिकार इति ज्ञापनार्थम् ।

**तयोर्द्वयोरिति** । युगपदिति शेषः, एकतरस्य क्रमेणानुक्तावनुक्तिद्वयं, द्वयोरुपमेयोपमानयोः उत्कर्षापकर्षहेत्वोर्युगपदनुक्तावेकाऽनुक्तिः, मिलितमनुक्तित्रयम् । **शब्देनेति** । इववायथादिना इवार्थवतिरूपेण च ।

[1] श्लेषे. [2] सः. [3] गतं निकर्ष.

प्रतिपादिते आर्थेन च [1]क्रमेणोक्तौ चत्वार एव भेदाः। आक्षिप्ते चौपम्ये तावन्त एव। एवं द्वादश। एते च श्लेषेऽपि भवन्तीति चतुर्विंशतिभेदाः।

क्रमेणोदाहरणम्—

असिमात्रसहायस्य प्रभूतारिपराभवे।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः॥ ४६४॥

---

आर्थेनेति। तुल्यार्थशब्दतुल्यार्थवतिप्रतिपादितेन। क्रमेण। यदाऽर्थशब्दः सामर्थ्यार्थस्तदाऽर्थेन सामर्थ्यरूपेण क्रमेणेति व्याख्या। आक्षिप्त इति। इवतुल्यार्थाभाव इत्यर्थः।

तद्वदिति। श्लेषेऽपि द्वादशभेदा इत्यर्थः। त्रिरष्टेति। त्रीन् वारान् अष्ट चतुर्विंशतिः।

असीति। अत्र तुच्छत्वमुपमानगं गर्वहेतु निकर्षकारणं, महाधृतित्वमुपमेयगमुत्कर्षकारणं स्मयाभावहेतुः, अतो युगपद्धेत्वोरुक्तिः। तथाऽत्रैव—

"इतरस्य जनस्येव न स्मयोऽस्य महाधृतेः"

इति पाठे महाधृतित्वस्योपमेयोत्कर्षहेतोरुक्तिः।

"तुच्छस्यान्यजनस्येव न स्मयोऽस्य विभाव्यते"

इति पाठे तुच्छत्वस्योपमानापकर्षहेतोरुक्तिः। तथा

"इतरस्य जनस्येव न स्मयोऽस्य विभाव्यते"

इति कृते तूत्कर्षापकर्षहेत्वोर्युगपदनुक्तिरित्याह।

---

[1] क्रमेणोक्ताश्चत्वारो.

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्यायेण युगपद्वाऽनुपादाने अन्यद्भेदत्रयम् । एवमन्येष्वपि द्रष्टव्यम् । अत्रेवशब्दस्य सद्भावाच्छाब्दमौपम्यम् ।

असिमात्र[1]सहायोऽपि प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत् सगर्वोऽयं [2]महाधृतिः ॥ ४६५ ॥

अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम्—

इयं सुनयना दासीकृततामरसश्रिया ।
आननेनाऽकलङ्केन [3]जयतीन्दुं कलङ्कितम् ॥ ४६६ ॥

अत्रेवादितुल्यादि पदविरहेणाऽक्षिप्तैवोपमा ।

---

अत्रैवेति । एवं शाब्दौपम्ये चतुर्भेदी ।

एवमन्येष्विति । आर्थादावपि चतुष्कपञ्चके दर्शितदृष्टान्तान्यात्रिभेदी स्वेनोह्या । आर्थसाम्ये यथा—

असीति । अत्राप्युत्कर्षापकर्षहेत्वोर्द्वयोरुक्तिः । इहार्थौपम्ये, पूर्वत्र च शाब्दौपम्ये व्यतिरेकस्याद्यो भेदः । शेषत्रिभेदी स्वेनोह्या ।

इयमिति। अत्रोपमेयोपमानगमकलङ्ककलङ्कित्वरूपमुत्कर्षापकर्षकारणमुक्तम् । अयमाक्षिप्तौपम्ये व्यतिरेकस्याद्यो भेदः । यथावा—
'क्षीणः क्षीणोऽपि शशी' इति ।

अत्र यौवन उपमेये चन्द्रे चोपमाने क्रमेण स्थैर्याधिक्यहानी उत्कर्षापकर्षकारणे उक्ते। अयमाद्यो भेदः । अनुक्ता त्रिभेदी स्वा यथा।

---

1 सहायोऽयं. 2 धृतेर्निधिः. 3 निन्दतीन्दुं. 4 पदविरह आक्षिप्तैवो.

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः ।
अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः ॥ ४६७ ॥

अत्रेवार्थे वतिः गुणशब्दश्श्लिष्टः शाब्दमौपम्यम् ।

अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः ।
न निशाकरवज्जातु कलावैकल्यमागतः ॥ ४६८ ॥

अत्र तुल्यार्थे वतिः कलाशब्दःश्लिष्टः ।

मालाप्रतिवस्तूपमावत् मालाव्यतिरेकोऽपि संभवति तस्यापि भेदा एवमूह्याः दिङ्मात्रं चोदाह्रियते । यथा—

---

"नित्योदित प्रतापस्य तपनेन तुला न ते" ।

अत्र नित्योदितप्रतापत्वमुपमेयोत्कर्षहेतुः ।

यथा वा—नियतिकृतेति । अत्रोपमेयोत्कर्षहेतुः ।

क्षणोदितप्रतपेन । इति पाठे उपमानापकर्षहेतुः ।

महीमण्डलमाणिक्य ! तपनेन तुला न ते ।

इति पाठे तूत्कर्षापकर्षहेत्वोर्द्वयोरप्यनुक्तिरित्याक्षिप्तौपम्ये चतुर्भेदी ।

जितेन्द्रियेति । अत्र विद्यावृद्धनिषेवो गाढगुणत्वोत्कर्षहेतुः। भङ्गुरगुणत्वनिकर्षहेतुर्नोपात्त इत्युपमानगनिकर्षहेतूक्तौ शाब्दौपम्ये श्लेषव्यतिरेकस्य तृतीयो भेदः ॥

अखण्डेति । अयमुपमानगनिकर्षहेत्वनुक्तावार्थौपम्ये श्लेषव्यतिरेकस्य तृतीय भेदः ।

हरवन्न विषमदृष्टिः हरिवन्न विभो! विधूतविततवृषः ।
रविवन्न[1] चातिदुस्सहकरतापितभूः कदाचिदसि ॥ ४६९ ॥

अत्र तुल्यार्थे वतिः । विषमादयश्च शब्दाः श्लिष्टाः ।

नित्योदितप्रतापेन त्रियामामीलितप्रभः ।
भास्वताऽनेन भूपेन [2]भास्वानेष विनिर्जितः ॥ ४७० ॥

अत्र ह्याक्षिप्तैवोपमा भास्वतेति श्लिष्टः । यथा वा—

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं
बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम् ।
यूनामतीव पिबतां रजनीषु यत्र
तृष्णां जहार मधु नाऽऽननमङ्गनानाम् ॥ ४७१ ॥

---

हरेति । वृषौ धर्मदानवौ । अत्र हरेण तुल्यं वर्तत इत्यादिक्रमेण तुल्यार्थे वतिः । तेनार्थौपम्यम् । अयमुभयानुक्तौ श्लेषव्यतिरेकस्यान्त्यो भेदः । श्लेषद्वयं स्वयं ज्ञेयम् ।

नित्योदितेति । अत्रोदितप्रतापतामीलितप्रभतात्मनोरुपमेयोपमानगतोत्कर्षापकर्षहेत्वोरुक्तिरित्युभयोपादाने श्लेषव्यतिरेकान्त्यचतुष्कस्याद्यो भेदः । भास्वतेव भास्वतेति भास्वरत्वारोपादर्कत्वप्रतिपत्तिरिति श्लिष्टता ।

स्वच्छेति । समुल्लासितं प्रतिबिम्बितं इन्दुबिम्बं यत्रेति तत्तथा । मधु तृष्णां जहार न मुखमिति योगः । अत्र तृष्णाहरणाहरणयोः कारणे नोपात्ते इति द्वयानुक्तिरित्युभयानुक्तौ श्लेष-

---

[1] नाचपि दुः [2] भास्वानेव.

अत्रेवादीनां तुल्यादीनां च पदानामभावेऽपि श्लिष्टविशेषणैराक्षिप्तैवोपमा प्रतीयते । एवंजातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादाने अन्येऽपि भेदाः संभवन्ति । तेऽपि अनयैव दिशा द्रष्टव्याः ।

---

व्यतिरेकान्त्यचतुष्कस्यान्त्यो भेदः । द्विभेदी स्वेनोह्या । एवमन्येष्वपि द्रष्टव्यमित्युक्त्या प्रतिचतुष्कमेकः कश्चिद्भेदो वाच्य इति स्थितेऽपि यद्ग्रन्थकृता हरवदिति स्वच्छात्मतेति दृष्टान्तद्वयमूचे तदेकत्र व्यतिरेकमालात्वमन्यत्रार्थश्लिष्टत्वं विशेषं ज्ञापयितुम् । अत एव यथावेत्युक्तम् ।

**पृथगिति** । यथोद्भटकुमारसम्भवे गौरीस्तुतौ ।

"या शैशिरी श्रीस्तपसा मासेनैकेन विश्रुता ।
तपसा तां सुदीर्घेण दूराद्विदधतीमधः" ॥

तपो माघमासोऽपि । एकेनेति सुदीर्घेणेति हेतुद्वयोक्तिः । अत्र तपसेति श्लिष्टोक्तियोग्यं पदं पृथगूचे । एवं यथा—

सच्चक्रानन्दनोऽप्येष न तुल्यस्तपनस्तव ।
ससूरस्संज्ञया येन ससूरस्सुभटैर्भयात् ॥

अत्रापि हेत्वोरुक्तिः । इवाद्यभावादत्र पूर्वत्राप्याक्षिप्तौपम्ये द्वयोक्तौ श्लेषव्यतिरेकस्याद्यो भेदः । अत्रापि श्लिष्टोक्तियोग्यपदस्य पृथग्भावः । अन्येऽपीत्येकादश भेदाः । नन्वत्र श्लेषोपकाराच्चमत्कारी व्यतिरेक इति तयोरङ्गाङ्गिभावे संकरः स्यात्, न,

**निषेधो वक्तुमिष्टस्य यो विशेषाऽभिधित्सया॥**
**वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ।**

विवक्षितस्य प्राकरणिकत्वादनुपसर्जनीकार्यस्याशक्यवक्तव्यत्वमतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेधो निषेध इव[1] यः स वक्ष्यमाणविषय उक्तविषयश्चेति द्विधाऽऽक्षेपः । क्र·

---

द्वययोगे हि संकरो न चात्र द्वयमस्ति । एवंविधश्लेषस्यैव व्यतिरेकापरनामत्वात् । परं व्यतिरेकरूपमात्रमाश्रित्य व्यतिरेकप्रभेदतया श्लेषव्यतिरेकरूपयोक्तम् । ये तु श्लिष्टोक्तियोग्यपदस्य पृथगुपादाने भेदास्तत्र श्लेषगन्धोऽपि नास्ति, एकस्य पदस्य द्विरुपादानात् ।

निषेध इति । उक्तविषयत्वे वक्तुमिष्टत्वं कथं? सत्यं उक्तमप्यादौ वक्तुमिष्टमेव । अशक्येति वक्ष्यमाणविषयस्य लक्षणं अतिप्रसिद्धत्वमित्युक्त विषयस्य लक्षणम् । प्रस्तुतोऽर्थः प्रस्तुतत्वादव विधानार्हो न निषेधार्ह इति स्थिते निषेधो यः स नोपपद्यत इति निषेधो निषेधाभासः संपन्नः, तस्यैतस्य करणं प्रकृतत्वेन विशेषोक्त्यर्थं, अन्यथा गजस्नानेन तुल्यता स्यादित्याह—

निषेध इवेति । द्विविध इति । उक्तविषयत्वेन कैमर्थंक्यपरमालोचनमाक्षेपः । वक्ष्यमाणविषयत्वेनानयनरूपमागूरणमाक्षेप इत्यर्थभेदादाक्षेपौ द्वौ । विशेषश्चात्र शब्दानुपात्तत्वाद्गम्यः । तत्राद्ये भेदे कथनस्यैव निषेधः । द्वितीये तु क्वचिद्वस्तुनः क्वचिद्व-

---

[1] निषेध इव निषेधो यः.

क्रमेणोदाहरणम्—

ए एहि किंपि कीएवि कएण णिक्किव! भणामि अलमहवा।
अविआरिअकज्जारम्भआरिणी मरउ ण भणिस्सम् ॥४७२॥
ए एहि किमपि कस्या अपि कृते निष्कृप! भणामि अलमथवा।
अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥४७२॥

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर
व्यापाराय भवन्ति किमनेनोक्तेन न ब्रूमहे ॥४७३॥

---

स्तुकथनस्य वा निषेधः॥

अविआरियेति॥ कार्यं अन्यासक्तेऽपि त्वय्यनुरागरूपम्। अत्र न भणिस्समिति भणननिषेधादिति लभ्यते—यत्तस्याः तद्वियोगे सा साऽवस्था जायते या वक्तुमशक्या, इतीष्टोऽर्थो निषेधमिषेणोत्कर्षित इति भावः। कामावस्थाविशेषाणां च वक्ष्यमाणतया सूचनमित्याद्यो भेदः। किमनेनोक्तेनेति कैमर्थक्यपरमालोचनं। न ब्रूमह इति निषेधनद्वारेण तस्यास्तद्वियोगे ज्योत्स्नादिः स्फुलिङ्गव्यापारहेतुः स्यादिति स्फुटोऽयमर्थोऽन्यत्रापि दृष्टत्वात्, स्फुलिङ्गव्यापाराणां आनन्त्यात्मको विशेषः किमनेनोक्तेनेति सामान्येनोपक्रान्तो न ब्रूमह इत्यसंविज्ञानपदनिबन्धनतया निर्वाहित इत्युक्तविषयता। अत्र वस्तुनिषेधः।

**क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥**

**हेतुरूपक्रियाया निषेधेऽपि तत्फलप्रकाशनं विभावना । यथा —**

---

"प्रसीदेति ब्रूयामिदमसति कोपे न घटते"

इत्यादौ तु वस्तुकथन निषेधः, तथाहि—भण्यमानस्य प्रसादस्य निषेधमुखेनैव कोपोपरागनिवर्तनेन नावश्यस्वीकार्यत्वं विशेषः । तदेवमाक्षेपे इष्टोऽर्थः, तस्य निषेधो, निषेधस्यानुपपत्त्याऽलीकत्वं, विशेषप्रतिपादनं चेति चतुष्टयमुपयुज्यते । न केवलमिष्टनिषेधाभास आक्षपोऽनिष्टविध्याभासश्च, यथा—

"गच्छ गच्छसि चेत्कान्त! पन्थानस्सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्" ॥

अत्र कान्तप्रस्थानमनिष्टमप्यनिराकरणमुखेन विहितम् । न चास्य विधिर्युक्तोऽनिष्टत्वात् । तेनायं विधिर्विध्याभासो निषेध एवेत्यर्थः ।

हेतुरूपेति । हेतवोऽपि क्रियामुखेन कार्यं कुर्वन्तीति सैवाव्यवहितो हेतुः । कार्यं क्रियायाः फलमिति वैयाकरणा एव मन्यन्ते नान्ये । फलेति । कार्यस्य कविना प्रतिपादनं न तु भवनं, हेतुं विना कार्योत्पत्त्यसम्भवात् । अत्र प्रसिद्धतरहेत्वनुपलब्धेर्हेत्वभावः, अप्रसिद्धस्तु हेतुर्वस्तुतोऽस्त्येव । अत एव विशिष्टतया प्रसिद्धतरहेत्वनुपलब्धिरूपया कार्यस्य भावना पर्यालोचना विभावना, हेतुनिषेधेन चेहोपाक्रान्तत्वाद्बलवता कार्यमेव बाध्य-

कुसुमितलताभिरहताप्यधत्त रुजमलिकुलैरदष्टाऽपि ।
परिवर्तते स्म नलिनी लहरीभिरलोलिताप्यघूर्णत सा ॥४७४

त्वेन प्रतीयते न तु तेन हेतुनिषेध इत्यन्योन्यबाधकत्वानुप्राणिताद्विरोधालङ्काराद्भेदः । हेतुनिषेधबाधप्रतीतिस्तु ज्ञप्त्यपेक्षा ज्ञप्तिस्तूत्पत्त्यपेक्षया नासन्नेति न विभावनाप्रयोजिका । अयं भावः—

यथा कार्यं भवदेव हेतुनिषेधेन बाध्यत इति भवति तत्र भवनापेक्षो बाधः । तथाभवन्नेव हेतुनिषेधः कार्योद्भवनेनापि न बाध्यते किन्तु भूतस्य तस्य बाधः तथा ज्ञाप्यते इति हेतुनिषेधबाधो ज्ञप्त्यपेक्ष एवेति ज्ञप्तिर्भवनापेक्षया पश्चाद्भावित्वेनानासन्नेति । यद्वा सामान्येन मिथो बाधे सत्यपि हेतुफलभावविशेषणास्याविरोधाद्भेदः ।

कुसुमितेति । अत्र नलिन्यब्जिनी पद्मिन्याख्या स्त्री च । तथा घातादिहेत्वभावेऽपि रुगादिकार्यमुक्तं, तत्र वियोगित्वं कारणं गम्यमतोऽनुक्तनिमित्तेयम् । उक्तनिमित्ताऽप्येषा यथा—

* "अनासवाख्यं करणं मदस्य"

अत्र यौवनं निमित्तम् । मत्तताहर्षवाचकत्वान्मदस्य द्वैविध्येऽप्यतिशयोक्त्या ह्य भेदः । अतिशयोक्त्यनुप्राणिता चैषा ज्ञेया । एकगुणहानौ विशेषोक्तिरित्येके । अरोपितवैशिष्ट्यं रूपकमेवान्ये इमां मन्यन्ते ।

*असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साऽथ वयः प्रपेदे ॥

## विशेषोक्तिरखण्डेषु कारणेषु फलावचः ॥

मिलितेष्वपि कारणेषु कार्यस्याकथनं विशेषोक्तिः । अनुक्तनिमित्ता । उक्तनिमित्ता । अचिन्त्यनिमित्ता च । क्रमेणोदाहरणम्—

निद्रानिवृत्तावुदिते द्युरत्ने
सखीजने द्वारपदं पराप्ते ।
श्लथीकृताश्लेषपदे भुजङ्गे
चचाल नाऽऽलिङ्गनतोऽङ्गना सा ॥ ४७५ ॥

कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥४७६॥

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरताऽपि तनुं यस्य शम्भुना [1]न हृतं बलम् ॥ ४७७॥

---

एतद्विपर्यये विशेषोक्तिरिति तामाह—**विशेषोक्तिरिति** ।

**निद्रेति** । द्युरत्नं रविः । भुजङ्गः पतिः । अत्र निद्रानिवृत्त्यादिहेतुसामग्र्ये सत्याश्लेषत्यागरूपकार्यस्यावचः । प्रियस्वप्नागमादिहेतुगम्यः ।

**कर्पूर इति** । अत्र दाहरूपे सत्यपि कारणे शक्तिरूपविरुद्धधर्मेणाशक्तत्वकार्यानुक्तिः, तत्रावार्यवीर्यत्वं हेतुः साक्षादुक्तः ।

**हरताऽपीति** । अत्र तनुहरणस्य हेतोः फलं बलहरणं परं नोक्तम् । निमित्तं वा प्रतीत्यगोचरत्वादचिन्त्यम् । "एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः" इति यदन्यैरस्या लक्षणं

---

[1] न बलं हृतम्.

**यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥**

यथा—

एकस्त्रिधा वससि चेतसि चित्रमत्र
देव! द्विषां च विदुषां च मृगीदृशां च।
तापं च सम्मदरसं च रतिं च पुष्णन्
शौर्योष्मणा च विनयेन च लीलया च ॥

**सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।**

---

कृतं साऽस्मन्मते रूपकभेद एव । यथा—

* "अतैलपूरास्सुरतप्रदीपाः" इति ।

अस्यामपि फलाभावः कारणसत्तामेव बाधते । अत एव मिथोबाधजीविताद्विरोधाद्भिद्यते ।

**यथासङ्ख्यमिति** । सङ्ख्योपलक्षितक्रमानतिक्रमेण पदार्थानामन्वये यथार्थं यथासङ्ख्यं क्रम इति यावत् । क्रमिकाः क्रमवन्तः । बहुवचनमतन्त्रम् । तेन द्वयोरप्यर्थयोः यथासङ्ख्यम् ।

**एक इति** । अत्र शौर्योष्मविनयलीला वर्ण्यत्वेनोद्दिष्टाः, तासां यथाक्रमं देवद्विट्विद्वन्मृगदृशामनुनिर्देशाः । एकस्त्रिधेति वाक्याद्व्यङ्ग्यो विरोधोऽपि। इदं क्रमिकवचनानामसमस्तत्वात्सम्बन्धस्यातिरोहितत्वे शाब्दम् । यत्र तु क्रमिकाणां समासः क्रियते तत्रार्थानुसमालोचनेनावयवगतक्रमसम्बन्धप्रतीतावार्थत्वम् । तत्स्वयमूह्यम् ।

[1]यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत् समर्थ्यते विशेषो वा सामान्येन सोऽर्थान्तरन्यासः ।

क्रमेणोदाहरणम्—

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥ ४७९॥

सुसितवदनालङ्कारायां कदाचन कौमुदी
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ॥ ४८० ॥

---

तदन्येनेति । विशेषेण सामान्येन वा । अर्थान्तरस्येव विजातीयस्येव वस्तुनो न्यासोऽर्थान्तरन्यास इति व्युत्पत्त्येति प्रतीयते, यदत्र हेतोः हेतुमता सह व्याप्तिर्गूढा न तु स्पष्टा कथञ्चित्प्रत्येयेत्यर्थः ।

निजेति । अत्रैवशब्दोऽप्यर्थो व्यस्तसम्बन्धो वा । अत्र सामान्यमुत्तरार्धोपात्तविशेषेण समर्थितम् ।

सुसितेति । महशब्द उत्सवार्थः । क्व नासीत्यादि सामान्यं पूर्वोक्तस्य विशेषरूपस्य समर्थकम् ।

---

[1] यत्तु.

गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते ।
असञ्जातकिणस्कन्धः सुखं स्वपिति [1]गौर्गलिः ॥ ४८१ ॥

अहो हि मे बह्वपराद्धमायुषा
यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः [2]सुहृदः पराभवं
जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥ ४८२ ॥

## विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।

---

**गुणानामिति** । गलिः कार्याकुशलो वृषः । अत्र गुणानामिति सामान्यं, गौर्गलीति वैधर्म्यरूपो विशेषः । दौरात्म्यादिति नियोजने हेतुः । वैधर्म्यविशेषस्तु पूर्वार्धार्थसमर्थनहेतुः ।

**अहो इति** । मे इति विशेषः, त एवेति सामान्यं, तयोस्समर्थ्यसमर्थकभावः । **अप्रियं वाच्यमिति** । सुहृदं प्रतीति शेषः । अत्रापराद्धमिति वचनादधन्यत्वाक्षेपः तद्विरुद्धं धन्यत्वमिति वैधर्म्यम् । "एतत्तस्य मुखात्" इत्यादावप्रस्तुत प्रशंसायां जरादिवृत्तान्तेन विशेषेण वाच्येन सामान्यं समर्थ्यते, अत्र तु सामान्यविशेषयोर्द्वयोरपि वाच्यत्वमिति विवेकः । यद्वाऽन्योक्तौ विशेषो न सामान्यसमर्थनाशयेनोच्यते किन्त्वन्यथेति तथात्र हिशब्दः क्वचित्प्रयुज्यते। क्वाचिन्न, समर्थकस्य च कदाचित् पूर्वं पश्चाद्वोपन्यासः ।

---

[1] गौर्गली. [2] सुहृदां.

वस्तुवृत्तेनाऽविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः ।

**जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्यात् गुणस्त्रिभिः ॥**

**क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश ।**

क्रमेणोदाहरणम्—

अभिनवनलिनीकिसलयमृणालवलयादि दवदहनराशिः ।
सुभग ! कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥

गिरयोऽप्यनुन्नतियुजो [1]मरुदप्यचलोऽब्धयोऽप्यगम्भीराः ।
विश्वम्भराऽप्यतिलघुर्नरनाथ ! तवान्तिके नियतम्॥ ४८४ ॥

येषां कण्ठपरिग्रहप्रणयितां संप्राप्य धाराधर-

---

अविरोधेऽपीति । अविरोधे विरोधो न स्यादिति स्थिते यद्विरोधेनोक्तिः सैवानुपपद्यमाना विरोधाभासे पर्यवस्यति । नित्यमेव द्रव्याश्रितत्वाज्जातेर्न जातिद्रव्ययोर्विरोध इति ब्रुवन् रुद्रटो नवभेदं मन्यते । तद्वार्तं । जातेर्गुणाद्याश्रिततत्वस्यापि भावात् ।

अभिनवेति । अत्र नलिनीत्वादिदहनत्वजात्योर्वियोगवशाद्विरोधः परिहृतः ।

गिरियोऽपीति । बलं जवोऽपि । अत्र त्वमेव महान् सैन्यवान् गम्भीरो विस्तीर्णश्चेति भावः । अत्र गिरित्वमरुत्त्वादिजातीनां क्रमेण लघुत्वपर्यायानुन्नत्यबलपर्यायमन्दत्वागाम्भीर्यातिलघुत्वरूपैर्गुणैः सह विरोधः ।

येषामिति । धाराधरोऽसिः । स्नेहो रुधिरार्द्रत्वमपि ।

---

[1] मरुदप्यबलो.

स्तीक्ष्णस्सोऽप्यनुरज्यते च [1]कमपि स्नेहं पराप्नोति च ।
तेषां सङ्गरसङ्गसक्तमनसां राज्ञां त्वया भूपते!
पांसूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥४८५॥

सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम् ।
अवसरवशतश्शफरो जनार्दनस्सोऽपि चित्रमिदम् ॥ ४८६ ॥

सततं [2]मुसलाऽसक्ता बहुतरगृहकर्मघटनया नृपते ! ।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥

पेशलमपि खलवचनं दहति तरां मानसं सुतत्वविदाम् ।
परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥ ४८८ ॥

क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽसौ
यन्मार्गणानर्गल शातपाते ।
अभून्नवाम्भोजदलाभिजातः
स भार्गवस्सत्यमपूर्वसर्गः ॥ ४८९ ॥

---

अत्र पांसुत्वजातिमण्डनक्रिये विरुद्धे ।

सृजतीति । अत्र शफरत्वजातिर्जनार्दनद्रव्यस्य च विरोधः ।

सततमिति । अत्र काठिण्यसौकुमार्यगुणौ विरुद्धौ ।

पेशलमिति । अत्र पेशलत्वपरुषत्वगुणौ दहनप्रमोदक्रियाभ्यां सह विरुद्धौ ।

यन्मार्गणेति । यन्मार्गण एवानर्गळः शातः पविः । अत्र दृढत्वरूपगुणदलरूपद्रव्ययोर्विरोधः ।

---

[1] कमपि.  [2] मुसलासङ्गाद्बहु.

परिच्छेदातीतस्सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपदं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च [1] कुरुते ॥४९०॥

अयं वारामेको निलय इति रत्नाकर इति
[2] श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क [3] एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ ४९१ ॥

समदमतङ्गजमदजलनिष्यन्दतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक ! त्वयि तटजुषि [4] शङ्करचूडाऽपगाऽपि कालिन्दी॥

परीति । जडयति शीतलयति मोहयति च । तापः खेदोऽपि । अत्र जडीकरणतापकरणरूपे क्रिये विरुद्धे वस्तुसौन्दर्येण तदप्राप्तिपर्यवसानेन परिह्रियेते ।

अयमिति । अत्र जलधिः पीत इति द्रव्यक्रिये विरुद्धे मुनिप्रभावेण समाधीयेते ।

समदेति । अत्र गङ्गायमुनारूपद्रव्ययोर्विरोधः गङ्गा यमुना जातेति रूपेण, न तु नदीत्वजातेर्विरोधः । एवं विविक्तविषयत्वेन विरोधस्य दर्शनात् । "कुपतिमपि कलत्रवल्लभम्, इत्यादौ श्लेषगर्भसङ्कर इति कश्चित् । उद्भटस्तु विरोधप्रतिभोत्पत्तिहेतुं श्लेषमाह । श्लेषवशादेव लब्धात्मलाभत्वाद्विरोधस्य न श्लेषेण सह संकरः ।

[1] तनुते. [2] श्रितोऽस्माभिस्तृष्णाकवलित. [3] इदं को जानीते. [4] शङ्करजूटऽपगापि.

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्।**

स्वयोस्तदेकाश्रययोः। रूपं वर्णः [1]संस्थानं च।

उदाहरणम्—

पश्चादङ्घ्री प्रसार्य त्रिकनतिविततम् द्राघयित्वाऽङ्गमुच्चै
रासज्याभुग्नकण्ठो मुखमुरसि [2]सटां धूलिधूम्रां विधूय।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण॥

**व्याजस्तुतिर्मुखे निन्दास्तुतिर्वा रूढिरन्यथा॥**

---

स्वस्वहेतोर्लब्धात्मलाभानामलङ्काराणां मिश्रत्वे संकरलक्षणात्। एक-विषयत्वे विरोधः, भिन्नविषयत्वे त्वसंगत्याद्योऽलङ्कारः।

**स्वभावोक्तिरिति**। इह वस्तुस्वभाववर्णनमात्रं नालङ्कारः। तत्त्वे सर्वं काव्यमलङ्कारः स्यात्, तस्मात्सामान्यस्वभावो लौकिकोऽर्थोऽलङ्कार्यः। कविप्रतिभागोचरस्य त्वत एव तन्निमित्तस्यैव वस्तुस्वभावस्योक्तिरलङ्कारः।

**स्वयोरिति**। स्वकीययोः। क्रिया व्यापारः। संस्थानं स्वाभाविकं रूपम्।

**पश्चादिति**। प्रोथः मुखाग्रम्। तुण्डं मुखम्। अत्र धूलि धूम्रा इति वर्णोक्तिः। शेषमाङ्घ्रिप्रसारणाङ्गदीर्घीकरणादिकं क्रिया-संस्थानोक्तिः।

**मुखे निन्देति**। श्रौती निन्दा, स्तुतिस्तु निर्वाहगत्येको भेदः,

---

[1] संस्थानं वा. [2] जटां धूलिधूम्रो वि.

व्याजरूपा व्याजेन वा स्तुतिः ।
क्रमेणोदाहरणम्—

हित्वा त्वामुपरोधवन्ध्यमनसां मन्ये न मौलिः परो
लज्जावर्जनमन्तरेण न रमामन्यत्र [1]सन्दृश्यते ।
यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥
हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे !
नास्ति त्वत्सदृशः परः परहिताऽऽधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥ ४९९ ॥

**सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥**

एकार्थाभिधायकमपि [2]सहार्थबलाद्यदुभयस्यावगमकं सा सहोक्तिः

---

एतद्वैपरीत्ये द्वितीयो भेद इत्याह व्याजरूपेति । व्याजरूपा निन्दाद्वारिकेत्यर्थः ।

व्याजेनेति । वस्तुवृत्त्या निन्दैवेत्यर्थः ।

हित्वेति । लज्जायां मज्जनं ब्रुडनं निर्लज्जत्वमित्यर्थः । हे नृप त्वद्विधो निर्दाक्षिण्यो लक्ष्मीतुल्यं निर्लज्जं किमपि नास्तीति भावः ।

हे हेलेति । अत्र विपरीतलक्षणया वाच्याद्व्यत्यस्ता प्रतीतिः। अत्राप्रस्तुतप्रशंसासद्भावेऽपि न संकरत्वं, व्याजस्तुत्यप्रस्तुतप्रशंसयोरुत्कटतया भेदेन प्रतिभासात् । उत्कटाभेदे हि स स्यात् । तर्हि संसृष्टिरिति चेन्न, अन्योन्योपकार्योपकारकत्वेन मिथो नैरपेक्ष्याभावात्, मणियुक्तहारवत् एक एवायं प्रकृतोऽलङ्कार इति भावः ।

---

[1] संलक्ष्यते. [2] सहार्थबलादुभयस्याप्यवगमकं.

यथा—

सह दिअहणिसाइं दीहरा सासदण्डा
सह मणिवलेर्येहिं वाहधारा गलन्ति ।
तुह सुहअ विओए तीअ उव्वेविरी ए
सह अ तणुलदाए दुब्बला जीविदासा ॥ ४९६ ॥

श्वासदण्डादिगतं दीर्घत्वादि शाब्दम् । दिवसनिशादिगतं तु सहार्थसामर्थ्यात्प्रतिपाद्यते ।

**विनोक्तिस्सा विनाऽन्येन यत्रान्यस्सन्न नेतरः**

क्वचिदशोभनः क्वचिच्छोभनः । क्रमेणोदाहरणम्—

---

उव्वेविरीए इति । उद्वेजनशीलायाः । सहोक्तौ द्वयोरपि प्रकृतयोरप्रकृतयोर्वा ग्रहणात् काल्पनिकमौपम्यम् । तत्र तृतीयान्तस्य गुणभावादुपमानत्वं शेषस्य प्राधान्यात् उपमेयत्वम् । इयं मालया सहोक्तिः,

केवलसहोक्तिस्तु । "वसन्ते पल्लवैस्सार्धं रागोल्लासी जनो भवेत्" इत्यादि नियमेन कार्यकारणनियमविपर्ययरूपाभेदाध्यवसायरूपाऽतिशयोक्तिमूलत्वमस्याः, यथा प्रतीयमानोपमात्वेऽपि तत्त्वारोपादिरूपविशेषभावाद्रूपकाद्यलङ्कारा उपमातो भेदेनोक्ताः तथेयमपि सहार्थसामर्थ्यावसितसाम्यरूपविशेषात्तस्याः पृथगुक्ता । उपमारूपव्यङ्ग्यं तु रूपकादिषु गुणीभूतं, तत्त्वारोपाद्यर्थस्यैव चमत्कारित्वात् ।

यत्रान्य इति । * सन् शोभनः, इतरोऽशोभनः, सूत्राऽपेक्षया

---

* यत्रान्यस्सन्न नेतरः इत्यपि पाठः । अत्र पाठे सन्न इत्यनेनाशोभन इति, इतरपदस्य सदितरपरत्वेन तद्भेदः नेतरपदवाच्य इति शोभन इति च लभ्यते इति न सूत्रवृत्त्योर्भिन्नपाठाभिप्रायतावर्णनक्लेशः ।

**अरुचिर्निशया विना शशी शशिना साऽपि विना महत्तमः ।**
**उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः॥**
**मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।**
**अमृतद्युतिसुन्दराऽशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः ॥४९८**

---

व्याख्येयम्, क्वचित्तु—'यत्रान्योऽसन्नथेतरः' इति पाठः । तदपेक्षया वृत्तिकृता व्याख्यातमस्ति ।

**अरुचिरिति** । रुचिरहितोऽशोभनः ।

**मृगेति** । तथाहि प्राज्ञोरहितः किमपि नाज्ञासीत् । सुहृदेति कूटमित्रं, स तस्यासीत् । विनाशब्दं विनाऽपि विनार्थविवक्षा स्यात् यथा सहोक्तौ सहार्थविवक्षा । तेन—

"निरर्थकं जन्म गतं नलिन्याः
यया न दृष्टं तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव
दृष्टा विनिद्रा नलिनी न येन" ॥

इत्यादौ विनोक्तिरेव । तुहिनांशुदर्शनं विना नलिनीजन्मनोऽशोभनत्वप्रतीतेः । अत्रारुचिरित्युदाहरणं मिथोविनोक्तिभङ्ग्योक्तम् । द्वितीयन्त्वेवमेव । यद्वा एकत्राऽशोभनत्वमपरत्र शोभनत्वम् । विनोक्तिकृतवैचित्र्याभावात् शब्दमात्रयोगेनालङ्कारकल्पने ह्यधिगायुक्तावप्यलङ्कारप्राप्तेश्च विनोक्त्यलङ्कारं न मन्यन्तेऽन्ये । सहार्थबलात्साम्यप्रतीतेः सहोक्तिस्तु युक्तैव ।

परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः ॥

परिवृत्तिरलङ्कारः । उदाहरणम्—

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्वा श्रयति भृशमामोदमसमम् ।
लतास्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥ ४९९ ॥

[1]अत्र प्रथमेऽर्धे समेन समस्य । द्वितीय उत्तमेन न्यूनस्य—

नानाविधप्रहरणैर्नृप! संप्रहारे
स्वीकृत्य दारुणनिनादवतः प्रहारान् ।

---

अर्थानामिति । अर्थ्यन्ते अमी इति व्युत्पत्त्या अर्थाः उपादेयाः । बहुवचनमतन्त्रम् । तेनैकं द्वे बहूनि वा दत्त्वा व्युत्क्रमेण विषमसमसङ्ख्यानामादानं यत्र तत्त्वैषा स्यात् । समादन्यदसमम् । तच्च न्यूनमधिकं च । समन्यूनाधिकानां समाधिकन्यूनैः विनिमये परिवृत्तित्रयी ।

लतानामिति । मतं चारु, श्रयति आदत्ते । अत्र लास्यमोदौ समौ एकैनैकस्य विनिमयः पूर्वार्धे । उत्तरार्धे त्वधिकेनैकेन न्यूनस्याऽध्यादिरूपस्यानेकस्य ।

नानेति । विप्रलम्भो भ्रान्तिरपायो वा । निर्विप्रलम्भो निश्चितो निर्विघ्नो वा परिरम्भविधिः यस्यास्सा तथा । न्यूनेन प्रहाररूपेण उत्तमस्य भूरूपस्य ।

---

[1] तत्र.

दृप्तारिवीरविसरेण वसुन्धरेयं
निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥ ५०० ॥

अत्र न्यूनेनोत्तमस्य ।

**प्रत्यक्षा इव [1]यद्भावाः क्रियन्ते भूतभाविनः । तद्भाविकम् ।**

भूताश्च भाविनश्चेति द्वन्द्वः । भावः कवेरभिप्रायोऽत्रास्तीति भाविकम् । उदाहरणम्—

आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाऽऽकृतिम् ॥ ५०१ ॥

अत्राऽऽद्ये भूतस्य द्वितीये भाविनो दर्शनम् ।

**काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥ ११४ ॥**

---

भाविकमिति । भूतभाव्यर्थानां लोकोत्तरत्वेनाद्भुतत्वादन्यस्तसम्बन्धशब्दसन्दर्भसमार्पितत्वाच्च प्रत्यक्षायमाणत्वम् ।

भाव इति । कवेर्भाव आशयः श्रोतरि प्रतिबिम्बत्वेनास्तीति भावः । स्वभावोक्तौ कविप्रतिभाविशेषितलौकिकवस्तुस्वभाववर्णने सर्वसाधारण्येन चित्तसंवादसम्भवोऽत्र तु लोकोत्तरवस्तूनां स्फुटत्वेन तटस्थतया प्रतीतिरिति चारुवस्तुस्वभाववर्णनान्नैषा स्वभावोक्तिः । नचेदमद्भुतपदार्थदर्शनाद्भूतभाविप्रत्यक्षत्वप्रतीतौ काव्यलिङ्गम्, लिङ्गलिङ्गिभावेनाऽप्रतीतेः ।

हेतोरिति । अयं भावः—यत्र हेतुः कारकरूपस्तत्काव्यलिङ्गं, ज्ञापकहेतौ त्वनुमानालङ्कारः । काव्यग्रहणात्काव्यलिङ्गे

---

[1] यत्रार्थाः क्रियन्ते.

वाक्यार्थता यथा—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
[1]पुरारे! न प्रायः क्वचिदपि भवन्तं प्रणतवान्।
नमन्मुक्तः [2]संप्रत्यहमतनुरग्रेऽप्यनतिभाक्
महेश! क्षन्तव्यं तदिदमपराधद्वयमपि ॥ ५०२ ॥

अनेकपदार्थता यथा—

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्।

---

व्याप्तिपक्षधर्मोपसंहारादयो न स्युः। वाक्यार्थवत्पदार्थोऽप्येकोऽनेकश्च।

वपुरिति। अत्र पादत्रयार्थोऽनेकवाक्यार्थरूपोऽन्त्यपादार्थस्य हेतुः। तथा वपुःप्रादुर्भावादित्युक्त्याऽनुमानमप्यत्रास्ति, परं तेन सह भिन्नदेशत्वाभावाद्वाक्यार्थीभूतस्य हेतोर्न संसृष्टिः, किन्त्वनुमानस्योत्थापकतया वाक्यार्थीभूतहेतुं प्रत्यङ्गभावे सङ्करः। सम्प्रति त्वां नमन्मुक्तः सन् अग्रेऽपि भाविनि काले निस्तनुस्सन्ननतिमानित्यर्थः। यथा घटकारणं मृद्घटरूपेण परिणमति तथाऽपराधद्वयस्य जनकमनमनमपराधतयाऽत्र परिणतम्। एकवाक्यार्थकोदाहरणमन्यतो ज्ञेयम्।

प्रणयीति। इयं मालतीवधोद्यताघोरघण्टं प्रति माधवोक्तिः। इह शस्त्रोपक्षेपरूपो हेतुः शस्त्रमित्युपक्षिपत इति चानेकपदार्थतयोक्तः। पूर्वत्र वाक्यार्थगत्या हेतुर्लिङ्गत्वेन बद्धोऽत्र तु शस्त्र-

---

[1] पुरारे नैवास्मि क्षणमपि. [2] संप्रत्यतनुरहमग्रेऽप्यनतिमान्.

वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
[1]पततु शिरस्यकाण्डयमदण्ड इवैष [2]भुजः ॥ ५०३ ॥

एकपदार्थता यथा—

भस्मोद्धूळन ! भद्रमस्तु भवते रुद्राक्षमाले ! शुभम्
हा सोपानपरम्परां गिरिसुताकान्तालयालङ्कृतिम् ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निलीयामहे ॥५०४॥

एषु अपराधद्वये पूर्वापरजन्मनोरननम्, भुजपाते शस्त्रोपक्षेपः, महामोहे सुखालोकोच्छेदित्वं च यथाक्रममुक्तरूपो हेतुः ।

**पर्यायोक्तं विना वाच्य[3]वाचकत्वेन यद्वचः ।**

वाच्यवाचकभाव[4]व्यतिरिक्तेनाऽवगमनव्यापारेण यत्प्रतिपादनम्, तत्पर्यायेण भङ्ग्यन्तरेण कथनात्पर्यायोक्तम् ।

---

मुपक्षिपत इति विशेषणत्वेन पदार्थगत्या बद्ध इति भावः ।

भस्मेति । अत्र महामोहे सुखालोकोच्छेदित्वं हेतुर्विशेषणतयैकपदार्थम् । मोक्षस्य महामोहरूपणाद्रूपकमपि ।

वाच्येति । वाच्यवाचकावर्थशब्दौ ।

विविक्तेनेति । भिन्नेन प्रकारान्तरेणार्थसामर्थ्यात्मनेति यावत् । अत्र गम्योऽर्थो भङ्ग्यन्तरेणाभिधीयते । अप्रस्तुतप्रशंसायां त्वप्रस्तुत उच्यते । गम्यस्त्वाक्षिप्यत इति विवेकः ।

---

1 पतति । 2 करः । 3 वाचकत्वेन वस्तु यत् । 4 विविक्तेना ।

उदाहरणम्—

यं प्रेक्ष्य [1]चिररूढाऽपि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥ ५०५ ॥

अत्रैरावणशक्रौ मदमानमुक्तौ जाताविति [2]व्यङ्ग्यमपि शब्देनोच्यते, तेन यदेवोच्यते तदेव व्यङ्ग्यम् । यथा तु व्यङ्ग्यं न [3]तथोच्यते । यथा गवि शुक्ले चलति दृष्टे [4]गौश्शुक्लश्चलति—इति विकल्पः । यदेव दृष्टं तदेव विकल्पयति । न तु यथा दृष्टं तथा यतोऽभिन्नाऽसंसृष्टत्वेन दृष्टं भेदसंसर्गाभ्यां विकल्पयति ।

---

व्यङ्ग्यमपीति । योग्यतया निर्देशः ।

शब्देनोच्यत इति । मदेन मानेन निवासप्रीतिरुज्झितेतिरूपभङ्ग्यन्तरप्रोक्तेनेति (?) । तेनेति । भङ्ग्यन्तरेण । यथेति । येन प्रकारेण शब्दसंसर्गात् सहात्मनैकघनरूपतात्मना वा व्यङ्ग्यं प्रतीयते न तथा शब्देनोच्यते, क्रमभाविविकल्पप्रभावः शब्दस्तथाऽभिधातुं न शक्त इत्यर्थः । अतोऽत्र न ध्वनिरिति भावः ।

एतदेव दृष्टान्तेनाह ।

यथा गवीति । दृष्ट इति । निर्विकल्पकेन गोचरीकृते ।

नत्विति । अयं भावः—अभिन्नासंसृष्टः स्वलक्षणाकारो निरंशो निर्विकल्पकेन दृष्टः पश्चादविद्यावशेन भेदसंसर्गाभ्यां विकल्पगोचरीक्रियते भेदसंसर्गौहि विकल्पस्यैव व्यापारः । स हि

---

[1] चिरमूढा । [2] व्यङ्ग्यमपि भङ्ग्यन्तरेण श । [3] तथोच्यते तथाहि गवि । [4] गौश्शुक्लश्चल इति ।

## उदात्तं वस्तुनः संपत् ।

संपत्समृद्धियोगः । यथा—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातःप्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केळीशुका
यद्विद्वद्भवनेषु [1] भोजनृपतेस्तत्त्यागलीलायितम् ॥ ५०६ ॥

## महतां चोपलक्षणम् ॥ ११५ ॥

उपलक्षणमङ्गभावः अर्थादुपलक्षणीयेऽर्थे । उदाहरणम्—

तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी ।

---

निरंशत्वादभिन्नमप्यसंसृष्टमपि वस्तु गौश्शुक्लश्चल इत्येवं भिनत्ति भिन्नमप्ययं गौरयमपि गौरित्येवं संसृजति ।

उदात्तमिति । इदमैश्वर्यलक्षितस्य वस्तुनो वर्णनया स्वभावोक्ति भाविकाभ्यां भिद्यते । न हि पूर्वयोरैश्वर्यं वर्ण्यते । कवि प्रतिभोत्थापितत्वं त्रिष्वप्यस्त्येव ।

मुक्ता इति । अतिशयोक्तिरेषेति चेन्न । अन्यस्यान्यतयाऽध्यवसायाभावात् । अन्यैश्वर्येऽप्यवकरवन्मुक्तादेः पुंजीकरणासंभवे यदेवमुक्तिः सेयमसम्बन्धे सम्बन्धात्मिकाऽतिशयोक्तिः, अथ पुंजीकरणं सम्भवति तदा जातिः । किञ्चानृद्धिमद्वस्तुवर्णनेऽनुदात्तमपि स्यादिति विवक्षायां निर्विषयमिदमुदात्तम् ।

अर्थादिति । सामर्थ्यादुपलक्षणीये वस्त्वन्तरे अङ्गीभूते इत्यर्थः ।

तदिदमिति । अत्र दण्डकारण्ये वर्ण्यतयाऽङ्गिभूते राम

---

[1] भोजननृपते ! त्वत्त्यागलीलायितम् ।

निवसन् बाहुसहायश्चकार रक्षः क्षयं रामः ॥ ५०७ ॥

नचात्र वीरो रसः । तस्येहाङ्गत्वात् ।

**तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्करं भवेत् ॥**
**समुच्चयोऽसौ**

तस्य प्रस्तुतस्य कार्यस्यैकस्मिन् साधके स्थिते साधकान्तराणि यत्र [1]संभवन्ति स समुच्चयः । उदाहरणम्—

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमो
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः॥५०८

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति । तदुपरि प्रियतमदूरस्थित्यादि उपात्तम् । एष एव समुच्चयः स-

---

चरितस्याङ्गभावः महद्भिराश्रितं ह्यरण्यं वर्ण्यं स्यादिति तात्पर्यम्। अरण्यमत्रोपलक्षणीयं प्रधानीभूतमित्यर्थः । रामस्य वीरचरितमुपलक्षणमङ्गमित्यर्थः ।

वीररसेऽङ्गीभूते रसध्वनिः स्यात् इत्याशङ्क्याह ।

न चेति । वीररसो नाङ्गीत्यर्थः । एतदेवाह तस्येति। वीररसाश्रयो रामस्तावदिहाङ्गं किं पुना रसः । ननु रसस्याङ्गत्वे रसवदलङ्कारः स्यात् ? अस्योदात्तस्य तदपवादत्वात् । तदपवादत्वाऽकल्पने निर्विषयमुदात्तम् ।

समुच्चय इति । अत्र तुल्यकक्षतया हेतवो मिलिताः

---

[1] सन्ति ।

द्योगेऽसद्योगे सदसद्योगे च पर्यवस्यतीति न पृथग्लक्ष्यते। तथा हि—

कुलममलिनं भद्रा मूर्तिर्मतिः [1]श्रुतशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम्।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥ ५०९ ॥

अत्र सतां योगः। उक्तोदाहरणे त्वसतां योगः।

शशी दिवसधूसरो गलितयौवना कामिनी

---

कार्यं साधयन्ति। समाधौ त्वेकस्य हेतोः कार्यं प्रति पूर्णे साधकत्वेऽन्यस्तु कार्याय काकतालीयन्यायेन आपततीति न तत्र तुल्यकक्षतेत्यनयोर्भेदः समुच्चयनं हि तुल्यकक्षाणामेव स्यात्।

न पृथगिति। रुद्रटवत्, तेन हि सद्योगाऽसद्योगसदसद्योगैः स त्रिधोचे, न तथाऽत्रेति भावः।

कुलमिति। अत्रामलकुलस्य सतस्सर्द्धिर्मूर्त्यादिभिः समुच्चयः। एकैकस्य दर्पहेतुत्वे तुल्यकक्षत्वम्। 'दुर्वाराः स्मरे' त्यत्र तु स्मरमार्गणानां दुर्वारत्वेनासतां तादृशैव (?) दूत्वाप्रियादिभिस्समुच्चयः। कारुण्यादेश्च स्वतश्चारुत्वेऽपि विरहेणाचारुत्वम्। तथैकमेव वस्तु सदसच्च तादृशं तादृशेन सदसता यदा युज्यते तदा सदसद्योगः, यथा—

शशीति। स्वाकृतेः सुरूपस्य। धनपरायणो धनलुब्धः

---

1. श्रुतिशालिनी।

सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतस्सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ५१० ॥

अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोगः।

## स त्वन्यो युगपद्या गुणक्रियाः ॥ ११६ ॥

गुणौ च, क्रिये च, गुणक्रिये च, गुणक्रियाः ।

---

नृपाङ्गणगतो राज्ञः प्रसादवित्तः? पुमान् स तद्रूपस्सन्, खलतया चासन् । अत्र शशी स्वयं सन्, धूसरत्वेनासन् । कामिनीति सत् गलितयौवनत्वमसत् ! एवमग्रेऽपि विशेष्यद्वारेण सत्ता विशेषण द्वारेणासत्तैकस्य वस्तुनः सर्वत्र ज्ञेया । इह विशेष्यस्य सत्त्वं विशेषणस्य चासत्त्वं प्रक्रान्तं, ततो नृपाङ्गणगत इति विशेष्य तया सद्व्याख्येयं, खल इति विशेषणतया चासत् । अन्यमता· भिप्रायेण विशेषणविशेष्ययोरत्र वैपरीत्ये प्रक्रमभङ्गः । तथा नृपा- ङ्गणगतः खल इत्यसत् अन्ये तु सन्त इति समुच्चीयमानस्य सतस्ताद्दशेन सता योग इति व्याख्यायां तु सहचरभिन्नोऽर्थो दुष्ट· इति रूपः प्रक्रमभङ्गः । तथाऽत्र सत(?) एव सतोऽसत्त्वमेकस्यैव वस्तुन इति विवक्षितम् । अत एव चारुत्वेनान्तःप्रविष्टान्यपि शश्यादीनि शल्यानीति प्रकारेण व्यथाहेतुत्वेनोक्तानि । 'दुर्वाराः स्मरे' त्यत्र तु कथं सोढव्य इति सर्वथा दुष्टत्वाभिप्रायेणो· पन्यास इति विवेकः ।

गुणौ चेति । एतेनेत्युक्तम्—यद्व्यस्तत्वेन समस्तत्वेन च

क्रमेणोदाहरणम्—

विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च ।
प्रखलमुखानि नराधिप! मलिनानि च तानि जातानि ॥

[1]अयमेकपदे तया वियोगः
[2]प्रियया चोपनतस्सुदुस्सहो मे।
नववारिधरोदयादहोभि-
र्भवितव्यं च [3]निरातपत्वरम्यैः ॥५११ ॥
कलुषं च तवाहितेष्वकस्मा-
त्सित[4]पङ्केरुहसोदराश्रि चक्षुः ।
पतितं च महीपतीन्द्र! तेषां
वपुषि प्रस्फुटमापदां कटाक्षैः ॥ ५१२ ॥

धुनोति चासिं तनुते च कीर्तिम् । इत्यादेः
कृपाणपाणिश्च भवान् रणक्षितौ
ससाधुवादाश्च सुरास्सुरालये ।

---

क्रमेण व्युत्क्रमेण च गुणक्रियाणां त्रिधाऽन्यस्समुच्चयः।

विदलितेति । अत्र भिन्नाधारयोः वैमल्यमालिन्ययोर्गुणयोस्समुच्चयः ।

अयमिति । अत्र तादृश्योरेवोपनत इति भवितव्यमिति च क्रिययोः ।

कलुषं चेति । अत्र कालुष्यगुणपातक्रिययोः ।

धुनोतीत्यत्रैकाधिकरण्यं क्रिययोः । कृपाणपाणित्वसाधुत्वादौ सिद्धरूपत्वाद्गुणौ तयोः क्षितिस्स्वर्गश्च भिन्नो देशः ।

---

[1] इतःपूर्वं क्रिये यथा—इति क्वचित्पाठः । [2] प्रियया चोपगतः ।
[3] निरातपत्ररम्यैः । [4] पङ्केरुहसुन्दर ।

इत्यादेश्च दर्शनात्, 'व्यधिकरणे' इति 'एकस्मिन् देशे' इति च न वाच्यम् ।

**एकं क्रमेणानेकस्मिन् पर्यायः ।**

एकं वस्तु क्रमेणानेकस्मिन् भवति क्रियते वा स पर्यायः । क्रमेणोदाहरणम्—

श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवतामद्वितीयं च वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ ५१३ ॥

नान्वाश्रयस्थितिरियं तव कालकूट!
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥ ५१४ ॥

---

न वाच्यमिति । यथोक्तं रुद्रटेन । तदेवं पूर्वभेदत्रयेण सह समुच्चयः षोढा ।

क्रमेणेति । एतेन पर्याय इति सान्वयम् । क्रमग्रहणाच्च युगपदेकस्यानेकत्र वर्तने विशेषाऽलङ्कारः । अतस्तत्रापि युगपदित्युक्तम् ।

श्रोणीबन्ध इति । अत्रैकस्य तनुत्वादेर्द्वये वृत्तिः । पूर्वं उपमानसद्भावात् साद्वितीयत्वमिति विनिमयो घटते पूर्वार्धमत्रोदाहरणम् ।

नन्वाश्रयेति । अत्रैकस्य बहुषु वृत्तिः ।

यथा वा—

बिम्बोष्ठ एव रागस्ते तन्वि ! पूर्वमदृश्यत ।
अधुना हृदयेऽप्येष मृगशावाक्षि! [1]लक्ष्यते ॥ ५१५ ॥

रागस्य वस्तुतो भेदेऽप्येकतयाऽध्यवसितत्वादेकत्वमविरुद्धम् ।

तंताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम् ।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेन ॥ ५१६ ॥

( छाया—तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् ।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥ )

**अन्यस्ततोऽन्यथा ।**

अनेकमेकस्मिन् क्रमेण भवति क्रियते वा, सोऽन्यः ।

क्रमेणोदाहरणम्—

---

**बिम्बोष्ठेति** । अत्र पूर्वाश्रयात्यागादेकस्यैव रागस्य हृदि वृत्तिः निबद्धा ।

**यथावेति** । प्रकारान्तरार्थम् ।

**रागस्येति** । ओष्ठे रागस्ताम्बूलजः हृदि तु प्रेमाख्यः । एकस्यानेकत्र स्थितिमुक्त्वा करणमुदाह्रियते—

**तं ताणेति** । तत्सामर्थ्यं, तेषां दैत्यानां इन्द्रस्यापि भयकर्तां, श्रीबन्धुरत्नानामासामस्त्येन हरणे तत्परमपि, कुसुमबाणेन मृदुशस्त्रेणापि सकलरत्नसारे बिम्बाधरे विक्रमं परित्याज्य मनश्चुम्बनादिसक्तं कृतमित्यर्थः । बिम्बाधरस्सकलरत्नेभ्योऽधिक इति व्यङ्ग्यव्यतिरेकोऽपि । अन्ये तु सकलरत्नसारतु-

---

1 दृश्यते.

मधुरिमरुचिरं वचः खलाना-
ममृतमहो प्रथमं पृथु व्यनक्ति ।
अथ कथयति मोहहेतुमन्त-
र्गतमिव हालहलं विषं तदेव ॥ ५१७ ॥

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः कलमिदं सङ्गीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं [1]भूमिं समारोपितः॥५१८॥

अत्रैकस्यैव हानोपादानयोरविवक्षितत्वात् न परिवृत्तिः ।

**अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः॥११७**

---

ल्योऽधर इति तेषां तत्र प्रीतिर्वास्तवीति व्यङ्ग्योपमामाहुः । अतिशयोक्तिगर्भता सर्वत्र ज्ञेया ।

मधुरिमेति । अत्रैकस्मिन् वचसि विषममृतं चानेकं निबद्धम् । तदेवेति । वचनम् ।

तद्गेहमिति । अत्रैकस्मिन् द्विजेऽनेकं गेहादि दिनैः क्रियमाणतया निबद्धं, तच्चात्र नतभित्तिगृहादि त्यज्यत एव न तु केनापि स्वीक्रियते परिवृत्तौ तु यदेकेन त्यज्यते तदन्येन गृह्यते क्रमेणेत्यधिकारान्न समुच्चयालङ्कारत्वम् ।

---

[1] भूमिं परां प्रापितः.

पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपो हेतुस्साधनम् । धर्मिण्ययोगव्यवच्छेदो व्यापकस्य [1]साध्यम् । यथा—

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
यत्तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः ।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥५१९॥

साध्यसाधनयोः [2]पौर्वापर्यविकल्पे न किञ्चिद्वैचित्र्यमिति न तथा दर्शितम् ।

---

हेतुरिति । अन्वयव्यतिरेकभणनात्सपक्षसत्वं विपक्षव्यावृत्तिश्च क्रमेण लभ्यते, पक्षधर्मत्वं स्वेनोक्तमिति त्रैरूप्यम् । **धर्मी** शैलादिः, तत्रास्तित्वमयोगव्यवच्छेदः । **व्यापकस्येति** । अग्न्यादेः ।

**यत्रेति** । कान्ते । एताः कामिन्यः । अत्र कामिनीरूपो धर्मी । भ्रूव्यापारद्वारेण बाणपातः स्मरस्याग्रगत्वे साध्येऽलङ्कारान्तर रहितं साधनं निर्दिष्टम् । क्वचिदलङ्कारान्तरगर्भितत्वे तु हेतुर्निर्दिश्यते स्वं यथा—

यथा पङ्कजिनीपत्र पद्यैद्यः * (?) प्रगुणीकृतः
तथा मन्ये वियोगिन्यः स्मरभिल्लेन घातिताः ।"

प्रगुणीकृत इति । प्रगुणीकर्तुमारब्धः । अत्र रूपकमलङ्कारान्तरम् । एवमेकत्र प्रौढोक्त्या अन्यत्र त्वलङ्कारान्तरगर्भीकारात्तर्कानुमानवैलक्षण्यम् ।

**न दर्शितमिति** । अयं भावः—साध्यसाधनयोरुक्तिरल-

---

[1] साध्यत्वं. [2] पौर्वापर्यविपर्ययविकल्पने वैचित्र्यं न किंचिदिति ।

* पद्मौघ इति स्यात्.

## विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ।

अर्थाद्विशेष्यस्य । यथा --

महौजसो मानधना धनार्चिता
धनुर्भृतस्संयति लब्धकीर्तयः ।
न संहतास्तस्य [1] न भेदवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥ ५२० ॥

यद्यप्यपुष्टार्थस्य दोषताऽभिधानात्तन्निरासेन पुष्टार्थ स्वीकारः कृतः । तथाप्येकानिष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलङ्कारमध्ये गणितः ।

## व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥ ११८

निगूढमपि वस्तुनो रूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन यदपह्नूयते सा व्याजोक्तिः ।

---

ङ्कारः । ते च क्रमेण व्युत्क्रमेण वा भवतां वैचित्र्याभावात् किं तच्चिन्तयेति । तस्माद्रुद्रटवन्न वाच्यम् ।

महौजस इति । समीहितुं कर्तुम् । अत्र धनुर्भृत इति विशेष्यं, शेषाणि विशेषणानि । महौजस इति सबलत्वे सति स्वामिकार्यकरणे शक्ता इत्याभिप्रायोऽस्य विशेषणस्य, एवमग्रेतनेष्वपि विशेषणेषु । अत्र व्यङ्ग्यस्यांशस्य वाच्योन्मुखत्वमिति न ध्वनिविषयता । परिकर इति नाम च सान्वयम् । ननु पुष्टार्थग्रहणाद्दोषत्यागमात्रमेतदित्याशङ्क्याह । यद्यपीति ।

---

[1] न भिन्नवृत्तयः

न चैषाऽपह्नुतिः, प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्येहासम्भवात् । उदाहरणम्—

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुलाखिल विधिव्यासङ्गभङ्गाकुलः ।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वाश्शिवः ॥५२१॥

अत्र पुलकवेपथू सात्विकरूपतया प्रसृतौ शैत्यकारणतया प्रकाशितत्वादपलपितस्वरूपौ व्याजोक्तिं प्रयोजयतः ।

**किञ्चित् पृष्टमपृष्टं वा कथितं यत्प्रकल्पते ।**
**तादृगन्यव्यपोहाय परिसङ्ख्या[1] तु [2]सा स्मृता॥११९**

---

न चैषेति । अयं भावः—अपह्नुतौ किलोभयनिष्ठं साम्यं अत्र तु प्रकृतस्यैव सद्भावात्प्रकृतनिष्ठमेव साम्यं,

"ये कालतां कुटिलतामिव न त्यजन्ति"

इति समुच्चितोपमावत् अत्रापि प्रकृतनिष्ठमेव साम्यम् ।

शैलेन्द्रेति । शैलेन्द्रेण प्रतिपाद्यमाना या गौरी तत्कराश्लेषे शैलेन्द्रकरस्पर्शोऽपि शिवस्य विद्यते । व्यासङ्गो निरोधः तस्माद्भङ्गो भयं सात्विकभाव इत्यर्थः । असमंजसानिखिलकर्तव्यताप्रसङ्गापह्नवाकुल इति तात्पर्यम् । उद्भटमते व्याजोक्त्यभावादत्रापह्नुतिः । तथाऽत्र रोमाञ्चादिनोद्भिन्नो भावः शैत्यप्रक्षेपादपलपितोऽपि सस्मितत्वेन पुनरप्युद्भिन्नत्वेन प्रकाशितः तथाऽप्यपलापमात्रचिन्तयाऽस्यालङ्कारस्योल्लेखः ।

परिसङ्ख्येति । परिर्वर्जने, ततः कस्यापि परिवर्जनेन

---

[1] च. [2] सामता.

प्रमाणान्तरावगतमपि वस्तु [1]शब्देन प्रतिपादितं प्रयोजनान्तराभावात् सदृशवस्त्वन्तरव्यवच्छेदाय यत्पर्यवस्यति सा भवेत्परिसंख्या। अत्र च कथनं प्रश्नपूर्वकं तदन्यथा च परिदृष्टम्। तथोभयत्र व्यपोह्यमानस्य प्रतीयमानता वाच्यत्वं चेति चत्वारो भेदाः।

क्रमेणोदाहरणम्—

किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति ॥ ५२२ ॥

किं भूषणं सुदृढमत्र यशो न रत्नं

---

कस्य चित्संख्यानं वर्ण्यत्वेन गणनं सम्यक्प्रथमं वा।

प्रमाणान्तरावगतं। प्रतिपाद्येन ज्ञातम्। प्रयोजनान्तराभावादिति। सदृशवस्त्वन्तरव्यवच्छेदरूपं प्रयोजनं हित्वा नान्यत्प्रयोजनमस्ति।

यदासक्त्येति। यच्छब्दः पूर्वोक्तपरामर्शी।

किमासेव्यमित्यत्र श्लोके शास्त्रप्रमाणज्ञातमपि गङ्गातटादि प्रश्ने सति सेव्यध्येयादितया क्रमेण कामिनीसेवातद्ध्यानपापहिंसानां निषेधायोक्तम्। निषेध्यश्चात्र गम्यः।

निषेध्यं गम्यत्वेनोक्त्वा प्रश्ने सति वाच्यत्वेनाह।

किं भूषणमिति। आर्यैश्चरितमाचरितम्। अत्र यशः प्रभृ-

---

[1] शब्देन पुनः प्रतिपादितं

किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति [1]कस्त्वदपरः सदसद्विवेकम् ॥ ५२३ ॥

कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥ ५२४ ॥

भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥५२५॥

**यथोत्तरं चेत्पूर्वस्य पूर्वस्यार्थस्य हेतुता ।**
**तदा कारणमाला स्यात् ।**

उत्तरमुत्तरं प्रति यथोत्तरम् । उदाहरणम्—

जितेन्द्रियत्वं विनयस्य कारणं

---

तैर्भूषणत्वादिकमागमतो ज्ञातमेव, न रत्नमित्यादि निषेध्यं शाब्दं न तु पूर्वोदाहरण इव गम्यम् ।

प्रश्नपूर्वकथने भेदद्वयीमुक्त्वा प्रश्नाभावे द्विभेदीमाह ।

**कौटिल्यमिति** । कचानिचये न तु वाचि चित्ते वेति गम्यम् । करादौ रागो न परपुंसि । कुचयोः काठिण्यं न चित्तावयवान्तरयोः चक्षुषोश्चापलं नाचरणे । निषेध्याश्चात्र गम्याः ।

**भक्तिरिति** । युवतिरूपं कामास्त्रमिति विग्रहः । अत्र न विभव इत्यादिनिषेध्याश्शब्दाः । श्लेषसंपर्के अस्या अतीव चारुत्वम् यथा—"यतिषु दण्डग्रहः" "करपीडा विवाहे" चित्रे वर्णसङ्करः" इत्यादि ।

---

[1] कस्त्वदितरः.

गुणप्रकर्षो विनयादवाप्यते ।
[1] गुणप्रकर्षेण जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः ॥ ५२७ ॥

"हेतुमता सह हेतोरभिधानमभेदतो हेतुः"

इति हेत्वलङ्कारो न लक्षितः, आयुर्घृतमित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति, वैचित्र्याभावात् ।

[2]"अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः ।
रम्योऽयमेति सम्प्रति लोकोत्कण्ठाकरः कालः" ॥५२८॥

[3]इत्यत्र काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुः न पुनर्हेत्वलङ्कारकल्पनयेति पूर्वोक्तकाव्यलिङ्गमेव हेतुः ।

---

आयुरिति । घृतं हेतुः, आयुर्हेतुमत्, लक्षणया तयोरभेदः । आदिशब्दादन्येऽपि लक्षणाभेदाः षट् ज्ञेयाः, परं या सादृश्याल्लक्षणा तस्यां रूपकादिसद्भावाद्वैचित्र्यं नान्यस्याम् ।

अविरलेति । अत्र वसन्तकालो हेतुः । शेषा हेतुमन्तः । कमलविकासहेतुत्वात्कालोऽपि विकासः एवमग्रेऽपि । न तु विकाशयति मदयत्यानन्दयति पोषार्थतया बिभर्तीति रुद्रटाशयेन व्युत्पत्तिः हेतुहेतुमतोरभेदाभावप्रसङ्गात् ।

समाम्नासिषुरिति । भामहोद्भटाद्याः । अव्यभिचारितया विकासादेर्नैरन्तर्येण करणमिहोपचारात्प्रयोजनं व्यङ्ग्यं तच्च गुणीभूततया महिम्नेत्यत्रैवकारेण प्रतिपाद्यते । अस्मन्मते काव्यलिङ्गमेव हेतुः । रुद्रटस्तु भिन्नमूचे ।

---

[1] गुणाधिके पुंसि जनोऽनुरज्यते. [2] अविरलनलिनविकासः. [3] इत्यत्र काव्य,

**क्रियया तु परस्परम् ।**

**वस्तुनोर्जनने ऽन्योन्यम् ।**

अर्थयोरेकक्रियामुखेन परस्परं कारणत्वे सति अन्योन्यनामा अलङ्कारः ।

उदाहरणम्—

हंसाण सरेहिं सिरी सारिज्जइ अह नराण हंसेहिं ।
अण्णोण्णं विअ एए अप्पाणं णवार गरुअन्ति ॥५२९॥

(छाया—हसानां सरोभिः श्रीः सार्यतेऽथ सरसां हंसैः ।
अन्योन्यमेवैत आत्मानं केवलं गुरूकुर्वन्ति ॥)

अत्रोभयेषामपि परस्परं जनकता, मिथःश्रीसारतासम्पादनद्वारेण ।

**उत्तरश्रुतिमात्रतः ।**

**प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ॥ १२१ ॥**

**असकृद्यदसम्भाव्यमुत्तरं स्यात् तदुत्तरम् ।**

प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र कल्प्यते, तदेकं तावदुत्तरम् । उदाहरणम्—

---

**सारिज्जईति** । सारी (रा) क्रियते । हंसानां सरोभिः सरसां हंसैः श्रीस्सार्यते इति सारणाक्रियैको धर्मस्ततो दीपकमिदं तदसत्, हंससरसोः प्रकृतत्वात् । प्रकृताप्रकृतत्वे हि दीपकम् ।

**प्रतिवचनेति** । उत्तरश्रवणादनुक्तोऽपि प्रश्नोऽवगम्य इति तात्पर्यम् । तत्र वेति प्रश्ने । उत्तरमुत्तराख्योऽलङ्कारः ।

वाणिअअ! हत्थिदन्ता कुत्तो अह्माण वग्घकित्ती अ ।
जाव लुलिआलअमुही घरम्मि परिसक्कए सोहा ॥५३०॥

(छाया— वाणिजक! हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।
यावल्लुलितालकमुखी गृहे परिष्वष्कते स्नुषा ॥)

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी ताः मूल्येन प्रयच्छेति क्रेतुर्वचनममुना वाक्येन समुन्नीयते । नचैतत् काव्यलिङ्गम्, उत्तरस्य तादृूप्यानुपपत्तेः, न हि प्रश्नस्य प्रतिवचनम् जनको हेतुः; नापीदमनुमानम्, एकधर्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित्यलङ्कारान्तरमेवोत्तरं साधीयः ।

प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यत् असम्भाव्यरूपं प्रतिवचनं स्यात् तत् अपरमुत्तरम् । अनयोश्च सकृदुपादाने न चारुताप्रतीतिरित्यसकृदित्युक्तम् ।

उदाहरणम् ।

का विसमा? देव्वगई किं [1]दुल्लहं? जं जणो गुणग्गाही ।
किं सोक्खं? सुकलत्तं, किं दुःक्खं? जं खलो लोओ ॥

---

कृत्तिश्चर्म । स्नुषा वधूः । परिसक्कए । परिष्वष्कते क्रीडतीत्यर्थः।

उत्तरस्येति । प्रतिवचनस्य । तादृूप्यानुपपत्तेः । काव्यलिङ्गरूपतानुपपत्तेः । कुत इत्याह—न हीति । न जनकः किन्तु ज्ञापक इत्यर्थः । एकधर्मीति । प्रश्नोत्तरवाक्यद्वयी भिन्नवक्तृगतेति भावः। प्रश्नः साध्यमुत्तरं साधनम् । अनयोश्चेति । प्रश्नप्रतिवचनयोः ।

का विसमेति । अत्र दैवगत्यादि गूढत्वादसम्भाव्यरूपम् । प्रश्नपूर्विका परिसङ्ख्या प्रश्नपरिसङ्ख्या । अत्र प्रश्नादुत्तरमात्रं नान्यव्यपोह इत्यर्थः ।

---

[1] दुलहं जं.

छाया—का विषमा दैवगतिः किं दुर्लभं यज्जनो गुणग्राही।
किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं (दुःखं यत्) खलो लोकः॥

प्रश्नपरिसङ्ख्यायामन्यव्यपोह एव तात्पर्यम्, इह तु वाच्य एव विश्रान्तिरित्यनयोर्विवेकः।

**कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते॥**
**धर्मेण केनचित् यत्र, तत् सूक्ष्मं परिचक्षते॥**

कुतोऽपि आकारादिङ्गिताद्वा, सूक्ष्मस्तीक्ष्णमतिसंवेद्यः उदाहरणम्—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं काऽपि कण्ठे।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
[1]स्मित्वा पाणौ खड्गलेखां लिलेख॥ ५३२॥

अत्र आकृतिमवलोक्य कयाऽपि वितर्कितं पुरुषायितं असिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतम्, पुंसामेव [2]कृपाणपाणिता योग्यत्वात्। यथा वा—

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥ ५३३॥

अत्र जिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितो

---

आकारादिति। अनेन कुतोऽपीति व्याख्यातम्।
भिन्नमिति व्याप्तम्।
आकृतिमिति। स्वेदकृतकुङ्कुमभेदरूपाम्। इङ्गितं साभिप्राया चेष्टा।
सङ्केतेति। सङ्केतकाले ज्ञातव्ये मनो यस्य स तथा।
इङ्गितेति। विटगतेन भ्रूक्षेपादिरूपेण।

---

[1] पाणौ स्मित्वा. [2] कृपाणपाणियोग्यता.

निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः ।

**उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः॥१२३॥**

परः पर्यन्तभागः अवधिर्यस्य धाराधिरोहितया तत्रैवोत्कर्षस्य विश्रान्तेः । उदाहरणम्—

राज्ये सारं वसुधा वसुन्धरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् ॥ ५३४ ॥

**भिन्नदेशतयाऽत्यन्तं कार्यकारणभूतयोः ।**
**युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसङ्गतिः॥१२४॥**

इह यद्देशं कारणम् तद्देशमेव कार्यमुत्पाद्यमानं दृष्टम्, यथा धूमादि, यत्र तु [1]हेतुफलरूपयोरपि धर्मयोः केनाप्यतिशयेन [2]नानादेशतया युगपदवभासनं सा तयोः स्वभावो-

---

राज्य इति । न्याय्य एवार्थे सारशब्दः क्लीबोऽन्यत्र तु चिन्त्यः । अत्रान्यापोहकृतचारुत्वमित्ययं परिसङ्ख्यैवेत्येके, तदसत्—सारत्वे ह्यत्र विश्रान्तिर्नान्यव्यपोहे । अत्र वराङ्गनापर्यन्तभागवधिः ।

धूमादीति । न हि शैलेऽग्निर्महानसे धूमं जनयतीति भावः ।

हेतुफलेति । हेतुः कारणं, फलं कार्यम् । अतिशयेनेति । अतिशयः कारणस्य कारणान्तराद्वैलक्षण्यं तच्चेदं यद्भिन्नदेशकार्यजननम् । युगपदिति । त्रुटितं धूमखण्डं भिन्ने काले किल कारणा-

---

[1] हेतुफलभूतयोरपि. [2] नानादेशमेव भासनम्.

त्पन्नपरस्परसङ्गतित्यागात् असङ्गतिः । उदाहरणम्—

जस्सेअ वणो तस्सेअ वेअणा भणइ तं जणो आलिअम् ।
दन्तक्खअं कपोले वहूए वेअणा सवत्तीणम् ॥ ५३८ ॥

छाया—यस्यैव व्रणस्तस्यैव वेदना भणति जनस्तदलीकं ।
दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम् ॥

एषा च [1]विरोधबाधिनी न विरोधः, भिन्नाधारतयैव द्वयोरिह विरोधितायाः प्रतिभासात्, विरोधे तु विरोधित्वं एकाश्रयनिष्ठमनुक्तमपि पर्यवसितम्, अपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थितेः तथाचैवं निदर्शितम् ।

**समाधिः सुकरं कार्यं कारणान्तरयोगतः ।**

साधनान्तरोपकृतेन कर्त्रा यत् अक्लेशेन [2]कार्यमारब्धं समाधीयते, स समाधिर्नाम । उदाहरणम्—

---

द्भिन्नदेशतयाऽप्युपलभ्यते तद्युगपद्ग्रहणान्निषिद्धम् । तयोः कारणकार्ययोः । **स्वभावेति** । अन्येषु कार्यकारणेष्वेकदेशतयोत्पन्नयोः सङ्गतेस्त्यागः ।

**जस्सेअ इति** । अत्र दन्तक्षतं कारणं, वेदना कार्यं, ते च भिन्नदेशस्थे ।

**उत्सर्गस्येति** । विरोधः सामान्योक्तत्वादुत्सर्गः । भिन्नाश्रयत्वेनोक्तत्वादसङ्गतिर्विशेषः । **तथा चैवमिति** । विरोधालङ्कारेऽप्येकाधारत्वं विरोधस्योक्तमित्यर्थः ।

**साधनान्तरेति** । कारणान्तरकृतोपकारेण सम्यगाधानं समाधिः ।

---

[1] विरोधबोधिनी. [2] कार्यमारब्धमाधीयते.

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥ ५३६ ॥

**समं योग्यतया योगो यदि सम्भावितः क्वचित् ॥**

इदमनयोः श्लाघ्यमिति योग्यतया संम्बन्धस्य नियतविषयमध्यवसानं चेत्तदा समम् । तत् सद्योगेऽसद्योगे च उदाहरणम्—

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमो दत्तपत्रः स्मरस्य ।
जातं दैवात्सदृशमनयोः सङ्गतं यत्तदेतत्
शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥ ५३७ ॥

चित्रं चित्रं बत बत महाच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥ ५३८ ॥

---

मानमिति । अत्र मानापनयनं कार्यं । पादपातो हेतुः । घन गर्जितं हेत्वन्तरं । यस्मादक्लेशेन कार्यं सुकरं स्यादित्यर्थः ।

योग्यतयेति । वरस्य वरं हीनस्य हीनं योग्यमिति योग्यता ।

धातुरिति । अत्र वरं वरेण संघटितम् ।

चित्रमिति । अत्र हीनं हीनेन । निम्बकाकानां तथारूपत्वात् ।

क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात् ।
कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत् ॥ १२६ ॥
गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये ।
क्रमेण च विरुद्धे यत् स एष विषमो मतः ॥ १२७

द्वयोरत्यन्तविलक्षणतया यत् अनुपमानतयैव [1]योगः प्रतीयते (१), यच्च किञ्चिदारभमाणः कर्ता क्रियायाः प्रणाशात् न केवलमभीष्टं [2]तत्फलं न लभेत, यावदप्रार्थितमप्यनर्थं विषयमासादयेत् (२), तथा. सत्यपि कार्यस्य कारणरूपानुकारे यत् तयोर्गुणौ क्रिये च परस्परं विरुद्धतां व्रजतः (३।४) स समविपर्ययात्मा चतूरूपो विषमः ।

क्रमेणोदाहरणम्—

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना ।
अयं क्व च [3]कुकूलाग्निकर्कशो मदनानलः ॥ ५३९ ॥

सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहकासुतः ॥ ५४० ॥

---

क्वचिदिति । तयोरिति । कार्यकारणयोः । कारणसक्तौ क्रियागुणौ कार्यसक्तक्रियागुणौ च मिथो विरुध्येते इत्यर्थः ।

शिरीषादिति । अत्र मृद्वङ्गीस्मरानलयोरननुरूपत्वाद्वैषम्यम् ।

तमन्य इति । सिंहिकासुतौ राहुसिंहौ अत्र शशस्य स्वाधारबाधादाश्रयणक्रियाध्वंसः स्वस्य महाननर्थश्च ।

---

[1] योगो न प्रतीयते. [2] तत्फलं लभते यावद. [3] कुकूलाग्निदुःसहो मलयानिलः.

सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा।
तमालनीला शरदिन्दुपाण्डु [1]यशस्त्रिलोक्याभरणं प्रसूते ॥

आनन्दममन्दमिमं कुवलयदललोचने! ददासि त्वम्।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥ ५४२ ॥

अत्रानन्ददानं शरीरतापेन विरुध्यते।

एवम्—

विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा॥५४३

इत्यादावपि विषमत्वं [2]यथायोगमवगन्तव्यम्।

**महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात्।**
**आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ॥**

आश्रितं आधेयम्, आश्रयस्तदाधारः, तयोर्महतोरपि विषये तदपेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया यथाक्रमं यत् अधिकतरतां व्रजतः तदिदं द्विविधं अधिकं नाम। क्रमेणोदाहरणम्—

---

**तमालेति**। अत्र कृष्णगुणात्पाण्डुगुणोत्पत्तौ कार्यगुणः कारणगुणेन विरुद्धः। आनन्ददान(कार्य)तापक्रिये मिथो विरुद्धे। अत्र स्त्री कारणं, विरहः कार्यः।

एतल्लक्षणानुसारेणान्यदप्याह। **एवमिति**।

अत्र हीनो गुरुकार्यकारीति वैषम्यम्। **असकलयेति**। अपूर्णया।

---

[1] यशस्त्रिलोकाभरणं. [2] यथायोगमनुमन्तव्यम्.

अहो विशालं भूपाल! भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥५४४॥

युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥५४५

**प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया ।**
**या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते॥१२१॥**

न्यक्कृतिपरमपि विपक्षं [1]साक्षान्निरसितुमशक्तेन केनापि यत् तमेव प्रतिपक्षमुत्कर्षयितुं [2]तदाश्रितस्य तिरस्करणं तत् अनीकप्रतिनिधितुल्यत्वात् प्रत्यनीकमभिधीयते । यथा अनीके अभियोज्ये तत्प्रातिनिधिभूतमपरं [3]मूढतया केनचिदभियुज्यते, तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयत इत्यर्थः । उदाहरणम्—

---

मातीति । अत्र मातुमशक्यत्वेनाधेयरूपो यशोराशिर्महान्, जगत्त्रयं तु त्रिसंख्यत्वात्तुच्छम्, परं महतोऽपि यशोराशेराधारतया महीयस्त्वेनोक्तं, अन्यथा मानस्यासम्भवः ।

युगान्तेति । अत्र विष्णुतनुराधारः, स च महान्, स्वल्पा मुदस्त्वाधेयाः, परं तनावमानेन महत्तमत्वं नीताः ।

तदीयस्येति । प्रतिपक्षसक्तस्य । तत्स्तुत्यै प्रतिपक्षस्तुत्यै । रिपुं बलित्वात्तिरस्कर्तुमशक्तो यदा तदाश्रितं कोऽपि तिरस्करोति तदाऽयमलङ्कार इत्यर्थः ।

---

[1] साक्षान्निरसितुमसहनेन. [2] तदाश्रयस्य. [3] गूढतया.

त्वं विनिर्जितमनोभवरूपः सा च सुन्दर! भवत्यनुरक्ता।
पञ्चभिर्युगपदेव शरैस्तां [1]तापयत्यनुशयादिव कामः॥५४६॥

यथा वा—

यस्य किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते॥५४७॥

इन्दोरत्र तदीयता सम्बन्धिसम्बन्धात्।

**समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते।**
**[2]निजेनागन्तुना वाऽपि तन्मीलितमिति स्मृतम्॥**

सहजं आगन्तुकं [3]वा किमपि साधारणं यत् लक्षणं तद्द्वारेण यत् किञ्चित् केनचिद्वस्तु वस्तुस्थित्यैव बलीयस्तया तिरोधीयते, तत् मीलितमिति द्विधा स्मरन्ति।

---

त्वमिति। अत्र तां त्वयि रक्तां कामः शरैर्हन्तीति वास्तवोऽर्थः पश्चादुत्प्रेक्ष्यते। निर्जितत्वात्तथादनुशयादिवेति व्यङ्ग्योत्प्रेक्षाऽपि। त्वं भवति इति च प्रक्रमभङ्गः।

यथा वेति। अत्र विष्णव(स)शक्तो राहुः, तदीयं वक्त्रं, तस्य च सम्बन्धी सादृश्यादिन्दुः, तत्पराभवाद्विष्णोः प्रकर्षावगतिः।

इन्दोरिति। सम्बन्धि वक्त्रं तेनेन्दोस्सम्बन्धस्साम्यात्। तदीयता विष्णुसक्तता।

**समेन लक्ष्मणा** साधारणेनेत्यर्थः। **निजेन** स्वाभाविकेनेत्यर्थः। वस्तुना वस्त्वन्तरस्य तिरोधाने मीलितमिति सान्वयं नाम।

**बलीयस्तयेति** वचनान्न सामान्यालङ्कारता। तत्र हि साधारणगुणाश्रयेण भेदानुपलक्षणं न तूत्कृष्टगुणेन निकृष्टस्य तिरोधानम्।

---

[1] ताडयत्यनुशयादिव। (ताडयत्यनुशयादथ). [2] निजेनागन्तुकेनापि. [3] वाऽपि.

क्रमेणोदाहरणम्—

अपाङ्गतरले दृशौ [1]मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके [2]मृगदृशः स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ ५४८ ॥

अत्र दृक्तरलतादिकमङ्गस्य लिङ्गं स्वाभाविकम्, साधारणं च मदोदयेन, तत्राप्येतस्य दर्शनात् ।

ये कन्दरासु निवसन्ति सदा हिमाद्रेः
त्वत्पातशङ्कितधियो विवशा द्विषस्ते ।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो बत भियां न बुधोऽप्यभिज्ञः ॥ ५४९ ॥

[3]अत्र तु सामर्थ्यादवसितस्य शैत्यस्य अगन्तुकत्वात्तत्प्रभवयोरपि कम्पपुलकयोस्ताद्रूप्यं *समानता च, भयेष्वपि तयोरुपलक्षितत्वात् ।

---

**अपाङ्गेति** । अत्र दृष्टितरलत्वादिकं सहजं मदोदयकृतस्य दृष्टितरलत्वादेस्तिरोधायकम् ।

**तत्रापीति** । मदोदयेऽपि । **एतस्येति** । दृष्टितरलत्वादेः ।

**बुधोऽपीति** । शत्रुसंबन्धित्वेन भियां बुधोऽपि कलने न दक्षः ।

**सामर्थ्यं** । हिमाद्रिगुहानिवासरूपम् । **तत्प्रभवयोः** । शैत्यजयोः । **ताद्रूप्यं** आगन्तुकरूपकत्वम् । **समानतया** साधारण्येन । **तयोरिति** । कम्पपुलकयोः । **उपलक्षितत्वात्** दृष्टत्वात् ।

---

[1] मधुरवर्णवक्रा. [2] मृगदृशां. [3] अत्र सामर्थ्या.

* समानता चेत्यत्र समानतया इति पाठं सङ्केतकृन्मनुते.

**स्थाप्यतेऽपोह्यते वाऽपि यथापूर्वं परं परम् ।**
**विशेषणतया यत्र वस्तु सैकावली द्विधा ॥**

पूर्वं पूर्वं प्रति [1]यथोत्तरस्य वस्तुनो वीप्सया विशेषणभावेन यत् स्थापनं निषेधो वा सम्भवति, सा द्विधा बुधैरेकावली भण्यते । क्रमेणोदाहरणम्—

पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्ग्यः ।
रूपं समुन्मीलितसद्विलासम्, अस्त्रं विलासाः कुसुमायुधस्य॥

न तज्जलं [2]यन्न सुचारुपङ्कजं
न पङ्कजं तत् यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यः
न गुञ्जितं तन्न जहार यन्मनः ॥ ५९१ ॥

पूर्वत्र पुराणां वराङ्गनाः, तासामङ्गविशेषणमुखेन रूपम्, तस्य विलासाः, तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते। उत्तरत्र [3]प्रतिषेधेऽप्येवं योज्यम् ।

**यथाऽनुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।**
**स्मरणम्–**

यः पदार्थः केनचिदाकारेण नियतः यदा कदाचित् अनुभूतोऽभूत् स कालान्तरे स्मृतिप्रतिबोधाधायिनि तत्समाने वस्तुनि दृष्टे सति यत् तथैव स्मर्यते तत् भवेत् स्मरणम्। उदाहरणम्—

---

दृष्टे इति । उपलब्धिमात्रेऽत्र दृशिः ।

---

1 यत्रोत्तरोत्तरस्य. 2 यत्र न चारु. 3 प्रतिषेधेप्येवमेव

निम्ननाभि[1]कुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः ।
तद्भवैः [2]कुहरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम् ॥

यथा वा—

करजुअगहिअजसोआत्थणमुहविणिवेसिआहरपुडस्स ।
सम्भरिअ पञ्चजण्णस्स णमह कण्हस्स रोमाञ्चम् ॥५९३॥

{ छाया—करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य ।
संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥ }

## भ्रान्तिमान् अन्यसंवित्तत्तुल्यदर्शने ॥ १३२ ॥

तदिति अन्यत् अप्राकरणिकं निर्दिश्यते । तेन समानमर्थादिह प्राकरणिकमाश्रियते, तस्य तथाविधस्य दृष्टौ सत्यां यत् अप्राकरणिकतया संवेदनं स भ्रान्तिमान् ।

न चैष रूपकं [3]प्रथमा वा, तत्र वस्तुतो भ्रमस्याभावात् इह च अर्थानुगमनेन संज्ञायाः [4]प्रवृत्तेः तस्य स्पष्टमेव प्रतिपन्नत्वात् । उदाहरणम्—

---

तद्भवैरिति । प्लाविताम्भोभवैः । कुहरुतानि । कुहशब्दाः निम्ननाभिदेशोत्थाः । स्मारिता(?) इति ह्रस्वप्राप्तिः । सादृश्यं विना स्मृतिर्नालङ्कारः यथा—

"लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः" इत्यादि ।

करजुयेति । अत्र पूर्वभवानुभूतस्य स्मरणं, पूर्वत्र त्विहभवानुभूतस्य ।

प्रथमा वेति । निगीर्याध्यवसानरूपा । संज्ञाया इति । भ्रान्तिरास्ति यत्र गुम्फे स तथेत्येवंरूपायाः ।

---

[1] विवरेषु यदम्भः. [2] तद्भवैः कलरुतैः [3] प्रथमातिशयोक्तिर्वा.
[4] प्रवृत्तेः तस्याः.

कपाले मार्जारः पय इति करान् लेढि शशिनः
तरुच्छिद्रप्रोतान् बिसमिति करी सङ्कलयति ।
रतान्ते तल्पस्थान् हरति वनिताऽप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो [1]विप्लवयति ॥५५४॥

**आक्षेप उपमानस्य प्रतीपमुपमेयता ।**
**तस्यैव यदि वा कल्प्या तिरस्कार[2]निबन्धना ॥**

अस्य धुरं सुतरामुपमेयमेव वोढुं [3]प्रौढमिति [4]कैमर्थ्येन, यत् उपमानमाक्षिप्यते, यदपि तस्यैवोपमानतया प्रसिद्धस्य उपमानान्तराविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते, तत् ([5]उपमेयस्योपमानप्रतिकूलवर्तित्वात्) उभयरूपं प्रतीपम् ।

क्रमेणोदाहरणम्—

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः, किमेष विहितः पूषा, किमुत्पादितं
[6]चिन्तारत्नमदो मुधैव किममी सृष्टाः कुलक्ष्माभृतः॥५५५

---

तस्य भ्रमस्य । भ्रान्तिरत्र प्रतिभोत्था सादृश्यहेतुका च ग्राह्या, न स्वरसोत्था शुक्तिकारजतवत् । नापि प्रहारादिहेतुका मूर्छायां वस्तुभ्रमणवत् ।

**कैमर्थक्येनेति** । कोर्थोऽनेन । आक्षिप्यते आलोच्यते । **तस्यैवेति** । उपमानस्य । **उपमानान्तरेति** । मुखादेरतिचारुतयोपमानकल्पनया ।

**लावण्येति** । अत्रेन्द्वादिकमुपमानं कैमर्थक्येनाक्षिप्तम् । यथासङ्ख्यमप्यत्रास्ति ।

---

[1] विभ्रमयति. [2] निबन्धनम्. [3] प्रौढमित्यानर्थक्येन
[4] कैमर्थक्येनेति सङ्केतानुसारी पाठः [5] उपमेयस्य उपमानं प्रति प्रातिकूलं.
[6] चिन्तारत्नमहो.

ए एहि दाव सुन्दरि! कण्णं दाऊण सुणसु वअणिज्जम् ।
तुज्झ मुहेण किसोअरि! चंदो उअमिज्जइ जणेण ॥५८६॥

{ छाया—अयि एहि तावत् सुन्दरि! कर्णं दत्वा शृणुष्व वचनीयम् ।
तव मुखेन कृशोदरि! चन्द्र उपमीयते जनेन ॥ }

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतरगुणत्वात् उपमित्यनिष्पत्त्या 'वअणिज्जम्' इति वचनीयपदाभि[1]व्यङ्ग्यस्तिरस्कारः ।

क्वचित्तु निष्पन्नैवोपमितिक्रिया अनादरनिबन्धनम्, यथा—

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि [2]मुग्धे! ।
सन्तीदृशानि दिशि दिशि सरस्सु ननु नीलनलिनानि ॥ ५९७ ॥

इहोपमेयीकरणमेवोत्पलानामनादरः। अनयैव रीत्या यत् असामान्यगुणयोगात् नोपमानभावमपि अनुभूतपूर्वि तस्य तत्कल्पनायामपि भवति प्रतीपमिति प्रत्येतव्यम् । यथा—

---

ए एहीति । अयि एहि । अत्रोपमानतया ख्यातस्येन्दोरपकर्षार्थमुपमेयत्वमुक्तम् । मुखस्यार्थादुपमानत्वम् । अत्र चन्द्रस्याल्पगुणत्वात्सादृश्याभावादौपम्यस्यानिष्पत्तिः ।

गर्वमिति । भग्ना वराकी । अत्रोत्कृष्टानामुत्पलानामुपमेयत्वकल्पनैवानादरः । पूर्वत्र तूपमित्यनिष्पत्तिरेवानादरः ।

तत्कल्पनायामिति । उपमानत्वकल्पनायाम् ।

---

1 व्यङ्ग्यतया तिरस्कारः. 2 भद्रे.

अहमेव गुरुः सुदारुणानामिति हालाहल! तात! मास्म दृप्यः।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम्॥

अत्र, हालाहलस्योपमानत्वमसम्भाव्यमेवोपनिबद्धम्।

**प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया।**
**ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम्॥**

अतादृशमपि तादृशतया विवक्षितुं यत् अप्रस्तुतार्थेन [1]सम्पृक्तमपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते- तत् (समान[2]गुणनिबन्धनात्) सामान्यम्। उदाहरणम्—

मलयजरसविलिप्ततनवो नवहारलता[3]विभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः॥

अत्र प्रस्तुततदन्ययो[4]रन्यूनानतिरिक्ततया निबद्धं धवलत्वमेकात्मताहेतुः, अत एव पृथग्भावेन न तयोरुपलक्षणम्।

---

**अहमिति**। गुरुः उत्कृष्टः। अत्र यथा विषं मारकं न तथा खलवाक्यमिति विषस्योपमानत्वमसम्भाव्यं, अतः प्रतीपता।

**मलयजेति**। अत्रासतीचन्द्रद्युत्योरेकतरा प्रस्तुता, अन्या त्वप्रस्तुता। तथाऽत्र श्रीखण्डाङ्गरागादेश्चन्द्रांशुभिः सहाविभाव्यतां गता इत्यभेदेनोक्तिः। अष्टाविंशतिमात्रं द्विपदीच्छन्दः। तथा अत्र स्वगुणत्यागाभावान्न तद्गुणालङ्कारता।

**एकात्मतेति**। एकरूपत्वम्। एकस्य निह्नवोऽन्यस्य स्थापनमिति लक्षणाभावान्नापह्नुतिः।

---

[1] संयुक्त. [2] गुणसंबन्धात्सामान्यं. [3] विभूषणाः. [4] अन्यूनातिरिक्ततया.

यथा वा—

वेत्रत्वचा तुल्यरुचां वधूनां [1]कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः [2]सहेलं यदि नापतिष्यन् कोऽवेदयिष्यन्[3]नवचम्पकानि॥

अत्र निमित्तान्तरजनिताऽपि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते, प्रतीतत्वात्तस्य, प्रतीतेश्च बाधायोगात् ।

**विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितः ।**
**एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥ १३५ ॥**
**अन्यत् प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।**
**तथैव करणं चेति विशेष[4]स्त्रिविधः स्मृतः ॥१३६॥**

प्रसिद्धाधारपरिहारेण यदाधेयस्य विशिष्टा स्थितिरभिधीयते स प्रथमो विशेषः । उदाहरणम्—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः [5]कथमिह कवयो न ते वन्द्याः॥५६१॥

---

निमित्तान्तरेति । भृङ्गपातो निमित्तान्तरम्, नानात्वं भेदः । **न व्युदसितुमिति** । अत्र पूर्वमभेदो भातः पश्चाद्भेदः, न हि भातमभातं स्यादित्यर्थः । **तस्येति** । अभेदस्य ।

**एकात्मेति** । एकस्वभावा ।

**दिवमिति** । अनन्यत्रभावो विषयार्थे इत्यर्थात्कवयो विषयत्वेनाधाराः, तदभावेन वाचामाधेयानां स्थितिरुक्ता ।

---

[1] कर्णान्तता. [2] सखेलं. [3] नवपङ्कजानि. [4] त्रिविधो मतः. [5] कथमव.

[1]एकमपि वस्तु यत् [2]एकेनैव स्वभावेन युगपदनेकत्र वर्तते, स द्वितीयः। उदाहरणम्—

सा वसइ तुज्झ हिअए सा च्चिअ अच्छीसु सा अ वअणेसु।
अम्हारिसाण सुन्दर! ओआसो कत्थ पावाणम् ॥ ५६३ ॥

{ छाया—सा वसति तव हृदये सैवाक्ष्णोः सा च वचनेषु।
अस्मादृशीनां सुन्दर! अवकाशः कुत्र पापानाम् ॥ }

यदपि किञ्चिद्रभसेन आरभमाणस्तेनैव यत्नेनाशक्यमपि कार्यान्तरमारभते [3]सोऽपरो विशेषः। उदाहरणम्—

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजताऽनवद्यविद्यम्।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥

यथा वा—

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां [4]बत किं न मे हृतम् ॥ ५६४

सर्वत्र एवंविधविषयेऽ[5]तिशयोक्तिरेव प्राणत्वेनावतिष्ठते। तां विना प्रायेणालङ्कारत्वायोगात्, अत एवोक्तम्—

सा वसईति। अत्रैकैव स्त्री एकेनैव वसनरूपेण युगपच्चित्तादौ वर्तते।

विधिनेति। अत्र येनैव यत्नेन स्फुरदद्भुतरूपेत्यादिविशेषणवांस्त्वं सृष्टस्तेनैवाशक्यं कामादिगुरुरूपं कार्यान्तरमपि कृतम्। "प्रस्नवति वृषो गच्छन्" इत्यादौ नायमलङ्कारोऽशक्यत्वाभावात्।

गृहिणीति। इदं निरलङ्कारान्तरत्वेनोदाहृतं, पूर्वं तु सालंकारान्तरत्वेन, तत्र यथासङ्ख्यस्यापि भावात्।

[1] एकमेव. [2] एकेनववस्तुस्वभावेन [3] सोऽप्यपरो.
[4] वदाकिं. [5] अतिशयोक्तिरेव प्रमाणत्वेनाव.

"सैषा [1]सर्वत्र वक्रोक्तिः अनयाऽर्थो विभाव्यते।
यत्नोऽस्यां [2]कविना कार्यः कोऽलङ्कारोऽनया विना" ॥ इति

**स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्।**
**वस्तु तद्गुणतामेति, [3]भण्यते स तु तद्गुणः॥१३७॥**

वस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन [4]प्रगुणतया स्वगुणसम्पदोपरक्तं तत्प्रतिभासमेव यत्समासादयति स तद्गुणः तस्याप्रकृतस्य गुणोऽत्रास्तीति। उदाहरणम्—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः॥

अत्र रवितुरगापेक्षया गरुडाग्रजस्य तदपेक्षया च हरिन्मणीनां प्रगुणवर्णता।

**तद्रूपाननुहारश्चेदस्य [5]तत् स्यादतद्गुणः॥**

---

सैषेति। सा वक्रोक्तिः, एषैवातिशयोक्तिरिति योगः। विभाव्यते विशिष्टतया भाव्यत इत्यर्थः। विनेति। एतेन सर्वालङ्कारबीजमेषेति भामहाद्याः।

विभिन्नेति। करीर अङ्कुरः। प्रगुणवर्णता प्रकृष्टगुणवर्णता। मीलिते वस्तु वस्त्वन्तरेणाच्छादितं प्रतीयते, इह त्वनपह्नुतस्वरूपमेव वस्तु वस्त्वन्तरगुणोपरक्तं लक्ष्यत इति विवेकः। स्वगुणत्यागान्नापीदं सामान्यालङ्कारः।

अतद्गुण इति। तस्याधिकगुणस्यास्मिन् गुणा न सन्तीत्यतद्गुणः।

---

1 सर्वैव वक्रोक्तिः. 2 कविभिः कार्यः. 3 मन्यते.
4 प्रगुणसंपदोपरक्तं. 5 स स्यादतद्गुणः.

यदि तु तदीयं वर्णं सम्भवन्त्यामपि योग्यतायां इदं न्यूनगुणं न गृह्णीयात् तदा भवेदतद्गुणो नाम ।

उदाहरणम्—

धवलोऽसि जहवि सुन्दर! तहवि तुए मज्झ रञ्जिअं हिअअम् ।
राअभरिए वि हिअये सुहअ णिहित्तो ण रत्तोऽसि ॥

{ छाया—धवलोऽसि यद्यपि सुन्दर! तथापि त्वया मम रञ्जितं हृदयम् ।
रागभरितेऽपि हृदये सुभग! निहितो न रक्तोऽसि ॥ }

अत्रातिरक्तेनापि मनसा संयुक्तो न [1]रक्ततामुपगत इत्यतद्गुणः। किंच तदिति अप्रकृतं अस्येति च प्रकृतमत्र निर्दिश्यते । तेन यत् अप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तात् नानुविधीयते [2]सोऽतद्गुण इत्यपि प्रतिपत्तव्यम् । यथा—

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस! तव सैव शुभ्रता चीयते न च न चापचीयते ॥ ९६७

**यद्यथा साधितं केनाप्यपरेण तदन्यथा ।**
**[3]तथैव यद्विधीयेत स व्याघात इति स्मृतः ॥**

---

धवलोऽसीति । धवलौ वृषभर्तारौ । रागौ रङ्गानुरागौ । अत्र पूर्वार्धे विरोधो नोत्तरार्धे भिन्नाधारत्वेन रक्तारक्तत्वयोः प्रतीतिः । पूर्वार्धे धवलस्य विरुद्धरागजनकत्वेन विषमालङ्कारोऽपि ।

गाङ्गमिति । अत्र प्रकृतहंसस्याप्रकृतजलयोगेऽपि न तद्रूपतेत्यतद्गुणः ।

---

1 रक्ततामुपागत. 2 सोऽप्यतद्गुण 3 तथैव तद्विधीयेत.

येनोपायेन यत् एकेनोपकल्पितं तस्यान्येन जिगीषुतया तदुपायकमेव यत् अन्यथा करणम् स (साधितवस्तुव्याहति हेतुत्वात्) व्याघातः । उदाहरणम्—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः [1]स्तुवे वामलोचनाः ॥ ५६८ ॥

**[2]सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥१३९॥**

एतेषां समनन्तरमेवोक्तस्वरूपाणां यथासम्भवमन्योन्य निरपेक्षतया [3]यत् एकत्र (शब्दभाग एव, अर्थविषये एव, उभय त्रापि वा) अवस्थानं सा (एकार्थ[4]समवायस्वभावा) संसृष्टिः ।

---

दृशेति । अत्र दृग्रूपोपायेन येन हरः स्मरमधाक्षीत् तेनैव कान्ताः तमजीजिवन् । दाहस्य च जीवनीयत्वं विपक्षः, तेन निष्पादितवस्तुव्याहतिहेतुत्वाद्व्याघातता । विरूपाक्षस्येति वामलोचना इति च व्यतिरेकगर्भौ शब्दौ । ज(यि)यनीरिति व्यतिरेकोक्तिरिति अत्र व्यतिरेकनिमित्तताद्दृग्रूपोपाययोः भेदेऽप्यभेदातिशयोक्तिरपि । रस-वदाद्यलङ्काराः प्रागुक्ताः । आशीस्तु नालङ्कारः । प्रियोक्तिमात्रत्वात् । स्नेहात्मरत्याख्यभावत्वे भावध्वनित्वाद्वा ।

यथासम्भवमिति । न सर्वेषामेवालङ्काराणां किन्तु केषांचित् । तत्रापि क्वचिद्द्वयोः क्वचित्त्रयाणामित्यादि । शब्दार्थोभयालङ्कारविषय-त्वेन त्रिरूपत्वेऽपि संसृष्टेरेकरूपत्वमेव मिथोनैरपेक्ष्यरूपस्वरूपस्यैक त्वात् । **निरपेक्षतया** इत्युक्त्या तिलतण्डुलन्यायेनालङ्काराणां योगे संसृष्टिः । सङ्करस्तु स्वरूपेणैव नानात्वेनोक्तत्वात् त्रिधैव ।

---

[1] स्तुमो वामलोचनाः. [2] सैषा. [3] यदिह. [4] समवायसम्बन्धस्वभावा.

तत्र शब्दालङ्कारसंसृष्टिर्यथा—

[1]वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोलकलोलदृशाऽन्यया ॥

अर्थालङ्कारसंसृष्टिस्तु—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव [2]दृष्टिर्विफलतां गता ॥ ९७० ॥

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः। उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे ।

शब्दार्थालङ्कारयोस्तु संसृष्टिः—

सो णत्थि एत्थ गामे जो एअं महमहन्तलाअण्णम् ॥
तरुणाण हिअअलूडिं परिसक्कन्तीं णिवारेइ ॥९७१॥

---

तत्र नैरपेक्ष्याभावात् क्षीरनीरन्यायेनालङ्कारणां योगः ।

कुसुमेति । अत्र यमकानुप्रासाविति विजातीयालङ्कारसंसृष्टिर्यथा तथा लकलो लकलो इति कलोलकलोल इति च सजातीययमकालङ्कारसंसृष्टिरपि । तथाविधे इति । मिथो निरपेक्षे । उपमोत्प्रेक्षे इति । उत्तरपूर्वार्धगे विजातीये । लिम्पतीवेति वर्षतीवेत्युत्प्रेक्षे सजातीये, तयोरत्र संसृष्टिः ।

महमहंतेति । लसल्लावण्याम् । परिसक्कतीं परिष्वष्कमाणां क्रीडन्तीमित्यर्थः ।

---

[1] कुसुमसौरभेति संकेते पाठः. [2] दृष्टिर्निष्फलतां गता.

(छाया— स नास्त्यत्र ग्रामे य एनां महमहल्लावण्याम् ।
तरुणानां [1]हृदयलुण्टाकीं परिष्वष्कमाणां निवारयति ॥)

अत्रानुप्रासो रूपकं चान्योन्यानपेक्षे, संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात् ।

अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः ।

एत [2]एव यत्रात्मनि अनासादितस्वतन्त्रभावाः परस्परं अनुग्राह्यानुग्राहकतां दधति स (एषां सङ्कीर्यमाणस्वरूपत्वात्) सङ्करः । उदाहरणम्—

आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते ।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन्! गुञ्जाफलानां स्रज इति शबरा नैवहारं हरन्ति॥१७२

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतं तदाश्रयेण च तद्गुणः सचेतसां प्रभूतचमत्कृतिनिमित्तमित्यनयोरङ्गाङ्गिभावः । यथा वा—

---

रूपकं चेति । हृदयलुंठिमेव हृदयलुंठिमिति रूपम् । एकत्र वाक्य इति शब्दालङ्कारव्यक्तिः, छन्दसीत्यर्थालङ्कारोन्मेषः ।

अत्र तद्गुणमिति । शोणं बिम्बोष्ठेति वाक्यगम् ।

भ्रान्तिमतेति । गुञ्जाफलानां स्रज इति प्रोक्तेन । तदाश्रयेणेति । भ्रान्तिमदाश्रयेण ।

---

[1] लुण्ठिम् इति सङ्केतपाठः.   [2] एव तु दयात्मन्यनासादित.

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः।
परिभ्रम्यन्तारापरिकरकपालाङ्किततले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥५७३॥

उपमा रूपकं उत्प्रेक्षा श्लेषश्चेति चत्वारोऽत्र पूर्ववत् अङ्गाङ्गितया प्रतीयन्ते। [1]कलङ्क एवाक्षवलयमिति रूपकपरिग्रहे करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते, अस्य हि रूपकत्वे तिरोहितकलङ्करूपं अक्षवलयमेव मुख्यतयाऽवगम्यते, तस्यैव च करग्रहण [2]योग्यतायां सार्वत्रिकी प्रसिद्धिः, श्लेषच्छायया तु कलङ्कस्य करधारणं असदेव प्रत्यासत्त्या उपचर्य योज्यते, शशाङ्केन केवलं कलङ्कस्य मूर्त्यैवोद्वहनात्, कलङ्कोऽक्षवलयमिवेति तु उपमायां कलङ्कस्य उत्कटतया प्रतिपत्तिः, न चास्य करधृतत्वं

जटेति। करौ रश्मिहस्तौ। वैराग्यं लौहित्याभावोऽपि। अत्र जटाभाभिरित्युपमा। वलय इति रूपकम्। व्यापत्तेरिवेत्युत्प्रेक्षा। वैराग्येति श्लेषः। कपालेति रूपकम्। तद्धेतुरङ्किततल इति समानो धर्मः। पितृवन इवेत्युपमायाः चमत्कृतिहेतुः। भस्मनेवापाण्डुरित्युत्प्रेक्षा। अत्र श्लेषस्योपकारिण्युपमा, समुत्थापकत्वात्। श्लेषोऽपि रूपकोत्प्रेक्षयोरुपकारी। एतैस्सर्वैरुपकृता सत्युपमा चमत्करोति। कलङ्काक्षेत्यत्र किमुपमया रूपकेण वा समासः स्यादित्याह—कलङ्क एवेति। श्लेषच्छायाश्रयेण चन्द्रोऽपि करैः कलङ्कधार्येव परं न मुख्यया वृत्त्येत्याह। श्लेषेति। चन्द्रबिम्बे कराः कलङ्कश्चेति प्रत्यासत्तिः। न चास्येति। कलङ्कस्य।

[1] कलङ्क एवाक्षवलयमिति च रूप. [2] योग्यतया सार्व. [3] शशांकेन कलङ्कस्य.

तत्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात् ।

एवंरूपश्च सङ्करः शब्दालङ्कारयोरपि परिदृश्यते । यथा—

राजति तटीयमभिहतदानवरासातिपाति-सारावनदा ।

गजता च यूथमविरत दान-वरा-साऽतिपाति सारा वनदा ॥

अत्र यमकमनुलोमप्रतिलोमश्च चित्रभेदः, [1]पादद्वयगते परस्परापेक्षे ।

**एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥१४१॥**

द्वयोर्बहूनां वा अलङ्काराणामेकत्र समावेशेऽपि [2]विरोधात् न यत्र युगपदवस्थानम्, न चैकतरस्य परिग्रहे साधकम्, तदितरस्य वा परिहारे बाधकमस्ति, येनैकतर एव परिगृह्येत,

---

**मुख्ये**ऽपीति । उपमापक्षे कलङ्के उपचारस्यागतिकगतित्वान्नाङ्गीकारः ।

**राजतीति** । अभिहतो दानवानां रासः सिंहनादो येनेति शम्भोरामन्त्रणम् । अतिपातिनो वेगगामिनः सारावा नदा यस्यां सा तथा । सा च गजता अतिपाति रक्षति । अविरतं दानेन वरा, सारा स्थिरा, वनं दयते वनदा, अवनं वा त्राणं ददात्यवनदा ।

शब्दवच्छब्दालङ्कारयोः अत्राङ्गाङ्गिभावाभावान्नैरपेक्ष्ये संसृष्टिरेवेत्याह—**परस्परेति** । मिथो विवेकेन द्वयोरिह वृत्तेरभावे सापेक्षत्वेनानुग्राह्यानुग्राहकभावः । असावनुग्राह्योऽसावनुग्राहक इति निर्णेतुमशक्यत्वे मिथःकाऽपेक्षा शब्दालङ्कारयोरिति * संसृष्टिरेवात्र युक्ता । यद्वा शब्दालङ्कारद्वयस्यैकवाचकगत्वे तृतीयसङ्करः ।

---

[1] पादद्वयगतेन परस्परापेक्षः. [2] विरोधाद्यत्र युगपदवस्थानासंभवः न चैक.

* अलङ्कारसर्वस्वकृन्मतमेतद्.

स निश्चयाभावरूपो द्वितीयः सङ्करः, समुच्चयेन संकरस्यैवाक्षेपात्। उदाहरणम्—

जह गहिरो जह रअणणिब्भरो जह अ णिम्मलच्छाओ।
तह किं विहिणा एसो सरसवाणीओ जलणिही ण किओ॥

{ छाया—यथा गभीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः।
तथा किं विधिना एष सरसपानीयो जलनिधिर्न कृतः॥ }

अत्र समुद्रे प्रस्तुते (विशेषणसाम्यादप्रस्तुतार्थप्रतीतेः) किमसौ समासोक्तिः; किम् (अब्धेरप्रस्तुतस्य मुखेन कस्यापि तत्समगुणतया प्रस्तुतस्य प्रतीतेः) इयमप्रस्तुत प्रशंसा? इति सन्देहः यथा वा—

नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति।
[1]अधुनाऽपि निरुद्धाशमविशीर्णमिदं तमः॥ ५७६॥

अत्र, किं कामस्योद्दीपकः कालो वर्तते इति भङ्ग्यन्तरेणाभिधानात्) पर्यायोक्तम्; उत (वदनस्येन्दुबिम्बतया अध्यवसानात्) अतिशयोक्तिः; किं वा (एतदिति वक्त्रं निर्दि-

---

समुच्चयेनेति। एकस्य चेत्यत्र चकारेण।

सरसेति। सरसपानीयः सरसवाणिकश्च।

नयनेति। आशा आस्थाऽपि। तमो मोहोऽपि।

एतयोरिति। वक्त्रबिम्बयोः।

समुच्चयेति। बिम्बं मुखं चैतत्प्रसीदति इति भङ्ग्या एकस्य-

---

[1] अधुनाऽपि निरुद्धाशं.

श्य तद्रूपारोपवशात्) रूपकम्; [1]अथवा, (तयोः समुच्चयविवक्षायां) दीपकम्; अथवा तुल्ययोगिता; किमु, (प्रदोषसमये विशेषणसाम्यादाननस्यावगतौ समासोक्तिः; आहोस्वित् (मुखनैर्मल्यप्रस्तावात्) अप्रस्तुतप्रशंसा? इति बहूनां सन्देहादयमेव सङ्करः।

यत्र तु न्यायदोषयोरन्यतरस्यावतारः, तत्र एकतरस्य निश्चयात् न संशयः। न्यायश्च साधकत्वम् (अनुकूलता)। दोषोऽपि बाधकत्वम् (प्रतिकूलता)। तत्र—

"सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः"।

इत्यत्र मुख्यतया अवगम्यमाना हासद्युतिर्वक्त्र एवानुकूल्यं भजते इत्युपमायाः साधकं शशिनि तु न तथा प्रतिकूलेति रूपकं प्रति तस्या अबाधकता।

"वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः ॥५७८॥

---

प्रकृतत्वेऽन्यस्याप्रकृतत्वे दीपकम्। द्वयोरप्रकृतत्वे तुल्ययोगिता।

अयमेवेति। अनिश्चयात्मा।

वक्त्रेति। अत्र वक्त्रं शशीवेत्युपमा, न तु वक्त्रमेव शशीति रूपकमित्याह—मुख्यतयेति। हासद्युतिः प्रकृतत्वान्मुख्या। सा च वक्त्रानुगुणेत्युपमासाधिका। तस्या इति। हासद्युतेः। एतस्याश्च शुक्लतया चन्द्रेऽपि किञ्चिदानुकूल्यमस्तीत्यतो न बाधकत्वम्।

वक्त्रेन्दाविति। अत्रापरत्वं रूपकस्य साधकतां प्रतिपद्यत इति योगः।

---

[1] अथैतयोः.

इत्यत्रापरत्वमिन्दोरनुगुणं न तु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकतां प्रतिपद्यते, न तूपमाया बाधकताम् ।

'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्' ।

इत्यत्र पुनरालिङ्गनमुपमां निरस्यति, सदृशं प्रति परप्रेयसीप्रयुक्तस्यालिङ्गनस्या[1]सम्भवात् ।

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं [2]भवतु नो विजयाय मञ्जु
मञ्जीर शिञ्जितमनोहरमम्बिकायाः ॥ ५८० ॥

इत्यत्र मञ्जीरशिञ्जितं अम्बुजे प्रतिकूलं असम्भवादिति रूपकस्य बाधकम्, न तु पादेऽनुकूलमित्युपमाया-

अपरत्वमिति । वक्त्रस्य बहुत्वादपरत्वमविस्मयावहमिति नानुकूलं च, चन्द्रे त्वेकत्वाद्विस्मयावहत्वेऽनुकूलमेव ।

साधकत्वेनोक्त्वा बाधकत्वेनाह । **राजेति** । राजैव नारायण इति रूपकसमासः । उपमानप्राधान्ये रूपकमुपमेयप्राधान्ये उपमेति सर्वत्र ज्ञेयम् ।

**सदृशमिति** । राजानम् । **प्रेयसी** लक्ष्मीः । निजपतितुल्यमन्यं कान्ता नालिङ्गतीत्यर्थः ।

**पादाम्बुजमिति** । अत्रोपमायां पादप्राधान्ये नूपुरध्वनियोगो घटते । रूपके त्वम्बुजप्राधान्ये न घटते ।

[1] असम्भवादिति. [2] भवतु वो.

साधकमभिधीयते, विध्युपमार्दिनो बाधकस्य तदपेक्षयोत्कट-त्वेन प्रतिपत्तेः एवमन्यत्रापि सुधीभिः परीक्ष्यम् ।

**[1]स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयम् ।**
**व्यवस्थितं च ।**

[2]अभिन्ने एव पदे स्फुटतया यत् उभावपि शब्दा-र्थालङ्कारौ व्यवस्थां समासादयतः सोऽप्यपरः सङ्करः ।

उदाहरणम्—

स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दल[3]कलापमुखावतार
बद्धान्धकारमधुपावलि संचुकोच ॥ ५८१ ॥

अत्र एकपदानुप्रविष्टौ रूपकानुप्रासौ ।

**तेनासौ त्रिरूपः परिकीर्तितः ॥ १४१ ॥**

---

विध्युपमर्दिन इति । यद्यपि मञ्जीरशिञ्जितं रूपकविभिच्छे-देन बाधकं पादानुकूल्यादुपमां प्रति साधकं च स्यात्, तथाऽपि बाधकत्वेन व्यपदेशः । 'प्रधानेन व्यपदेशा भवन्ति' इति न्यायात् । साधकत्वापेक्षया बलिष्ठत्वेनोत्कटतया प्रतीतेर्बाधकत्वं प्रधानम् । तद-पेक्षयेति । साधकत्वापेक्षया ।

अत्रैकपदेति । यद्यप्येतदखिलवाक्यगं सावयवं रूपकं तथाऽपि प्रतिपदं रूपकभावात्तथा व्यपदेश इत्येकपदानुप्रवेशः । शब्दार्थवृत्त्य-लङ्कारस्तूद्दिष्टोक्तः संसृष्टिरेवेति त्रिधैव ।

---

[1] स्फुटमेकार्थविषये. [2] अभिन्न एव पदे. [3] कलापमुखावतार.

तदयमनुग्राह्यानुग्राहकतया, सन्देहेन, एकपदप्रतिपाद्यतया च व्यवस्थितत्वा[1]त्त्रिप्रकार एव सङ्करो व्याकृतः। प्रकारान्तरेण तु न शक्यो व्याकर्तुं आनन्त्यात्तत्प्रभेदानामिति प्रतिपादिताः शब्दार्थोभयगतत्वेन त्रैविध्यजुषोऽलङ्काराः।

कुतः पुनरेष नियमो यदेतेषां तुल्येऽपि काव्यशोभातिशयहेतुत्वे कश्चिदलङ्कारः शब्दस्य, कश्चिदर्थस्य, कश्चिच्चोभयस्य? इति चेत् उक्तमत्र, यथा—काव्ये दोषगुणालङ्काराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः, निमित्तान्तरस्याभावात्; ततश्च योऽलङ्कारो [2]यदीयान्वयव्यतिरेकावनुविधत्ते, स तदलङ्कारो व्यवस्थाप्यत इति। एवं च यथा पुनरुक्तवदाभासः परम्परित[3]रूपकं चोभयोर्भावाभावानुविधायितया [4]उभयालङ्कारौ, तथा शब्दहेतुकार्थान्तरन्यासप्रभृतयोऽपि द्रष्टव्याः। अर्थस्य तु [5]तत्र वैचित्र्यं उत्कट-

---

प्रकारान्तरेणेति। प्रकारत्रयादन्यप्रकारेण सर्वेऽलङ्काराः सङ्करे उदाहर्तुमशक्या इत्यर्थः। तत्प्रभेदास्त्रयः प्रकाराः तेषामपि भेदाः तत्तदलङ्कारान्तरयोगाः।

भावाभावाविति। भावोऽन्वयः। अभावो व्यतिरेकः।

प्रभृतयोऽपीति। प्रभृतिभणनादपह्नुतिसहोक्तिश्लेषसंसृष्टिदीपकाद्या ज्ञेयाः।

अर्थस्य त्विति। वस्तुतया परम्परितरूपकादेरुभयालङ्कारतया

---

[1] त्रिप्रकारतयैव सं. [2] यदीयौ भावाभावावनु. [3] रूपकं चोभयो.
[4] अलङ्कारौ व्यवस्थापितौ. [5] तत्रैव वैचित्र्य.

तया प्रतिभासते इति वाच्यालङ्कारमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः।

योऽलङ्कारो यदाश्रितः स तदलङ्कार इत्यपि कल्पनायां [1]अन्वयव्यतिरेकावेव समाश्रयितव्यौ, तदाश्रयणमन्तरेण विशिष्टस्याश्रयाश्रयिभावस्याभावादिति अलङ्काराणां यथोक्तनिमित्त एव परस्परव्यतिरेको ज्यायान्।

**एषां दोषा यथायोगं सम्भवन्तोऽपि केचन।**

**[2]उक्तेष्वन्तर्भवन्तीति न पृथक् प्रतिपादिताः॥**

तथाहि—अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोध इति ये [3]त्रयो दोषाः, ते प्रसिद्धिविरुद्धतां अपुष्टार्थत्वं प्रतिकूलवर्णतां च [4]यथाक्रमं न व्यतिक्रामन्ति, तत्स्वभावत्वात्। क्रमेणोदाहरणम्—

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्जटिर्धूर्ध्वजाग्रान्
अक्षे नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः।

---

भिन्नत्वेन वक्तुं युक्तावर्थालङ्कारेषु तत्पाठोऽर्थस्योत्कटतया वैवश्यात्। एवं पुनरुक्ताभासोऽपि शब्दस्योत्कटवैचित्र्याच्छब्दालङ्कारत्वेनोक्तः।

नन्वाश्रयाश्रयिभावः शब्दालङ्कारत्वहेतुर्न त्वन्वयव्यतिरेकावित्याह—**योऽलङ्कार इति। विशिष्टस्येति।** यत्राश्रयस्य नित्यत नास्ति नित्यस्य हि नान्वयव्यतिरेकौ निबन्धनं, नित्यस्य व्यतिरेकाभावात्। **व्यतिरेको** भेदः।

**एषामिति।** अलङ्काराणाम्। **उक्तेष्विति।** दोषेषु। **अनर्था इति।** दोषाः।

---

[1] अन्वयव्यतिरेकाववश्यमा. [2] उक्तेष्वन्तः पतन्तीति. [3] त्रयोऽनर्थास्ते इति सङ्केतकृत्संमतः पाठः. [4] यथाक्रमं नातिक्रामन्ति.

रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिम[1]रुचेः सोऽवतात् स्यन्दनो वः॥

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिः अनुप्रासानुरोधेनैव [2]कृता, न पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोधः ।

भण तरुणि ! रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ।
यदि [3]सल्लीलोल्लासिनि गच्छसि तत् किं त्वदीयं मे ॥५८३॥
[4]अननुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे ! रणरणकमकारणं कुरुते ॥५८४॥

अत्र वाच्यस्य [5]विचिन्त्यमानं न किञ्चिदपि चारुत्वं प्रतीयते इत्यपुष्टार्थतैवानुप्रासस्य वैफल्यम् ।

"अकुण्ठोत्कण्ठया" इति । अत्र शृङ्गारे परुषवर्णाडम्बरः पूर्वोक्तरीत्या विरुध्यते इति परुषानुप्रासोऽत्र प्रतिकूल[6]वर्णतैव वृत्तिविरोधः ।

यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः । यथा—
भुजङ्गमस्येव मणिः सदम्भा ग्राहावकीर्णेव नदी सदम्भाः ।

---

प्रसिद्धीति । कदाचिच्चक्री चक्कारप्रियोऽपि स्यात् अन्यानि तु न घटन्त एव ।

रमणेति । रमणं क्रीडा न प्रियः ।

अकारणमिति । अस्याघटनात् ।

अकुण्ठेति । शृङ्गारे ह्युपनागरिकी वृत्तिर्योग्या ।

भुजङ्गमस्येति । सदंशब्दो निपातः छान्दसः सदार्थः सदं भासते सदम्भाः ।

---

[1] रुचः सो. [2] प्रतिपादिता. [3] सल्लीलोल्लापिनि.
[4] चरणरणन्मणि । अनणुरणन्मणि. [5] विवेच्यमानं. [6] वर्णता वृत्ति.

दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः [1]प्रसभं सदम्भाः ॥

उपमायां उपमानस्य जातिप्रमाणगतन्यूनत्वम्, अधिकता वा तादृश्यनुचितार्थत्वं दोषः; धर्माश्रये तु न्यूनाधिकत्वं यथाक्रमं हीनपदत्वमधिकपदत्वं च न व्यभिचरतः। क्रमेणोदाहरणम् —

चण्डालैरिव युष्माभिः साहसं परमं कृतम् ॥ ५८७॥

वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ॥ ५८८॥

अयं पद्मासनासीनश्चक्रवाको विराजते।

युगादौ [2]भगवान् वेधा विनिर्मित्सुरिव प्रजाः ॥ ५८९॥

पातालमिव ते नाभिः स्तनौ क्षितिधरोपमौ।

वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ॥ ५९०॥

अत्र चण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव कदर्थित इत्यनुचितार्थता।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन्।

व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥ ५९०॥

अत्रोपमानस्य मौञ्जीस्थानीयस्तटिल्लक्षणो धर्मः केनापि पदेन

सदम्भाः सज्जलाः। सदम्भाः खलाः। **तादृशीति**। जातिप्रमाणगता।

**चण्डालैरिति**। अत्र जातिर्न्यूना।

वह्नीत्यत्र प्रमाणम्।

**पातालमिति**। पातः प्रवाहः। अत्र प्रमाणस्याधिक्यम्।

अयं पद्मेत्यत्र तु जातेः।

[1] प्रमुखे सदम्भाः.    [2] भगवान् स्रष्टा.

न प्रतिपादित इति हीनपदत्वम् ।

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः ॥५९१

अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यते इत्यधिकपदत्वम् ।

लिङ्गवचनभेदोऽपि उपमानोपमेययोः साधारणं चेत् [1]धर्ममन्यरूपं कुर्यात् तदा एकतरस्यैव तद्धर्मसमन्वयावगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा [2]प्रतीयमानेन धर्मेण प्रतीयत इति प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमरूपत्वम् । यथा —

चिन्तारत्नमिव च्युतोऽसि करतो धिङ्मन्दभाग्यस्य मे ॥५९२
सक्तवो भक्षिता देव! शुद्धा कुलवधूरिव ॥५९३ ॥

यत्र तु नानात्वेऽपि [3]लिङ्गवचनयोः, सामन्याभिधायि पदं स्वरूपभेदं नापद्यते न तत्र तद्दूषणावतारः, [4]उभयथाऽपि अस्य अनुगमक्षमस्वभावत्वात् । यथा—

अन्यरूपमिति । उपमेयरूपमुपमानरूपं वा । तस्येति । धर्मिणः ।

प्रतीयमानेन । शब्दानुक्तेनोभयानुगमक्षमेण शब्दोक्तसमानधर्मव्यतिरिक्तेन केनापीत्यर्थः । भग्नेति । उपमेयस्य विशेषणादिकमुपमाने चेन्न निर्व्यूढं तदा क्रमभङ्गः ।

चिन्तेति । अत्र च्युतत्वादिको धर्म उपमानोपमेययोः प्रत्येकमन्यलिङ्गवचन इति प्रक्रमभङ्गः । लिङ्गवचनविपरिणामेन यद्यपर-

1 धर्ममनन्यरूपं.
2 प्रतीयमानेनापि धर्मेण.
3 लिङ्गवचसोः.
4 उभयथार्थस्यानुगम.

गुणैरनर्घैः प्रथितो रत्नैरिव महार्णवः ॥ ५९४ ॥
तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥ ५९५ ॥

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया विश्रान्तिमासादयतीति असावपि भग्नप्रक्रमतयैव व्याप्तः । यथा—

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
पश्चिमात् यामिनीयामात् प्रसादमिव चेतना ॥ ५९६ ॥

अत्र चेतना प्रसादमाप्नोति, न पुनरापेति कालभेदः ।

प्रत्यग्रमज्जनविशेष[1] विविक्तमूर्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥ ५९७ ॥

---

स्यापि सम्बन्धः तदा व्यासरूपवाक्यभेदे वाक्यद्वयी । तथा सति प्रतीतिः व्यवधीयते, विपरिणामश्च साहित्येन स्यात् ।

अनर्घैरिति । गुणरत्नानां पुंल्लीबानां विशेषणत्वेऽपि न स्वरूपभेदः ।

असदृश इति । टक्क्विन्तत्वे* स्यन्तं जसन्तं च । मधुरतया भृतो मधुरतां वा बिभ्रतीति ।

न तथेति । कोविदप्रसिद्धप्रकारेण ।

प्रत्यग्रेति । मज्जने स्नानब्रुडने, ताभ्यां विशेषेण विविक्ता मूर्तिर्यस्याः सा तथा । अन्तशब्दः स्वरूपे सम्बन्धे वा । लता त्वंशुभिः

---

[1] विविक्तकान्तिः

* इदं हेमचन्द्रव्याकरणमनुरुध्योच्यते.

अत्र, लता विभ्राजते न तु विभ्राजसे इति [1]सम्बोध्यमाननिष्ठस्य परभागस्य असम्बोध्यमानविषयतया व्यत्यासात् पुरुषभेदः।

गङ्गेव प्रवहतु ते सदैव कीर्तिः ॥ ५९८ ॥

इत्यादौ च गङ्गा प्रवहति न तु प्रवहतु इति अप्रवृत्तप्रवर्तनात्मनो विधेः। एवंजातीयकस्य च अन्यस्यार्थस्य [2]उपमानगतस्यासम्भवाद्विध्यादिभेदः।

ननु समानमुच्चारितं प्रतीयमानं [3]वा धर्मान्तरमुपादाय पर्यवसितायामुपमायामुपमेयस्य प्रकृतधर्माभिसम्बन्धात्

---

कान्ता। अर्चयन्ती शोभयन्ती च। अत्र राज्ञी सम्बोध्या न लता। परभागो युष्मदर्थः।

विधेरिति।अप्रवृत्तप्रवृत्तिरूपस्य गङ्गायामसम्भवादिति योगः।

एवंजातीयकस्येति। निमन्त्रणादेः 'गमिष्याम्यपहास्यतवामन इव' इत्यादाविव क्वचित्कालपुरुषविध्यादियोगेनापि दोषस्स्यात्।

उच्चारितमिति। शब्दोक्तम्। प्रतीयमानमिति। अनुक्तमपि गम्यमित्यर्थः। यथा पद्ममिव मुखमित्यादौ भातीत्यादिगम्यधर्मान्तरेणोपमा। कालादिभेदवाचकात्तु काव्ये साक्षादुक्ताद्धर्मादन्यो धर्मो धर्मान्तरम्। प्रकृतेति। कालादिभेदवाची प्रकृतो धर्मः आपेत्यादिः।

---

[1] संबोध्यमाननिष्ठस्य पुरुषभागस्य. [2] उपमानाङ्गभूतस्या.

[3] वा साधर्म्यान्तरं.

न [1]कश्चित्कालादिभेदोऽस्ति।

यत्राऽप्युपात्तेनैव सामान्यधर्मेण उपमा अवगम्यते, यथा—"युधिष्ठिर इवायं सत्यं वदति"—इति, तत्र युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति प्रतिपत्स्यामहे। सत्यवादी सत्यं वदतीति च न पौनरुक्त्यमाशङ्कनीयम्, रैपोषं पुष्णातीतिवत् [2]युधिष्ठिर इव सत्यवदनेन सत्यवाद्ययमित्यर्थावगमात्। सत्यमेतत्, किन्तु स्थितेषु प्रयोगेषु समर्थनमिदम्, न तु सर्वथा निरवद्यम्, प्रस्तुतवस्तु[3]प्रतीतिव्याघातादिति सचेतस एवात्र प्रमाणम्।

असादृश्यासम्भवावप्युपमायां अनुचितार्थतायामेव पर्यवस्यतः। यथा—

ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ॥ ५९९॥

अत्र काव्यस्य शशिना अर्थानां च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम्।

निपेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः।
जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिणोऽर्कात्॥

---

सामान्यधर्मेणेति। कालादिभेदवाचिना। युधिष्ठिरो ह्यवदत् अयं तु वदतीति कालभेदो व्यक्तः। सत्यवाद्ययमिति। युधिष्ठिर इव सत्यवादी सप्तमौ सत्यं वदति णिनौ कालानिर्देशान्न कालभेदः। सत्यवादित्वधर्मं गम्यमादायात्रोपमानिर्वाहे न कालभेद इत्यर्थः।

---

[1] कश्चित्कालभेदोऽस्तीति. [2] युधिष्ठिरवत्सत्यवचने. [3] प्रतीतिविघातादिति.

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलात् निष्पतन्त्यो न स-म्भवन्तीत्युपानिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति । उत्प्रेक्षाया-मपि सम्भावन [1]ध्रुवेवादय एव शब्दा [2]वक्तु सहन्ते, न यथा-शब्दोऽपि, केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्याप्त-त्वात्, तस्य चास्यामविवक्षितत्वादिति तत्राशक्तिरस्यावाच-कत्वं दोषः । यथा—

उदयौ दीर्घिकागर्भात् मुकुलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्का सङ्कुचितं यथा ॥ ६०१ ॥

उत्प्रेक्षितमपि तात्विकेन रूपेण परिवर्जितत्वात् निरुपाख्य-प्रख्यम्, तत्समर्थनाय यत् अर्थान्तरन्यासोपादनम् तत् आलेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति [3]निर्विषयत्वमेतस्या-नुचितार्थतैव दोषः । यथा—

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने [4]ममत्वमुच्चैः शिरसामतीव ॥ ६०२

अत्राचेनतस्य तमसो दिवाकरात्त्रास एव न सम्भवतीति

---

न संम्भवन्तीति । कथं तदुपमानीभविष्यन्तीति भावः ।

केवलस्येति । असमासस्थस्य, समासस्थस्तु योग्यताद्यर्थ-वादी स्यात् । तस्य चेति । साधर्म्यस्य । अस्यामिति । उत्प्रेक्षा-याम् । तत्रेति । सम्भावनाभिधाने ।

मेचकोत्पलं । नीलोत्पलम् । प्रख्यमिति । निर्गताभि-धानप्रत्ययम् ।

---

[1] ध्रुवेवबादय एव. [2] वक्तुमुत्सहन्ते. [3] निर्विषयत्वमेव.
[4] ममत्वमुच्चैश्शिरसां सतीव.

कुत एव तत्प्रयोजितमद्रिणा परित्राणम्, [1]सम्भावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव [2]तत्समर्थनायां यत्नः।

साधारणविशेषणवशादेव समासोक्तिरनुक्तमपि उपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावादनुपादेयत्वं यत् तत् अपुष्टार्थत्वं पुनरुक्तत्वं वा दोषः। यथा—

स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया।
अतनुमानपरिग्रहया स्थितं रुचिरया [3]चिरयायिदिनश्रिया॥

अत्र तिग्मरुचेः ककुभां च यथा सदृशविशेषणवशेन

---

प्रतिभासमानस्यास्येति। उत्प्रेक्षणरूपस्य।

व्यर्थ एवेति। उत्प्रेक्षामात्रमेवात्र युक्तं न तत्समर्थकोऽर्थान्तरन्यासः। दिवाभीतशब्दस्योलूकार्थत्वेन समुचितोपमाख्यायां नैतद्दोषावतारः।

तस्येति। उपमानविशेषस्य।

स्पृशतीति। तापः खेदोऽपि। मानशब्दः परिमाणाभिमानयोः। चिरयायिदिनः दीर्घाहो निदाघः।

सदृशेति। रवेः करैरिति सदृशमनुकूलं विशेषणम्। दिनश्रियास्तु तापयेति विशेषणम्। व्यक्तिर्लिङ्गम् तद्विशेषः पुंस्त्वं स्त्रीत्वं च।

---

[1] संभावितक्रमेण. [2] तत्समर्थनार्थं (तत्समर्थनायां प्रयत्नः)
[3] चिरया दिवसश्रिया. (चिरयाऽपि दिनश्रिया)

नायकतया नायिकात्वेन च व्यक्तिः तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति किं दयितयेति स्वशब्दोपादानेन।

श्लेषोपमायास्तु स विषयः, यत्रोपमानस्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः। यथा—

स्वयं च पल्लवाताम्रभास्वत्करविराजिता।
प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा ॥६०४॥ इति।

अप्रस्तुतप्रशंसायामपि उपमेयं अनयैव रीत्या प्रतीतं न पुनः प्रयोगेण कदर्थतां नेयम्। यथा—

आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्यते
मध्येवारिधि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम्।

---

नायकतयेति। नायकश्च नायिका चेत्येकशेषः। ननु यथा प्रियां स्पृशन्तं प्रियं दृष्ट्वा अन्यस्यास्तापः स्यात्तथाऽर्के दिशः स्पृशति सति ग्रीष्मश्रियोऽपि ताप इति श्लेषोपमेयामिति दयितयेति युक्तमित्याह। श्लेषेति न तथेति। समासोक्तिप्रतीतिः।

स्वयं चेति। न सुखेनाप्यत इत्यस्वापं दुर्लभं यत्फलं तल्लुब्धानामीहितप्रदा। स्वापस्य शयनस्य फले विश्रान्तौ यो न लुब्धः तत्र हितप्रदा। अत्र श्लेषोपमैव, सन्ध्योपमानोपादानं विना समासोक्तिप्रतीतेरभावात्।

री(नी)त्येति। साधारणविशेषणरूपया।

मध्य इति। तृणप्रायो मणिरप्रधानः काचादिः। न कम्पते न बिभेति।

खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनाम्
धिक् सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥६०९॥

अत्र अचेतनस्य प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तौ न युक्तमेव पुनः कथनम् ।

तदेतेऽलङ्कारदोषाः यथासम्भविनोऽप्येवंजातीयकाः पूर्वो-

---

अप्रस्तुतेति । अप्रस्तुतमचेतनत्वेन विशेषितं च यत्सामान्यं मशकादि तद्द्वारेण ।

अन्येऽपीति । यथा—

क्वचित्काले * प्रसरता क्वचिदापत्य निघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥

अत्रोपमायां शुनोपमानेन प्रकृतार्थकथनेऽनुचितार्थता क्वचिदिति सामान्येन निष्पाद्य पश्चात्कालेन योगः । अन्यथा तु दानिषेधश्चिन्त्यः । प्रोत्साहनिन्दादावनुचिताऽर्थताऽपि न दोषः, यथा—

"हनूमानिव प्रेषणे प्रेष्य एषः" ।

"वियोगे मारकः स्त्रीणां चण्डाल इव चन्द्रमाः ॥" इत्यादौ ।

"यस्यार्कसुभगा मूर्तिः सच्चक्रानन्ददायिनी"

अत्रार्केण सह मूर्तेः साम्यं वाच्यं न सुभगत्वमात्रं, सच्चक्रेति विशेषणवैयर्थ्यप्रसङ्गात् । न च तत्साम्यं तुल्यादिशब्दवत्सुभगशब्दो वक्तीत्युपमां प्रत्यवाचकत्वम् ।

"राजा कुवलयोल्लासी पीयूषांशुरिवारुचत्" ।

---

* क्वचिदग्रे प्रसरता इति काव्यानुशासने,

इत्यादौ राजशब्दस्योभयार्थत्वेन श्लेषनिष्पत्त्या स्वार्थसिद्धौ यदौपम्यकल्पनं तदधिकम् । औपम्यं ह्यार्थमेव द्वयं व्यङ्ग्यत्वान्न शाब्दम् । एवं ।

"दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव"

इत्यत्र राजेति श्लेषं हित्वेन्दुः क्षीरनिधाविवेत्युपमारागिणा राजेन्दुरिति रूपकमुक्तम् । नचोपमा व्यङ्ग्यार्थाधिक्यवतोः श्लेषरूपकयोः समा स्यात् व्यङ्ग्यार्थस्पर्शाभावात् । तस्मादत्रोपमाऽधिका । "निर्मोकमुक्तिमिव गगनोरगस्य" इत्यादौ रूपकेणैव साम्यस्योक्तत्वादिवप्रयोगेऽधिकपदत्वं दोषः । तथा—

"लक्ष्मीरप्यरविन्दसौधवलभीनिर्यूहपर्यङ्किका"

इत्यत्रारविन्दस्य केनापि साम्येन सौधत्वेन रूपणमस्तु, वलभ्यादीनां तु न किञ्चिद्रूप्यमस्तीत्यधिकपदत्वम् । साध्यवसानलक्षणया किमप्यौन्नत्यादि कल्प्यते चेत्तदपि न चमत्कारीति । तथा—

"या * घर्मभासस्तनयाऽपि शीतलैः
स्वसा यमस्यापि जनस्य जीवनैः ।
कृष्णाऽपि शुद्धेरधिकं विधातृभिः
विहन्तुमंहांसि जलैः पटीयसी ॥"

अत्र नद्याः पयोभिः परमार्थदैक्येऽपि शब्दार्पितनानात्वानुभवाद्विरोधस्य भिन्नाधारत्वं, तच्चासम्भवि, विरोधस्यैकाधारत्वेनोक्तत्वादित्यसम्भवो दोषः ।

---

* घर्मभानोस्तनयापि

क्तयैव दोषजात्या अन्तर्भाविताः न पृथक् प्रतिपादनमर्हन्तीति॥

सम्पूर्णमिदं काव्यलक्षणम् ।

इत्येष मार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत्।
न तद्विचित्रं यदमुत्र सम्यग्विनिर्मिता सङ्घटनैव हेतुः ॥

इति काव्यप्रकाशेऽर्थालङ्कारनिर्णयो नाम
दशम उल्लासः.

॥ समाप्तश्चायं काव्यप्रकाशः ॥

---

"तरङ्गय दृशोऽङ्गणे पततु चित्रमिन्दीवरं"
इत्यत्रोपमानभूतेन्दीवरादेरपकर्षणद्वारेण नेत्रादीनां व्यतिरेको वक्तुं प्रक्रान्तः । स च,

"भवतु च द्विचन्द्रं नभः"
इत्युक्त्या साम्यमात्रप्रतीतौ न निर्व्यूढ इति व्यतिरेके भग्नप्रक्रमत्वम् ।

"भवतु तद्विचन्द्रं नभः" इति तु युक्तम् ।

एवमपि नभोमुखयोर्नान्वयसङ्गतिः ।

"अङ्गणे उदञ्चय मनाङ्मुखं"
इत्युक्त्या मुखोचितमङ्गणं चन्द्राश्रिताद्व्योम्नोऽधिकं तद्द्वारेण चन्द्रान्मुखमधिकमिति तु युक्तम् ।

**इत्येष इति** । एषोऽद्भुतोऽलङ्काराध्वा ।

**विभिन्नोऽपीति** । नानाग्रन्थगतत्वेन पार्थक्येन स्थितोऽपि यदेकरूपो भाति तत्र संघटना विसंस्थुलस्य सुखबोधायैकत्र संग्रहणं

हेतुः । गन्थास्सर्वेऽप्यत्रान्तर्मग्ना इत्यर्थः । अथ चायं ग्रन्थोऽन्येनारब्धोऽपरेण च समर्थितः इति द्विखण्डोऽपि संघटनावशादखण्डायते । सुघटं ह्यलक्ष्यसन्धि स्यादित्यर्थः । श्रीभोजेन जैमिन्युक्तषट्प्रमाणानि सम्भवश्चालङ्कारतयोक्तानि, केषांचिदुक्तेष्वन्तर्भावात्केषांचित् अचमत्कारित्वात्केषांचित्काव्यशरीरत्वाच्च तानि नात्र काव्यालङ्कारतया प्रतिपादितानीति ॥

गुणानपेक्षिणी यस्मिन् अर्थालङ्कारतत्परा ।
प्रौढाऽपि जायते बुद्धिः सङ्केतस्सोऽयमद्भुतः ॥ १ ॥

नानाग्रन्थसमुद्धृतैरसकलैरप्येष संसूचितः
संकेतोऽर्थलवैर्लविष्यति नृणां शङ्के विशङ्कं तमः ।
निष्पन्ना ननु जीर्णशीर्णवसनैर्नीरन्ध्रविच्छित्तिभिः
प्रालेयप्रथितां न मन्थति कथं कन्था व्यथां सर्वथा ॥ २ ॥

श्रीशीलभद्रसूरीणां पट्टे माणिक्यसन्निभाः ।
परमज्योतिषो जाता भरतेश्वरसूरयः ॥३॥

भरतेन परित्यक्तोऽस्मीति कोपं वहन्निव ।
शान्तो रसस्तदधिकं भेजे श्रीभरतेश्वरम् ॥ ४ ॥

पदं तदन्वलंचक्रे वैरस्वामिमुनीश्वरः ।
अनुप्रद्योतनोद्द्योतं दिवमिन्दुमरीचिवत् ॥ ५ ॥

वाञ्छन् सिद्धिवधूं हसन् सितरुचिं कीर्त्या रतिं रोदयन्
पञ्चेषोर्मथनात् दहन् भववनं क्रामन् कषायद्विषः ।
त्रस्यन्नागमलङ्घनात् घनशकृन्मूत्रास्त्यजन् योषितो
बिभ्राणश्शममद्भुतं नवरसीं यस्तुल्यमास्फारयत् ॥ ६ ॥

षट्तर्कीललनाविलासवसतिस्स्फूर्जत्तपोऽहर्पतिः
तत्पट्टोदयचन्द्रमाः समजनि श्रीनेमिचन्द्रप्रभुः ।
निस्सामान्यगुणैर्भुवि प्रसृमरैः प्रालेयशैलोज्ज्वलैः
यश्चक्रे कणभोजिनो मुनिपतिः व्यर्थं मतं सर्वतः ॥ ७ ॥

यत्र प्रातिभशालिनामपि नृणां सञ्चारमातन्वतां
सन्देहैः प्रतिभाकिरीटपटली सद्यस्समुत्तार्यते ।
नीरन्ध्रं विषमप्रमेयविटपिव्रातावकीर्णे सदा
तस्मिंस्तर्कपथे यथेष्टगमना जज्ञे यदीया मतिः ॥ ८ ॥

यस्मात्प्राप्य पृथुप्रसादविशदां विद्योपदेशात्मिकां
पत्रीं मुक्तिकरीमतीव जडतावस्त्वन्विता मन्मतिः ।
विक्षिप्य भ्रमशौल्किकात्कलयतोऽलंचाश्रयं मानसे
मध्येवाङ्मयपत्तनं प्रविशति द्वारि स्थितां तत्क्षणात् ॥ ९ ॥

मदमदनतुषारक्षेपपूषा विभूषा
जिनवदनसरोजावासिवागीश्वरायाः ।
द्युमुखमखिलतर्कग्रन्थपङ्केरुहाणां
तदनु समजनि श्रीसागरेन्दुर्मुनीन्द्रः ॥ १० ॥

माणिक्यचन्द्राचार्येण तदङ्घ्रिकमलालिना ।
काव्यप्रकाशे संकेतः स्वान्योपकृतये कृतः ॥ ११ ॥

रसवक्त्रग्रहाधीशवत्सरे (1216) मासि माधवे ।
काव्ये काव्यप्रकाशस्य सङ्केतोऽयं समर्थितः ॥ १२ ॥

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते
दशमोल्लाससंकेतस्समाप्तः.
समाप्तोऽयं ग्रन्थः.

## अ

## अ

## अ

## आ



## इ



## उ

उ

## औ

## क



## ख

## ग



## च

## च



## ज

ज

## त

## द



## ध



## न

## न



## प

## प

प



ब



भ

भ



म

## म



## य

## य



## र

## र



## ल



## व

## व

## श



## ष



## स

## स

## स

## स



## ह



## क्ष